Scanned 2-6

श्रीमदन्नंभट्टविरचितः-

# तर्कसंग्रहः

श्रीकृष्णवल्लभाचार्य
विरचितया
दीपिकाकिरणावल्या
न्यायबोधिनी-पदकृत्ययोः-
टिप्पण्या च समेतः



व्यास प्रकाशन
डी० १६/१३, मानमन्दिर, वाराणसी

# निवेदनम्

परमेश्वरस्येव निखिलाऽऽगमसञ्चरणशीलत्वात्सर्वशास्त्रोपकारकस्याऽस्य न्यायशास्त्रस्य प्राधान्यं वरिवर्तीह जगत्यामिति सर्वेषां विदितमस्त्येव, एवञ्चेहाऽमुत्र श्वःश्रेयसमधिजिगमिषूणाम्प्रत्येकमेतदधीनतत्त्वज्ञानस्य परमाऽऽवश्यकतामेकतोऽपरतश्चाऽतिदुर्गमाऽन्तन्यायशास्त्राम्बुधेरनुल्लङ्घनीयतां विचिन्तयन्तो विश्वकर्मकल्पाः श्रीमन्तोऽन्नम्भट्टमहोदयाः सतीष्वप्यमितप्रमाणनिबन्धबृहत्तरणिषु छात्रसांयात्रिकान् विनाऽऽयासं शीघ्रम्पारं प्रापिपयिषवः सन्तः सुगममिमं तर्कसंग्रहविमानराजं निर्ममिरे, सत्यप्येवं तदुपकरणकल्पदीपिकाप्रभृतिटीकादुरधिगमयन्त्राणां सरलव्याख्याकुञ्चिकामन्तरेण सञ्चालनादिविज्ञानसम्पन्नानामपि पारं दिदृक्षूणां स्वाऽभिलषिताऽवगमो न स्यादित्यवगम्य समूलदीपिकायाश्चमत्कृतिकरां सुविस्तरां च किरणावलीनामधेयव्याख्या-न्यायबोधिनी-पदकृत्यविषमस्थलीयटिप्पणीकुञ्चिकां निर्माय-करुणाशेवधिविश्वविख्यात-सर्वतन्त्रस्वतन्त्र-नैयायिकधुरन्धर-तर्कतीर्थन्यायाऽऽचार्य-मदीयगुरुवर्य-श्रीमद्-"वामाचरणभट्टाचार्या"ऽङ्घ्रिसरोजेषु समार्पयम्, ते च परमदयालवः कृत्स्नामिमां सुचिन्त्याधिजिगांसमानानामन्तेवासिनामुपकृतये साऽनुग्रहं पर्यैक्षिपत, तदस्य सर्वजनीनस्यैकं संस्करणं वर्षद्वयाऽभ्यन्तरे एव निःशेषतां गतम्, अतोऽस्य द्वितीयमिदं संस्करणं सहर्षं प्रकाश्यते ।

साम्प्रतयँ यद्यपि तर्कसंग्रहो विद्वद्वरेण्यविरचिताभिर्नूतनाऽनेकटीकाभिः समलङ्कृतः समुपलभ्यते नाम, तथापि तदपेक्षयाऽत्र पदकृत्यसंयोजनं टिप्पणीनिवेशष्टीकासारल्यञ्चेत्यधिकं विराजते। किञ्च-सन्ति नाम विभिन्नयन्त्राऽऽलयमुद्रितासु न्यायबोधिनी पदकृत्यदीपिकासु टीकासु न्यूनाऽधिकपाठान्तराणि, तानि च समवाप्य तत्र प्रामाणिकाऽनुभवविषयताङ्गता× पाठास्तावदत्र सुरक्षिताः पाठान्तराणि च संयोजितानि, एवं सत्यपि गुणैकपक्षपातिभिर्भवद्भिरक्षरयोजकाऽनवधानादिना समुत्पन्नत्रुटयस्तावत् कृपया स्वयं समाधेल्मिा इति ॥

अपि च "श्रीस्वामिनारायणवेदान्तसारः, सांख्यकारिकाग्रन्थस्य 'श्रीकृष्णवल्लभाचार्यस्वामिनारायणभाष्यं, सांख्यतत्त्वकौमुद्याः किरणावली टीका चेति ग्रन्था अपि विरचय्य प्रकाशिताः । योगसूत्राणां भाष्यं, न्यायसिद्धान्तमुक्तावल्याः किरणावली टीका, तदन्ये च निबन्धाः, यथासमयं लब्धे साहाय्ये प्रकाशमेष्यन्तीति-प्रकृतमुपसंहरति-

"श्रीकृष्णवल्लभाऽऽचार्य"स्वामिनारायणः ॥

# समर्पणम्

येषां शिष्या विबुधपरिषद्वादिमत्तेभसिंहा—
दृश्यन्ते तान् परमकरुणान् तर्कवित्सार्वभौमान्।
शास्त्रार्थेष्वप्रतिहतधियः सर्वतन्त्रस्वतन्त्रान्
श्रीमद्वामाचरणविबुधान् देशिकान् नौम्यजस्रम् ॥



विश्वविख्यात–नैयायिकधुरन्धर-पण्डितप्रवराणाम्
"श्रीमद्वामाचरणभट्टाऽऽचार्य्य"तर्कतीर्थन्यायाचार्य्याणाम्
पुण्येष्वङ्घ्रिपाथोजेषु
परमप्रेमधारया



काश्यां
कृतिमिमामकिञ्चित्कराम्



सादरं समर्पयति—
"श्रीकृष्णवल्लभाचार्य्यः"––
—श्रीस्वामिनारायणाऽऽश्रितः ॥

❀ श्रीः ❀

# तर्कसंग्रहः

* न्यायबोधिनी-पदकृत्य-दीपिका-किरणावली-व्याख्योपेतः *



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

❀ न्यायबोधिनी ❀

अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

❀ पदकृत्यम् ❀

श्रीगणेशं नमस्कृत्य पार्वतीशंकरं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥
यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं वक्तव्यं विदुषा सदा ॥ २ ॥

* दीपिका *

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥ १ ॥

---

❀ किरणावली ❀

तर्कश्रुतिभिरावेद्यमक्षरात् परतः परम् ।
'स्वामिनारायणं'नत्वा सच्चिदानन्दविग्रहम् ॥ १ ॥
"श्रीकृष्णवल्लभाऽऽचार्य्यः" स्वामिनारायणाऽऽश्रितः ।
तनुते 'दीपिका'तत्त्व-बोधिनीं 'किरणावलीम्' ॥ २ ॥

---

"श्रीकृष्णवल्लभाचार्य्यः" स्वेष्टदेवदयाऽन्वितः ।
टिप्पणीं तनुते 'न्यायबोधिनी-पदकृत्ययोः' ॥ १ ॥

(न्या०) (१) चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवता-नमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति–निधायेति ॥

(प०) विश्वेशं = जगत्कर्त्तारं श्रीसाम्बमूर्तिं, हृदि = मनसि, निधाय = नितरां धारयित्वा, गुरुवन्दनं च विधाय = कृत्वेत्यर्थः ॥ बालेति। अत्राऽधीतव्याकरणका-व्यकोशाऽनधीतन्यायशास्त्रो–बालः। व्यासादावतिव्याप्तिवारणाय–अनधीतन्यायेति। स्तनन्धयेऽतिप्रसक्तिवारणाय–अधीतव्याकरणेति। सुखेति। सुखेन = अनायासेन बोधाय = पदार्थतत्त्वज्ञानायेत्यर्थः। तर्क्यन्ते = प्रमितिविषयीक्रियन्त इति तर्काः = द्रव्यादिपदार्थास्तेषां संग्रहः = संक्षेपेणोद्देश-लक्षण-परीक्षा यस्मिन् स ग्रन्थः। नाममात्रेण वस्तुसंकीर्त्तनमुद्देशः, यथा — 'द्रव्यं गुणा' इति। असाधारणधर्मो— लक्षणम्, यथा —'गन्धवत्त्वं' पृथिव्याः। लक्षितस्य लक्षणं सम्भवति न वेति विचारः—परीक्षा। (२) अत्रोद्देशस्य पक्षज्ञान फलं.-लक्षणस्येतरभेदज्ञानं, परी-क्षाया लक्षणे दोषपरिहारः, इति मन्तव्यम् ॥

---

(कौ०) येषां शिष्या विबुधपारंपद्याद-मत्तेभ-सिंहा—
दृश्यन्ते, तान् परमकरुणान् तर्कवित्सार्वभौमान् ॥
शास्त्रार्थेष्वप्रतिहतधियः सर्वतन्त्रस्वतन्त्रान्।
श्रीमद्रामाचरणविबुधान् देशिकान् नौम्यजस्रम् ॥ ३ ॥
तर्कसंग्रह-सिद्धान्तलक्षणाऽर्थ-सुबोधिनी।
विवृतिर्निर्मिता यैस्ते जयन्ति गुरवोऽनिशम् ॥ ४ ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं कृतं विश्वेश्वरनमस्कारात्मकं मङ्गलं शिष्य-शिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते–**विश्वेश्वरमित्यादिना**। गिरां गुरुं साऽम्बमूर्तिं विश्वेश्वरं प्रणिपत्य शिशुहितां तर्कसंग्रहदीपिकां टीकां कुर्वे–इत्यन्वयः॥ तर्कसंग्रहस्य दीपिकायाश्च रचयिता **श्रीमदन्नंभट्ट** एवेति बोध्यम् ॥ गिरां=निखिलविविधविद्यानाम्। गुरुम्=उपदेष्टारम्। साऽम्बेति=अम्बया सहिता=साऽम्बा, साऽम्बा मूर्तिर्यस्य सः, तम्=साऽम्बम्। अम्बा=जगत्पालनकर्त्री माता लक्ष्मीः। मूर्तिः=दिव्यसाकारविग्रहः। तथा च—लक्ष्मीसहितमित्यर्थः॥ **विश्वेश्वरमिति**। ईष्टे–असौ=ईश्वरः, विश्वस्य-ईश्वरो विश्वेश्वरः, तम्=जगतां सृष्टि स्थिति-लय कर्तारं नारायणमित्यर्थः ॥ प्रणिपत्य=नमस्कृत्य। शिशुहितां=शिशुभ्यो हिता, ताम्=न्यायशास्त्रे प्रवेशाऽभिलाषिणां बालानां सारल्येन

---

(१) 'अयं ग्रन्थो मत्प्रयत्नेन साध्यता'मित्याकारिका या प्रयत्नसाध्यत्वप्रकारिका–इच्छा, सा चिकीर्षा, तद्विषयीभूतस्येत्यर्थः॥ (२) अयं भावः–पदार्थानां लक्षणानि स्वेतरेभ्यो भिन्नताज्ञानार्थं क्रियन्ते अतः–लक्षणं हेतुर्भवति, इतरभेदः साध्यं भवति, उद्देश्यपदार्थस्तु पक्षो भवति, यथा-'पृथिव्यप्तेज'इत्यादिना उद्देशाऽनन्तरं–'गन्धवती पृथिवी' इति लक्षणे कृते सति लक्षणात्मक

(दी०) चिकीर्षितस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ

---

बोधजनकतया हितकारिणीमित्यर्थः ॥ अत्र 'शिशु'पदेन-काव्य-व्याकरण-कोशाद्यध्ययन-सम्पादितसम्यग्ज्ञानः तर्कसंग्रहाऽध्ययनाऽधिकारी ग्रहणधारणपटुर्बालो विवक्षितः, नत्वन्यादृशः ॥ तर्कसंग्रहस्य दीपिका ताम्, तर्कसंग्रहपदार्थानां प्रकाशिकाम् । 'दीपिका'नाम्नीं टीकाम् अहं=अन्नंभट्टः । कुर्वे-इति शेषः ॥

समाचरितस्य 'निधाय हृदी'त्यादिमङ्गलस्य तन्निबन्धनस्य च फलं दर्शयति---चिकीर्षितेत्यादिना प्रतिजानीत'इत्यन्तेन । चिकीर्षितस्येति । कर्तुमिष्टश्चिकीर्षितस्तस्य, कृतिसाध्यत्वेन इच्छाविषयीभूतस्येत्यर्थः । ग्रन्थस्य=तत्तद्वाक्यसमूहात्मकतर्कसंग्रहस्य । निर्विघ्नेति । न विद्यते विघ्नो यत्रेति निर्विघ्नं यथा स्यात्तथा परिसमाप्तिः अर्थः=प्रयोजनं यस्य तत्-निर्विघ्नपरिसमाप्त्यर्थम् । अनेनेदमपि दर्शितम्-'मङ्गलं करणम्, विघ्नध्वंसो-व्यापारः, परिसमाप्तिः-कार्यम्' । तथा च 'समाप्तित्वावच्छिन्नं प्रति मङ्गलत्वावच्छिन्नं कारणमिति कार्यकारणभावः । एवम्-समाप्तिं प्रति विघ्नध्वंसः कारणम् । विघ्नध्वंसं प्रति मङ्गलं कारणम् । मङ्गलजन्यो विघ्नध्वंसस्तज्जन्या च समाप्तिरिति ॥ व्यापारो द्वारम् । द्वारत्वं च 'तज्जन्यत्वे सति तज्जन्यजनकत्वम्' । यथा 'तत्'पदेन मङ्गलं ग्राह्यं, मङ्गलजन्यो विघ्नध्वंसः, पुनर्द्वितीय'तत्'पदेन मङ्गलं ग्राह्यं, मङ्गलजन्या या समाप्तिस्तस्या जनकोऽपि स एव विघ्नध्वंस इति द्वारत्वमुपपन्नम् ॥ समाप्तिर्नाम—चरमवर्णध्वंसः, स च आत्मनि 'स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्व'सम्बन्धेन वर्तते । मङ्गलमत्र—नमस्कारः, स च स्वाऽपकर्षबोधानुकूलव्यापारः, स्वाऽवधिकोत्कर्षवत्तया ज्ञापनं वा, स च स्वानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्तते । तथा च 'स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मवृत्तिसमाप्तिं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन नमस्कारात्मकं मङ्गलं कारण'मिति । एवम्-'स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मवृत्तिसमाप्तिं प्रति विशेषणतासम्बन्धेन आत्मवृत्तिर्विघ्नध्वंसः कारणमिति ।

शिष्टेति । शिष्टाचारेण अनुमितया श्रुत्या बोधिता कर्तव्यता यस्य तदिति विग्रहः । इदानीं पठ्यमानप्रचलितवेदे'समाप्तिकामो मङ्गलमाचरे'दितिश्रुतेरदर्शनात् शिष्टाचारेणाऽनुमिता

---

गन्धवत्त्वहेतुना पृथिवीरूपे पक्षे इतर(जलादि)भेदज्ञानं प्रमितिरूपं जायते-'पृथिवी-स्वेतरजलादि-भिन्ना,- गन्धवत्त्वादिति ॥ एवं गन्धवत्त्वे हेतौ यदि अव्याप्त्यादयो दोषाः स्युस्तदा गन्धवत्त्वं दुष्टहेतुः स्यात्, तद्यथा-यदि पृथिव्यां गन्धवत्त्वम् अव्याप्तिग्रस्तं, तदा पक्षैकदेशे हेत्वभावात् भागाऽसिद्धिः, यदि च वाय्वादौ गन्धवत्त्वं अतिव्याप्तं, तदा साध्याऽभाववद्वृत्तित्वात् व्यभिचारः, यदि पृथिव्यां सर्वत्र गन्धवत्त्वस्य असंभवः, तदा पक्षे हेतोरभावात् स्वरूपाऽसिद्धिः, तादृशदुष्टहेतुना पक्षे इतरभेदाऽनुमितिर्न स्यात्, अतः परीक्षया लक्षणं निर्दुष्टं सद्धेतुरूपं कर्तव्यम्, भवति च गन्धवत्त्वं तादृशं, इत्येवं उद्देशलक्षणपरीक्षाणां फलानि बोध्यानीति ॥

प्रतीजानीते—निधायेति। ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, मङ्गले कृतेऽपि कादम्बर्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात्, मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात् अन्वयव्यतिरेकव्यभिचारादिति चेत्! न, कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः। किरणावल्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः।

---

भवति, 'मङ्गलम्-स्वबोधितकर्तव्यताकत्वसम्बन्धेन श्रुतिमत्,—शिष्टाचारविषयत्वा'दिति। शिष्टा अत्र मङ्गलस्य समाप्तिरूपफलसाधनतांऽशे भ्रान्तिरहिताः, वेदोक्ताऽबाधितप्रामाणिकार्थाऽभ्युपगन्तृत्वे सति वेदविहिताऽकरणप्रत्यवायफलककर्मकारिणो वा, तेषामाचारः=कृतिस्तद्विषयत्वात्। श्रुत्या-'समाप्तिकामो मङ्गलमाचरे'दित्यनया बोधिता कर्तव्यता यस्य तत्। इष्टदेवताया नमस्काररूपं कर्तुमिष्टं मङ्गलम् 'शिष्या अप्येवं ग्रन्थादौ मङ्गलं कुर्यु'रिति शिक्षार्थं ग्रन्थप्रारम्भे—**प्रतिजानीते इति**। 'अव्यवहितोत्तरकालकर्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारवान् मूलकार इत्यर्थः।

मङ्गलं समाप्तिकारणमेव न भवतीति नास्तिकः शङ्कते-**नन्वित्यादिना**। अत्रेदमनुसन्धेयम्-'कारणसत्त्वे कार्यसत्त्व'मन्वयसहचारः। कारणाभावे कार्याऽभावो' व्यतिरेकसहचारः। एवञ्चेत्-'कारणसत्त्वे कार्याऽभावो'ऽन्वयव्यभिचारः। 'कारणाऽभावे कार्यसत्त्वं' व्यतिरेकव्यभिचारः। तत्रान्वयव्यभिचारं दर्शयति-**मङ्गले कृते-इत्यादिना**। कादम्बर्या बाणभट्टेन मङ्गलं कृत्वाऽऽरम्भिताया अपि तन्मरणोत्तरं तत्पुत्रेण तत्समाप्तिः कृता, न तु बाणभट्टेन, अतस्तत्प्रणेतृपुरुषे मंगलसत्त्वेऽपि समाप्त्यभावसत्त्वादन्वयव्यभिचारः। व्यतिरेकव्यभिचारं-दर्शयति-**मङ्गलाऽभावेऽपीत्यादिना**। वैशेषिकदर्शनस्य प्रशस्तपादभाष्यस्य किरणावल्यां टीकायां श्रीमदुदयनाऽऽचार्येण मंगलं न कृतं, दृश्यते च तस्याः समाप्तिः, अतस्तत्र मंगलरूपकारणाऽभावसत्त्वेऽपि समाप्त्यात्मककार्यसत्त्वेन व्यतिरेकव्यभिचारः॥ **व्यभिचारादिति**। तथा च नास्तिकाऽनुमानम्—'मंगलं,-न समाप्तिफलकम्,-स्वाऽधिकरणवृत्त्यभावप्रतियोगिकार्यकत्वे सति स्वाऽभाववद्वृत्तिकार्यकत्वात् (अन्वयव्यतिरेकव्यभिचारशालित्वात्) इति॥ नैयायिकः समाधत्ते-**नेति**। (समसङ्ख्याकं मंगलं समसंख्याकविघ्नध्वंसद्वारा समाप्तिं प्रति कारणम्, बलवत्तरं च मङ्गलं बलवत्तरविघ्नध्वंसद्वारा समाप्तिं प्रति कारणमित्यभिप्रेत्य कादम्बर्यामन्वयव्यभिचारं परिहरति-**कादम्बर्यादाविति**। तथा च कादम्बर्यां बाणभट्टेन यावत्संख्याकं मङ्गलं कृतं तावत्संख्याकस्तस्य विघ्नध्वंसस्तु जात एव, अतो मङ्गलस्य समाप्तिकारणत्वे न काचित् क्षतिः। किन्तु तत्र विघ्नानां बाहुल्यात् मंगलस्य चाऽल्पत्वात् समाप्तिर्न जाता। यद्यधिकं मङ्गलं कृतं भवेत् तदा समाप्तिरपि भवेदितिभावः॥ व्यतिरेकव्यभिचारं परिहरति—**किरणावल्यादाविति**। उदयनाचार्यस्य परमास्तिकत्वेन ग्रन्थाद्बहिरेव मानसिकमङ्गलेनविघ्नध्वंसद्वारा समाप्तिः कल्प्यते, अथवा 'बहिरेवे'त्यस्य-जन्मान्तरे एवेत्यर्थः, तेन नास्तिकेऽपि ग्रन्थकर्तरि जन्मान्तरीयमङ्गलकर्तृत्वं सूपपद्यते,तथा चाऽन्वयव्यतिरेकव्यभिचारौ न स्त इति भावः॥ मङ्गलस्य

ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति चेत् ! न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात् । 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुतेः । तथा हि—'मङ्गलं–वेदबोधितकर्तव्यताकम्–अलौकिकाऽविगीतशिष्टाचारविषयत्वात्, दर्शादिवत् । भोजनादौ व्यभिचारवारणाय-अलौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणाय-अविगीतेति । शिष्टपदं स्पष्टार्थम् । 'न कुर्यान्निष्फलं कर्म' [ न कुर्वीत वृथा

---

श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयितुं शङ्कते–ननु मङ्गलस्येति । तथा च प्रमाणाऽभावे तत्र प्रेक्षावतां प्रवृत्तिर्न स्यादिति भावः । उत्तरयति–नेत्यादिना । शिष्टाचारेण श्रुत्यनुमानं–'मङ्गलम्—स्वबोधितकर्तव्यताकत्वसम्बन्धेन श्रुतिमत्, शिष्टाचारविषयत्वा'दिति । अनेनाऽनुमिता या श्रुतिः सैवात्र शब्दात्मकं प्रमाणमिति । तेन मङ्गले कर्तव्यताविषयकशाब्दबोधो भवतीति ॥ श्रुतेरेवे'–त्येवकारोऽप्यर्थकः तेन 'मङ्गलं–कर्तव्यम्,–समाप्तिफलकत्वा'दित्यनुमानमपि प्रमाणं बोध्यम् । श्रुतेर्विधेयकोट्यन्तर्भावेणाऽपि विधेयत्वमभ्युपगम्याऽनुमानं दर्शयति–तथाहीत्यादिना । अत्र 'मङ्गलं पक्षः, वेदबोधितकर्तव्यताकत्वं स्वरूपसम्बन्धेन साध्यम्, विधेयकोटिप्रविष्टो 'वेदः'–श्रुतिः । अत्र साध्ये यथा विधेयत्वधर्मस्तथा साध्यकोटिप्रविष्टायां श्रुतावपि ( वेदेऽपि ) विधेयत्वधर्मोऽभ्युपगम्यते, श्रुतेरनुमितिपूर्वमसिद्धत्वात् । तथा च श्रुतावप्यनुमितत्वव्यवहार उपपद्यत इति भावः । अलौकिकेत्यादिः स्वरूपसम्बन्धेन हेतुः । अलौकिकोऽविगीतश्च यः शिष्टानामाचारस्तद्विषयत्वादित्यर्थः । अलौकिकत्वम्—'विधिबोधिताऽऽवश्यकप्राप्तिविषयत्वम्' । अविगीतत्वम्—धर्मशास्त्राऽनिषिद्धत्वम् । शिष्टत्वमत्र—फलसाधनतांशे भ्रान्तिरहितत्वम्, वेदोक्ताऽबाधितप्रामाणिकाऽर्थाऽभ्युपगन्तृत्वे सति वेदविहितकर्मकारित्वं वा । आचारः–कृतिः, तस्या वृत्त्यनियामकविषयतासम्बन्धेन हेतुता विवादग्रस्ताऽतरतद्विषयत्वस्य स्वरूपसम्बन्धेन हेतुता । 'दर्शादिव'दिति दृष्टान्तः । यथा दर्शयागेऽलौकिकाऽविगीतशिष्टाचारविषयत्वस्य सत्त्वेन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वेदबोधितकर्तव्यताकत्वमपि तत्र वर्तते तथा मङ्गलेऽपीति बोध्यम् ॥

**भोजनादौ व्यभिचारेति** । हेतुनिष्ठसाध्याऽभाववद्वृत्तित्वं—व्यभिचारः । अलौकिकपदाऽनुपादाने वेदबोधितकर्तव्यताकत्वाऽभाववति भोजनादौ अविगीतशिष्टाचारविषयत्वस्य सत्त्वात् तादृशव्यभिचारदोषदुष्टो हेतुर्भवेत्, अतो'ऽलौकिके'ति । तथा च भोजनं लौकिकशिष्टाचारविषयं नत्वलौकिकशिष्टाचारविषयमिति तत्र न व्यभिचारः । **रात्रिश्राद्धादाविति** । रात्रिश्राद्धे वेद( श्रुति )बोधितकर्तव्यताकत्वरूपसाध्यस्याऽभाववति अलौकिकशिष्टाचारविषयत्वरूपहेतोः सत्त्वाद्व्यभिचारस्तद्वारणाय–अविगीतेति । रात्रिश्राद्धन्तु अनिष्टोत्पादकत्वेन विगीतं–निन्दितमिति तत्र अलौकिकाऽविगीतशिष्टाचारविषयत्वविरहान्न व्यभिचारः ॥

नन्वलौकिकाऽविगीताऽऽचारविषयत्वमेव हेतुरस्तु, अशिष्टाचारविषये तादृशहेतोरसत्त्वेन व्यभिचारविरहात् 'शिष्ट'पदं कथमुपात्तमिति शंकां परिहरति—**शिष्टपदं स्पष्टार्थमिति** । ननु शिष्टपदाऽनुपादाने जलताडनेऽशिष्टाचारविषये व्यभिचारः स्यादित्याशङ्कानिरामाय जलता-

चेष्टाम्' इति मनुः ] इति जलताडनादेरपि निषिद्धत्वादिति। 'तर्क्यन्ते' = प्रतिपाद्यन्ते- इति तर्काः = द्रव्यादिसप्तपदार्थास्तेषां संग्रहः = सङ्क्षेपेण स्वरूपकथनं क्रियत इत्यर्थः। कस्मै प्रयोजनायेत्यत आह—सुखबोधायेति। सुखेन = अनायासेन बोधः = पदार्थ-ज्ञानं तस्मा इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियत इत्यत आह—बालानामिति। तेषामतिविस्तृतत्वाद्बालानां ततः सुखेन बोधो न भवती-त्यर्थमित्यर्थः। ग्रहणधारणपटुर्बालः न तु स्तनन्धयः। किं कृत्वा क्रियत इत्यत आह—निधायेति। 'विश्वेशं' = जगन्नियन्तारं शिवं हृदि 'निधाय' = नितरां स्थाप-यित्वा, सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः। 'गुरूणां' = विद्यागुरूणां 'वन्दनं' = नमस्कारं विधाय = कृत्वेत्यर्थः।

---

ङने हेतोरसत्त्वं स्फुटयति—न कुर्यादित्यादिना। तथा च तत्र न व्यभिचार इति भावः। 'तर्क'पदस्य 'आरोपो'ऽप्यर्थो भवति, स चाऽत्र न ग्राह्यः, किन्तु द्रव्यादिसप्तपदार्थ एव तस्याऽर्थ इति व्युत्पत्त्या प्रदर्शयति—तर्क्यन्ते इति। संग्रहशब्दस्याऽर्थमाह—संक्षेपेणेति। स्वरूपज्ञानाऽनुकूलशब्दप्रयोग इत्यर्थः। एतावताऽनुबन्धचतुष्टयमत्र दर्शितम्, अनुबन्धत्वमत्र—'ग्रन्थाऽध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमिति। द्रव्यादिपदार्थाः—अभिधेयाः। पदार्थतत्त्वाऽव-धारणं—प्रयोजनम्। द्रव्यादिपदार्थग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः—सम्बन्धः। पदार्थतत्त्वाऽव-धारणकामः—अधिकारीति ॥ षष्ठीतत्पुरुषभ्रमवारणायाऽऽह—सुखेनेति ॥ तेषामिति। प्राक्कालीनन्यायवैशेषिकसूत्र—तद्भाष्यादीनामित्यर्थः ॥ ग्रहणेति। शास्त्रविषयस्य ग्रहणधारण-पटुत्वं बालत्वमिति लक्षणम् ॥

**द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्थाः ॥**

(न्या०) अथ पदार्थान्विभजते(१)—द्रव्येति। तत्र सप्तग्रहणं पदार्थत्व द्रव्यादिसप्तान्यतमत्वव्याप्यमि'ति व्याप्तिलाभाय। ननु शक्तिपदार्थस्या-ऽष्टमस्य सत्त्वात्कथं सप्तैवेति ? तथा हि- वह्निसंयुक्तेन्धनादौ सत्यपि, मणिसंयोगे दाहो न जायते, तच्छून्येन तु जायत, अतो मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति (२) कल्प्यते, तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत् ! न। 'मणेः प्रतिबन्धकत्वेन

---

(१) विभजते-इत्यस्य, द्रव्यादिसप्तान्यतमत्वव्याप्यमित्यस्य च व्याख्या किरणावल्यां द्रष्टव्या ॥ (२)'वह्निः—दाहानुकूलशक्तिमान्-दाहजनकत्वात्, इत्यनुमीयते—इत्यर्थः। तथा च मीमांसकमते दाहं प्रति वह्निनिष्ठा शक्तिः कारणम्, मणिश्च प्रतिबन्धकः, एतन्मते प्रतिबन्धकत्वं-कार्याऽनुकूल-धर्मविघटकत्वम्, इति बोध्यम् ॥ न्यायमते तु दाहं प्रति उत्तेजकाऽभावविशिष्टमण्यभावः

मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानाऽसमवधानाभ्यामनन्त-शक्ति-तद्ध्वंस-तत्प्रागभाव-कल्पनाया अन्याय्यत्वात्। तस्मात्सप्तैव पदार्था इति सिद्धम्।

(दी०) पदार्थान्विभजते—द्रव्येति। 'पदस्यार्थः पदार्थ' इति व्युत्पत्त्याऽभिधेयत्वं पदार्थसामान्यलक्षणमिति लभ्यते। नन्वत्र विभागादेव सप्तत्वे लब्धे सप्तग्रहणं किमर्थमिति चेत्! न, अधिकसंख्याव्यवच्छेदार्थत्वात्।

नन्वतिरिक्तः पदार्थः प्रमितो न वा! नाऽऽद्यः, प्रमितस्य निषेधायोगात्।

---

(कि०) मूले द्रव्येति। द्रव्यं च गुणश्च कर्म च सामान्यं च विशेषश्च समवायश्चाऽभावश्चेति विग्रहः॥ **सप्तपदार्था इति**। द्रव्यत्वादिरूपा ये पदार्थविभाजकाः सप्तधर्माः, तदन्यतमवन्तः पदार्था इत्यर्थः॥ नन्वेवं सप्तत्वस्य संख्यात्मकस्य द्रव्यत्वादिवृत्तित्वं न संभवति, गुणादौ गुणाऽन..कारादिति चेन्न। सप्तत्वस्याऽपेक्षाबुद्धिविशेषविषयत्वरूपत्वात्, तस्य संख्यात्मकत्वाऽनभ्युपगमात्। अपेक्षाबुद्धिश्च—'तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यता-निरूपितैकत्वप्रकारताशालिनी बुद्धिः' अनेकानि एकत्वानि प्रकारा यत्र तादृशी बुद्धिरिति यावत्, यथा सप्तपदार्थेषु सप्तधर्मेषु वा—'अयमेकः' 'अयमेकः' 'अयमेक' इत्यादिरूपा सप्तावगाहिनी बुद्धिः' तादृशबुद्धिविषयतैव सप्तत्वमिति। **विभजते**—इति। स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानाऽनुकूलो व्यापारो विभजतेरर्थः। स्वं=विभजतिः, तत्समभिव्याहृतं 'पदार्थ' पदम्, तदर्थतावच्छेदक-व्याप्यमिथोविरुद्धा यावद्धर्मा द्रव्यत्वादिरूपास्तत्प्रकारकज्ञानं 'द्रव्यं गुणः कर्म' त्याद्याकारकं, तदनुकूलव्यापारो हि 'द्रव्यगुणकर्मे'त्यादिशब्द-प्रयोगरूप इति समन्वयो बोध्यः॥ विशेषधर्मप्रकारकजिज्ञासां प्रति सामान्यधर्मज्ञानस्य हेतुत्वेन सामान्यलक्षणकथनाऽनन्तरमेव विशेषविभागो युक्त इत्यभिप्रेत्य 'पदार्थ' शब्दस्य-व्युत्पत्तिद्वारा सामान्यलक्षणमाविष्करोति—**पदस्यार्थ इति**। अर्थः—अभिधेयः॥ **अभिधेयत्वमिति**। तच्च शब्दशक्यत्वम्। अभिधा=ईश्वरेच्छा शक्तिः, तन्निरूपितपदनिष्ठविशेष्यतायाः परम्परया निरूपिता या विषयित्वसम्बन्धावच्छिन्ना प्रकारता तदाश्रयत्वं पदार्थत्वमित्यर्थः॥ 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारिका वा। तथा च—'पदजन्यबोधविषयतात्वावच्छिन्नप्रकारता-निरूपितेश्वरेच्छीयविशेष्यतावत्त्वं'—पदार्थत्वमित्यपि—**केचित्**। अभिधा न ईश्वरेच्छा किन्तु वृत्त्यन्तरमित्यन्ये॥ **विभागादेवेति**। पदार्थत्वाऽवान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेवेत्यर्थः॥ **अधिकसंख्याव्यवच्छेदार्थत्वादिति**। अधिकसंख्यायाः=अष्टत्वादिरूपायाः। व्यवच्छेदार्थत्वात्—निषेधसिद्धिफलकत्वात्॥ शंकते—**नन्विति**। अतिरिक्तः पदार्थः=सप्ताऽतिरिक्तोऽष्टमः पदार्थः॥ **प्रमितो न वेति**। विषयतया प्रमितिमान्, प्रमित्यभाववान् वेत्यर्थः॥ नाऽऽद्यः=

---

कारणम्, उत्तेजकाऽभावविशिष्टमणिस्तु प्रतिबन्धकः, एतन्मते प्रतिबन्धकत्वं—कारणीभूताऽभाव-प्रतियोगित्वरूपम्। तथा च तत्र शक्तिकल्पनमनुचितम् इति भावः॥

नाऽन्त्यः, प्रतियोगिप्रमितिं विना निषेधाऽनुपपत्तेरिति चेत्! न, 'पदार्थत्वं द्रव्यादि-सप्तान्यतमत्वव्याप्यमि' ति व्यवच्छेदार्थत्वात्। ननु-सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम्। एवं च सप्तभिन्नस्याऽप्रसिद्धत्वात्सप्तान्यतमत्वं कथमिति-चेत्! न, द्रव्यादिसप्तान्यतमत्वं द्रव्यादिभेदसप्तकाभाववत्त्वमिति तदर्थत्वात्। एवमग्रेऽपि द्रष्टव्यम्।

---

विधिकोटिस्वीकारो न युक्तः। तस्य प्रमितिविषयस्य वास्तविकसतो निषेधो न संभवतीत्याशयः॥ नाऽन्त्यः=निषेधकोटिस्वीकारो न युक्तः। प्रतियोगिप्रमितिमन्तरेण प्रतिषेधो न संभवति, वस्तुसत एव प्रतिषेधनियमात्। तथा चोभयथाऽपि व्यवच्छेदशब्दस्य निषेधरूपोऽर्थो न संभवतीति भावः॥ उत्तरयति-नेति। तथा च सप्तग्रहणं नाऽधिकसंख्यानिषेधार्थं किन्तु 'पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्य'मिति व्यवच्छेदार्थत्वात्=व्याप्तिरूपनिर्णयलाभार्थत्वादित्याशयः। व्याप्तिश्चात्र पदार्थत्व-व्यापक द्रव्यादिसप्तान्यतमत्वसामानाधिकरण्यरूपा बोध्या॥ द्रव्यादिषु सप्तसु वर्तमानो यो द्रव्यादिसप्तान्यतमत्वरूपो धर्मस्तद्व्याप्यं पदार्थत्वमिति हृदयम्॥ सप्तान्यतमत्वमप्यसंभवीत्याशङ्कते-नन्विति॥ सप्तभिन्नभिन्नत्वमिति। द्रव्यादयो ये सप्तपदार्थास्तेषां भेदकूटः='द्रव्यस्य भेदो गुणस्य भेदः कर्मणो भेदः सामान्यस्य भेदो विशेषस्य भेदः समवायस्य भेदोऽभावस्य भेदश्चेति-सप्तानां भेदानां समुदायः, तद्विशिष्टं यत्, तद्भिन्नत्वमिति वक्तव्यमित्यर्थः, तच्च सप्तभिन्नस्याऽष्टमस्य तादृशसमुदायविशिष्टस्य पदार्थस्याऽप्रसिद्धत्वान्न संभवतीति भावः॥ उत्तरयति-नेति। द्रव्यादिभेदसप्तकाऽभाववत्त्वमिति। द्रव्यादीनां ये सप्तभेदास्तेषां प्रत्येकाऽभाववत्त्वमित्यर्थः। द्रव्यादिभेदानां प्रत्येकप्रसिद्धानां सप्तानां कुत्राऽप्यसत्त्वेन तदभाववत्त्वं सर्वत्र प्रसिद्धमित्याशयः। तद्यथा—द्रव्यं नेति गुणे, गुणो नेति कर्मणि, कर्म नेति सामान्ये' इत्यादिरीत्या सप्त एव भेदाः परस्परं द्रव्यादौ प्रसिद्धाः, तावद्भेदकूटस्तु न' कुत्राऽपि प्रसिद्ध इति तदभाववत्त्वस्य द्रव्यादौ प्रसिद्धिर्बोध्येति॥ एवमग्रेपि='द्रव्यत्वं-पृथिव्यादिनवान्यतमत्वव्याप्यम्' 'गुणत्वं-रूपादिचतुर्विंशत्यन्यतमत्वव्याप्य'मित्यादावपि तथैव संगमनीयम्॥

**तत्र द्रव्याणि-पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥**

(न्या०) द्रव्याणि विभजते—पृथिवीति। नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति? तथा हि—'नीलं तमश्चलती'ति प्रतीतेर्नीलरूपाऽऽश्रयत्वेन क्रियाऽऽश्रयत्वेन च द्रव्यत्वं सिद्धम्। न च—उक्तेषु द्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति—वाच्यम्। तमसो रूपवत्त्वात् आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्त्वान्न पृथिव्यामन्तर्भावः, तमसो निःस्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः, तस्मात्तमसो दशमद्रव्यत्वं

सिद्धमिति चेत् ! न। तमसस्तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाभावात्। न च—(१)विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति—वाच्यम्। तेजसाऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाऽऽश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव एवं कर्मवत्ताप्रतीतिरपि दीपाऽपसरणक्रियाया एव तत्र भानात्॥

(प०) तत्रेति। तत्र=सप्तपदार्थमध्ये इत्यर्थः। 'द्रव्याणि 'नवैवे'त्यन्वयः। एवं 'तत्रे'ति पदं 'चतुर्विंशतिर्गुणा' इत्यादिनाऽप्यन्वेति। द्रव्यत्वजातिमत्त्वं, गुणवत्त्वं, समवायिकारणत्वं, वा द्रव्यसामान्यलक्षणम्॥

(दी०)द्रव्यं विभजते—तत्रेति। 'तत्र'=द्रव्यादिमध्ये 'द्रव्याणि' 'नवैवे'त्यन्वयः। कानि तानीत्यत आह—पृथिवीत्यादि। ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणि ? तथा हि—'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥' 'नीलं तमश्चलती'त्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाऽऽकाशादिपञ्चके-

---

(कि०) मूले-पृथिव्यविति। पृथिवी च आपश्च तेजश्च वायुश्चाऽऽकाशं च कालश्च दिक्चाऽऽत्मा च मनश्चेति द्वन्द्वः॥ द्रव्यमिति। जात्येकवचनम्॥ विभजते-इत्यस्य पूर्वोक्तएवार्थः। तथा च—'सर्वाऽनुगतैकद्रव्यत्वावच्छिन्नपृथिव्यादिधर्मिकपृथिवीत्वाद्यवान्तरधर्मप्रकारकप्रतिपादनानुकूलवर्तमानकालीनकृतिमानेकत्वाश्रयो'मूलकार इति बोधः॥ द्रव्याणि नवैवेति। अत्राऽपि पूर्ववत् नवत्वस्य पृथिवीत्वादावन्वयो बोध्यः, तेन—'द्रव्यत्वं—पृथिवीत्वादिनवोपाध्यन्यतमव्याप्य'मिति लभ्यते। एवकारः—अयोगव्यवच्छेदार्थकः॥

तमो द्रव्यमिति मीमांसकः शंकते—नन्विति। तमसः=अन्धकारस्य॥ तथाहीति। लीलावतीस्थं श्लोकं प्रदर्शयति—तमः खल्विति। 'खलु'शब्दः=निश्चयार्थकः। तमः—चलं=चलनक्रियावत्। नीलं=नीलरूपवत्। पराऽपरविभागवत्=परत्वाऽपरत्व विभागादिगुणवत्। प्रसिद्धानि यानि पृथिव्यादीनि नवद्रव्याणि, तेषां वैधर्म्यात्=तद्वृत्तिगन्धादिशून्यत्ववत्त्वात्। पृथिव्यादिभ्यो नवभ्यो भेत्तुं=भिन्नं दशमं द्रव्यं भवितुमर्हतीति समुदिताऽर्थः। यथा घटस्य क्रियावत्त्वेन रूपवत्त्वेन अनन्तरोत्पन्नघटाऽपेक्षया परत्ववत्त्वेन प्रागुत्पन्नघटाऽपेक्षयाऽपरत्ववत्त्वेन प्रसिद्धजलादिद्रव्यगतविशेषधर्मस्नेहादिशून्यत्वेन च जलाद्यष्टभिन्नद्रव्यत्वं, तथा तमसोऽपि नवद्रव्यभिन्नत्वं बोध्यम्॥ अबाधितप्रतीतिबलादिति। प्रात्यक्षिकप्रतीतिबला-

---

(१) एकस्यैव पक्षस्य साधिका युक्तिः=विनिगमना, तस्या विरहादिति॥

ऽन्तर्भावो रूपवत्त्वात् । अत एव न वायौ, स्पर्शाभावात्, सदागतिमत्त्वाभावाच्च । नापि तेजसि, भास्वररूपाभावादुष्णस्पर्शाभावाच्च । नापि जले, शीतस्पर्शाभावान्नील-रूपाश्रयत्वाच्च । नापि पृथिव्यां, गन्धवत्त्वाभावात्स्पर्शरहितत्वाच्च । तस्मात्तमो दशमद्रव्यमिति चेन्न, तमसस्तेजोऽभावरूपत्वात् । तथा हि—'तमो हि—न रूपि-

---

दित्यर्थः । बाधितप्रतीतेर्न विषयसाधकत्वं 'शुक्तौ—रजतप्रतीतिवदित्यतोऽबाधितप्रतीतिरुक्ता । तथा च 'नीलं तमश्चलती'तिप्रत्ययः—विशेष्यविशेषणयोराधाराऽधेयभावविषयकः,—अबाधित-प्रत्ययत्वात्, 'घटवद्भूतल'मिति प्रत्यक्षप्रत्ययवत्'इत्यनेन क्रियाद्यधिकरणत्वं सिद्ध्यति । ततः—तमसि द्रव्यत्वसाधकाऽनुमानं दर्शयति **नीलरूपाऽऽधारतयेति** । 'तमः—द्रव्यम्,—समवायेन नीलरूपवत्त्वात्,—नीलघटवदिति ॥ **क्रियाऽऽधारतयेति** । 'तमः—द्रव्यम्,—समवायेन क्रियावत्त्वात्, अस्मदादिशरीरवदिति ॥ तस्य पृथिव्यामनन्तर्भावं दर्शयति—**तत्रेति** । आकाशादि-पञ्चके=आकाशकालदिगात्ममनःसु । 'तमः—आकाशादिप्रत्येकपञ्चाऽनन्तर्भूतम्,—समवायेन रूपवत्त्वात्, यथा घट इति । आकाशादिपञ्चकस्य रूपाऽनधिकरणत्वादिति भावः ॥ अत एव=कृष्णरूपवत्त्वादेव । तथा च—'तमः—वाय्वनन्तर्भूतम्,—समवायेन रूपवत्त्वात्, घटवदिति ॥ कार्याऽभावहेतुकानुमानं दर्शयति—**स्पर्शाऽभावादिति** । तथा च—'तमः—वाय्वनन्तर्भूतम्,—स्पर्शाऽभावात्, आकाशवदि'ति । निरवच्छिन्नस्वरूपसम्बन्धेन स्पर्शाऽभावो हेतुर्बोध्यः । अयं विषमव्याप्तो हेतुः, विषमव्याप्तत्वं—स्वव्यापकसाध्याऽव्यापकत्वम्, स्वं=हेतुः ॥ समव्याप्तहेतु-माह—**सदागतिमत्त्वाऽभावाच्चेति** । समव्याप्तत्वं=स्वव्यापकसाध्यव्यापकत्वम्, तथा च—'तमः—वाय्वनन्तर्भूतम्,—सदागतिमत्त्वाऽभावात्, घटवदि'त्यनुमानात्, वाय्वनन्तर्भूतत्वसिद्धि-रिति भावः ॥ **नाऽपि तेजसीति** । 'तमः—तेजोऽनन्तर्भूतम्,—भास्वररूपाऽभावात्, घटवदिति ॥ हेत्वन्तरमाह—**उष्णस्पर्शेति** । 'तमः—तेजोऽनन्तर्भूतम्, उष्णस्पर्शाऽभावात्, घटवदिति ॥ **नाऽपि जले-इति** । 'तमः—जलाऽनन्तर्भूतम्,—शीतस्पर्शाऽभावात्, घटवत् ॥ समवायेन हेतुमाह—**नीलरूपेति** । 'तमः—जलानन्तर्भूतम्,—नीलरूपवत्त्वात्, नीलघटवदिति । जलस्याऽभास्वरशुक्लरूपमिति सिद्धान्तादिति भावः ॥ **नाऽपि पृथिव्यामिति** । तमः—पृथिव्य-नन्तर्भूतम्, गन्धाधिकरणत्वाऽभावात्, सुवर्णवत् ॥ पृथिव्यप्तेजोवायुष्वनन्तर्भावसाधकमेकहेतुं दर्शयति—**स्पर्शरहितत्वादिति** । 'तमः—पृथिव्यप्तेजोवाय्वनन्तर्भूतम्, स्पर्शशून्यत्वात्, गगनवदिति । यद्यपि 'रूपवत्त्वस्पर्शशून्यत्वरूपहेतुद्वयेनैव गतार्थता भवति तथापि शिष्यबुद्धिवैशद्यार्थं विभिन्नहेतुप्रदर्शनम् बोध्यम् ॥ उपसंहरति—**तस्मादिति** । नवद्रव्येष्वनन्तर्भावादित्यर्थः ॥

नैयायिकः समाधत्ते—**नेति** । तमसस्तेजोऽभावस्वरूपत्वात्=तेजोऽभावान्तर्गतत्वात् ॥ **तथा-हीति । तम इति** । न रूपि द्रव्यम्=न रूपवद्द्रव्यम् । **आलोकेति** । आलोकः=प्रकाशः, तन्निरपेक्षं यच्चक्षुस्तद्ग्राह्यत्वादित्यर्थः । तादृशचक्षुर्जन्यलौकिकप्रत्यक्षविषयत्वादिति तु फलितं, आलोकाऽभावो दृष्टान्तः, आलोकाऽभावो यथा प्रकाशशून्यदेशे ।प्रकाशं विनैव चक्षुषा गृह्यते

द्रव्यं,–आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात्। तस्मात्प्रौढप्रकाशकतेजःसामान्याभावस्तमः। तत्र 'नीलं तमश्चलती' तिप्रत्ययो भ्रमः। अतो नव द्रव्याणीति सिद्धम् ॥

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम्। लक्ष्यैकदेशावृत्तित्वम-

---

अत एव स न रूपवद्द्रव्यात्मकः, तथा तमोऽपि प्रकाशरहितदेशे प्रकाशं विनैव चक्षुषा गृह्यतेऽतः तमोऽपि न रूपवद्द्रव्यम्। रूपवद्द्रव्यप्रत्यक्षे त्वालोकसहकृतचक्षुषः कारणत्वनियमात्, नचाऽत्र तथेति भावः ॥ 'चक्षुर्ग्राह्यत्वा'दित्यस्यैव हेतुत्वे घटादौ साध्याऽभाववति तादृशहेतोः सत्त्वेन व्यभिचारः स्यात् तद्वारणाय—आलोकाऽसहकृतेति ॥ **रूपिद्रव्येत्यादि।** रूपवद्द्रव्यस्य घटादेश्चाक्षुपप्रत्यक्षप्रमायां आलोकस्य=आलोकसंयोगस्य समवायसम्बन्धेन कारणत्वादित्यर्थः ॥ **प्रौढेति।** प्रौढप्रकाशकं यत् तेजस्तस्य सामान्याऽभावः एव तम इत्यर्थः ॥ ननु तमसस्तादृशतेजोऽभावात्मकत्वे तत्र रूपवत्ताप्रतीतिः कर्मवत्ताप्रतीतिश्च कथं जायते? अभावे रूपकर्मणोरभावादित्यत आह—**तत्र नीलमिति।** तमसि रूपवत्त्वप्रतीतिः कर्मवत्त्वप्रतीतिश्च भ्रान्तिरेव, गगनमण्डले नीलिमाभ्रान्तिवत्, दीपाऽपसरणक्रियाया एव तत्र भानादिति भावः। **द्रव्यत्वेति।** समवायसम्बन्धेन द्रव्यत्वजातिमत्त्वं द्रव्यस्य लक्षणम्। द्रव्यत्वजातिसिद्धिस्तु–अनुमानेन अत्राऽयं नियमः–'समवायेन कार्यं प्रति तादात्म्यसम्बन्धेन द्रव्यं कारणम्' तथा च–'कार्यसमवायिकारणता—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटगतकार्यतानिरूपितकपालनिष्ठकारणतावत्। अथवा—'संयोगसमवायिकारणता—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्। अथवा—'विभागसमवायिकारणता—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्। अत्र सर्वत्र साध्यान्तर्गतः किञ्चिद्धर्मो जातित्वेन द्रव्यत्वमेव सिद्ध्यति ॥ आकाशसमवेताऽसमवेतत्वे सत्याकाशसमवेतजातिर्द्रव्यत्वम्। सत्तावारणाय 'सत्य'न्तम्, अभावादिवारणाय विशेष्यदलं। पृथिवीत्वादिवारणाय—'आकाशे' ति। परमाण्वाकाशसंयोगवारणाय—'जाति' पदम् ॥ गुणवत्त्वव्यापकसत्ताभिन्नजातिर्वा द्रव्यत्वम्। पृथिवीत्वादिवारणाय—'व्यापकत्व' निवेशः ॥ ननु द्रव्यत्वजातिमत्त्वस्य लक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोरभिन्नत्वे सति 'परार्थानुमितिं प्रति शाब्दबोधद्वारा पञ्चावयववाक्यस्य यत् प्रयोजकत्वं' तन्नोपपद्येत, यतः'–द्रव्यं—स्वेतरभिन्नं—द्रव्यत्वादि' त्याकारकद्रव्यपक्षकेतरभेदानुमापकद्रव्यत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'द्रव्यत्ववद्द्रव्य' मित्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानप्रसंगेन अनुमितिविलोपः स्यात्—इत्यतो लक्षणान्तरमाह—**गुणवत्त्वमिति।** समवायेन गुणवत्त्वं द्रव्यत्वम्; 'समवायेने' त्यनुपादाने गुणवत्त्वस्य कालिकसम्बन्धेन गुणादावतिव्याप्तिरतस्तद्वारणाय–समवायेनेति। ननु तथापि 'उत्पन्नं सत् द्रव्यं क्षणं निर्गुणं तिष्ठती' ति नियमादुत्पत्तिकालीने घटादौ समवायेन गुणाऽसत्त्वादव्याप्तिरिति चेन्न। समवायेन गुणवद्वृत्तिसत्ताभिन्नसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षणान्न दोषः। समवायसम्बन्धावच्छिन्नकार्यतानिरूपित–तादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकजातिमत्त्वं

व्याप्तिः, यथा गोः—कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः, यथा गोः—शृङ्गित्वम्। लक्ष्यमात्राऽवर्तनमसम्भवः, यथा गोरेकशफत्वम्। एतद्दूषणत्रयरहितो धर्मो-लक्षणम्, यथा गोः—सास्नादिमत्त्वम्, स एवाऽसाधारणधर्म इत्युच्यते। लक्ष्यता-

---

वा द्रव्यसामान्यलक्षणम्। गुणत्वकर्मत्वभिन्नत्वे सति सत्तासाक्षाद्व्याप्या या जातिस्तद्वत्त्वं वा तत्॥ दूषणत्रयरहितधर्मस्यैव लक्षणत्वेन लक्षणज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न संभवति, दूषणत्रयरहितत्वज्ञानं च दूषणत्रयात्मकप्रतियोगिज्ञानं विना न संभवतीत्यतो दूषणत्रयज्ञानार्थं दूषणत्रयं प्रदर्शयति—लक्ष्यैकेति। लक्ष्यीभूता यावन्तो गावः, तदेकदेशः =शुक्लगौः, तत्र 'कपिलरूपवत्त्वात्मक'लक्षणं नास्तीत्यव्याप्तिग्रस्तत्वान्न गोः 'कपिल-रूपवत्त्वं' लक्षणमिति भावः। अव्याप्तिः=लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभाव-प्रतियोगित्वम्, यथा लक्ष्यतावच्छेदकगोत्वसमानाधिकरणो यः 'कपिलरूपवत्त्वं नास्ती'-त्यभावस्तत्प्रतियोगित्वं कपिलरूपवत्त्वं वर्तमानमिति 'कपिलरूपवत्त्व'मव्याप्तम्॥ **अल-क्ष्येति।** 'यावल्लक्ष्यवृत्तित्वे सति' इति पूरणीयम्॥ अलक्ष्ये=लक्ष्यभिन्ने महिषादावपि वृत्ति-त्वात् शृङ्गित्वं न गोर्लक्षणमित्याशयः॥ अतिव्याप्तिः=लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्, यथा लक्ष्यतावच्छेदकगोत्वसमानाधि-करणत्वे सति लक्ष्यतावच्छेदकगोत्वावच्छिन्नप्रतियोगिताको 'गौर्न' इत्याकारकभेदो महिषादिवृत्ति-स्तत्सामानाधिकरण्यं शृङ्गित्वे वर्तमानमिति 'शृङ्गित्वम'तिव्याप्तम्॥ **लक्ष्यमात्रेति।** लक्ष्यताव-च्छेदकावच्छिन्ने यावति लक्ष्येऽवर्तमानत्वेन गोरेकशफवत्त्वं न लक्षणमिति भावः॥ असंभवो नाम=लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्, यथा लक्ष्यतावच्छेदकगोत्वव्यापकीभूतो य 'एकशफवत्त्वाभाव'स्तत्प्रतियोगित्वमेकशफवत्त्वे—इत्येकशफवत्त्वं असंभवदोषग्रस्तम्॥ **एतद्-दूषणेति।** अव्याप्तिरहितत्वे सति अतिव्याप्तिरहितत्वे सति असंभवरहितधर्मत्वं लक्षणत्वमित्यर्थः। भवति च गोः सास्नादिमत्त्वं लक्षणं, तादृशदूषणत्रयरहितत्वादिति भावः॥ **सास्नादीत्यादिना**—असाधारणधर्मान्तरपरिग्रहः॥ एते दोषा असाधारणत्वस्य विघटकाः। अतिव्याप्तेः लक्ष्यतावच्छेदक-व्याप्यत्वस्य, इतरयोश्च—लक्ष्यतावच्छेदक—व्यापकत्वस्य विघटकत्वात्। एतेषां दूषकताबीजं तु 'गौः—इतरभिन्ना,—शृङ्गित्वा'दितीतरभेदाऽनुमापकेऽतिव्याप्तसाधने 'साध्याभाववद्वृत्तित्वाऽऽत्मक-व्यभिचारः, अव्याप्तिमति असंभववति च तादृशे साधने भागाऽसिद्धिस्वरूपाऽसिद्धी। **स एवेति।** दूषणत्रयरहित एवेत्यर्थः॥ लक्षणस्य लक्षणं—'दूषणत्रयरहितधर्मत्वम्', तदेवाऽसाधारण-धर्मत्वमित्यसाधारणत्वं निर्वक्ति—**लक्ष्यतावच्छेदकेति।** समनियतत्वं—स्व (लक्षण) समानाधिकरण-भेदप्रतियोगितानवच्छेदको यो धर्मः (लक्ष्यतावच्छेदकरूपः) तत्समानाधिकरणभेदप्रतियोगिताऽन-वच्छेदकत्वम्, यथा—सास्नावत्त्वसमानाधिकरण—घटादिभेदप्रतियोगितानवच्छेदकगोत्वसमानाऽ-धिकरणकपिलगोभेदप्रतियोगिताऽनवच्छेदकत्वं सास्नावत्त्वे वर्तते, इति तस्याऽसाधारणधर्मत्व-मुपपन्नम्। कपिलरूपवत्त्वस्य तु तादृशलक्ष्यतावच्छेदकगोत्वसमानाधिकरणभेदप्रतियोगिता-वच्छेदकत्वात् न गोत्वसमनियतत्वम्, एवं गोत्वस्य—महिषे यो शृङ्गित्वसमानाधिकरण-

वच्छेदकसमनियतत्वमसाधारणत्वम् । व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय–तद्भिन्नत्वं धर्मविशेषणं देयम् । व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम् । व्यावृत्तेरपि व्यवहारसाधनत्वात् । ननु गुणवत्त्वं न द्रव्य-

---

गोभेदस्तत्प्रतियोगितावच्छेदकत्वात् अश्वे च यः एकशफत्वसमानाधिकरणगोभेदस्तत्प्रतियोगितावच्छेदकत्वात्, न गोत्वसमनियतत्वं शृङ्गित्वे एकशफत्वे चेति तयोर्न लक्षणत्वमिति । केचित्तु—समनियतत्वं—'अन्यूनाऽनतिरिक्तवृत्तित्वम्' 'व्यापकत्वे सति व्याप्यत्वमिति यावत् लक्ष्यतावच्छेदकव्यापकत्वं च—लक्षणे लक्ष्यतावच्छेदकगोत्ववद्गोनिष्ठाऽत्यन्ताऽभावप्रतियोगितावच्छेदकोदासीनघटत्वादिधर्मभिन्नत्वम्, तच्चाऽस्ति गोरसाधारणे सास्नादिमत्त्वे ॥ लक्ष्यतावच्छेदकव्याप्यत्वं च—लक्षणस्य लक्ष्येतराऽवृत्तित्वम्, तथा च–गोर्लक्षणे गोत्वव्यापके सास्नादिमत्त्वे गवेतरमहिषाद्यवृत्तित्वस्याऽपि सत्त्वात् असाधारणत्वसमन्वयः । धर्मपदं—लक्षणताघटकसम्बन्धेन व्यापकत्वादितात्पर्यग्राहकमिति भावः

ननु—लक्ष्यतावच्छेदकसमनियतत्वस्य लक्षणलक्षणत्वे 'लक्षणस्य व्यावृत्तिरेव प्रयोजन'मिति मते व्यावर्तकस्यैव -'लक्ष्यतावच्छेदकसमनियतत्व'रूपलक्षण-लक्षण लक्ष्यतया व्यावृत्त्यादौ अतिव्याप्तिरतस्तां निराकरोति—व्यावर्तकस्यैवेति । इतरभेदानुमितिजनकतावच्छेदकविषयताश्रयस्यैवेत्यर्थः । लक्षणत्वे=गवादिलक्षणत्वे, उक्तलक्षणलक्षणस्य लक्ष्यत्वे इत्यर्थः । व्यावृत्तौ=गवादीतरभेदे गोत्वरूपलक्ष्यतावच्छेदकसमनियतत्वस्य, प्रमेयत्वादौ पदार्थत्वसमनियतत्वस्य च सत्त्वेनाऽतिव्याप्तिवारणाय व्यावृत्तिभिन्नत्वं प्रमेयत्वादिभिन्नत्वं च लक्षणलक्षणे धर्मविशेषणं देयमिति शब्दार्थः । भावस्तु लक्ष्यतावच्छेदकसमनियतत्वं लक्षणलक्षणं, तच्च यथा लक्ष्यतावच्छेदकगोत्वसमनियते सास्नादिमत्त्वे वर्तते, तथा गवादीतरभेदेऽपि वर्तते, गवादीतरभेद एव व्यावृत्तिरत्र, यतः 'लक्षणस्य व्यावृत्तिरेव प्रयोजन'मिति मते व्यावर्तकं—लक्षणमिति पर्याय एव, व्यावर्तकं—व्यावृत्तिज्ञानप्रयोजकं, इतरभेदानुमितिप्रयोजकमिति यावत्, तथा च इतरभेदानुमितिजनकं लक्ष्यम्, इतरभेदस्तु व्यावृत्तिपदार्थो न लक्ष्यः, तत्राऽतिव्याप्तिरिति तद्वारणाय—व्यावृत्तिभिन्नो यो लक्ष्यतावच्छेदकसमनियतो धर्मः स एव लक्षणलक्षणम्, तेन–इतरभेदात्मकव्यावृत्तौ नातिव्याप्तिः । एवं लक्ष्यतावच्छेदक'पदार्थत्व'समनियतत्वं पदार्थस्याऽलक्षणभूते लक्षणलक्षणस्याऽलक्ष्ये प्रमेयत्वेऽप्यस्तीति तत्राऽतिव्याप्तिस्तद्वारणाय–प्रमेयत्वादिभिन्नत्वमपि धर्मे देयमिति । इदमपि बोध्यम्–लक्ष्यतावच्छेदकगोत्वादिसमनियतत्वं गोत्वेऽपि वर्तते गोत्वं तु न गोर्लक्षणम्, तत्राऽतिव्याप्तिवारणाय लक्ष्यतावच्छेदकभिन्नत्वमपि धर्मे निवेशनीयम् । तथाच 'लक्ष्यतावच्छेदकभिन्नत्वे सति व्यावृत्तिभिन्नत्वे सति प्रमेयत्वादिभिन्नत्वे च सति लक्ष्यतावच्छेदकसमनियतत्वे सति धर्मत्व'मिति लक्षणलक्षणं पर्यवसन्नम् ॥ व्यवहारस्येति । अयं भावः–यदि व्यवहारोऽपि लक्षणस्य प्रयोजनं, अर्थात् 'व्यवहारसाधनं लक्षणं, तदा यद् यद् व्यवहारसाधनं व्यावर्तकं वा तत् तत् सर्वमेव लक्षणलक्षणस्य लक्ष्यम् । एवं च यथा गवादिव्यवहारसाधनं व्यावर्तकं सास्ना-

सामान्यलक्षणम्, आद्यक्षणे उत्पन्नविनष्टद्रव्ये चाव्याप्तेरिति चेन्न, गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात् । नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न, एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् ॥

---

दिमत्त्वं, तथा गवादीतरभेदोऽपि व्यवहारसाधनं, गोत्वमपि प्रमेयत्वमपि च व्यवहार-साधनं, तथा च-लक्षणं,—व्यावृत्तिः,-लक्ष्यतावच्छेदकम्,-प्रमेयत्वादिकं च-लक्षणलक्ष्यस्य लक्ष्यमेवेति, तत्राऽतिव्याप्तिं कल्पयित्वा तद्वारणाय तद्भिन्नत्वनिवेशादिप्रयत्नो विफल इति ॥

**ननु गुणवत्त्वमिति** । समवायेनेति शेषः । आद्यक्षणे=उत्पत्तिक्षणावच्छिन्ने द्रव्ये, गुणाऽभावात्=गुणे लक्ष्यतावच्छेदकद्रव्यत्वसमनियतत्वाभावात् अव्याप्ति । ननु गुणवत्त्वोपलक्षितत्वमेव द्रव्यलक्षणं साधीय इत्यत आह—'उत्पन्नविनष्टद्रव्ये-इति । यत्राऽवयवे प्रथमं द्रव्यारम्भकसंयोगजनिका क्रिया, ततो द्वितीयक्षणेऽवयवसंयोगः, ततस्तृतीयक्षणे द्रव्योत्पत्तिः अवयवान्तरेऽवयवसंयोगनाशजनिका क्रिया च, ततश्चतुर्थक्षणेऽवयवसंयोगनाशो द्रव्यनाशश्च, ( प्रतियोगितासंसर्गेण तृतीयक्षणे प्रतियोगिभूते संयोगे तन्नाशस्य कारणस्य सत्त्वात् चतुर्थक्षणे घटनाशो भवतीति ) तादृशे स्थितिरहिते उत्पन्नविनष्टे द्रव्ये गुणवत्त्वं असम्भवीति भावः । उत्तरयति-नेति ॥ **गुणसमानेति** । समवायसम्बन्धेन गुणस्याऽधिकरणं यत् गगनादिकं तत्र वर्तमाना सत्ताभिन्ना च या द्रव्यत्वादिरूपा जतिस्तद्वत्त्वमित्यर्थः । सत्ताभिन्नगुणत्वमादाय गुणेऽतिव्याप्तिवारणाय—गुणसमानाऽधिकरणेति । सत्तामादाय गुणादावतिव्याप्तिवारणाय—सत्ताभिन्नेति । द्रव्यगुणाऽन्यतरत्वमादाय गुणेऽतिव्याप्तिवारणाय—जातीति ॥ **नन्वेवमपीति** । उक्तविवक्षयाऽव्याप्तिवारणेऽपीत्यर्थः ॥ 'एकं रूपं रसात् पृथगि'ति प्रतीत्या तत्र—एकत्वपृथक्त्वादिगुणसमानाधिकरणसत्ताभिन्नगुणत्वजातिमत्त्वस्य रूपे सत्त्वादतिव्याप्तिरिति भावः ॥ परिहरति—**एकार्थसमवायादेवेति** । एकस्मिन्नर्थे=अधिकरणे समवायेन द्वयोः=एकत्व-रूपयोः सत्त्वेन तादृशः—'एकं रूप'मिति व्यवहारो भवतीति न समवायघटितगुणसामानाधिकरण्यघटितलक्षणस्य तत्राऽतिव्याप्तिः स्वाऽधिकरणाऽनुयोगिकसमवायवत्त्वात्मकैकार्थसमवायसम्बन्धेनैव एकत्वादिमत्त्वस्य रूपादावभ्युपगमादिति भावः ।

**रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-संस्काराश्चतुर्विंशतिर्गुणाः ॥**

( दी० ) गुणं विभजते—रूपेति । द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः.

गुणत्वजातिमान्वा । लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात् कथं चतुर्विंशति-गुणा इति चेत् ! न, लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोग-विशेषरूपत्वात् ॥

---

(कि०) मूले रूपरसेत्यादिः । रूपं च रसश्च गन्धश्च स्पर्शश्च संख्या च परिमाणं च पृथक्त्वं च संयोगश्च विभागश्च परत्वं चाऽपरत्वं च गुरुत्वं च द्रवत्वं च स्नेहश्च शब्दश्च बुद्धिश्च सुखं च दुःखं चेच्छा च द्वेषश्च प्रयत्नश्च धर्मश्चाऽधर्मश्च संस्कारश्चेति चतुर्विंशतिगुणाः ॥ 'गुणत्वं—रूपादिचतुर्विंशत्यन्यतमत्वव्याप्यमिति । चतुर्विंशत्संख्या अपेक्षाबुद्धिविशेषविषयत्वरूपा, गुणे गुणाऽनङ्गीकारात् ॥ गुणं विभजते—इति । गुणमिति जात्येकवचनम् । एकत्वविशिष्ट-गुणत्वाऽवान्तररूपत्वादिजात्यवच्छिन्न-धर्मिप्रतिपादनाऽनुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ द्रव्यकर्मेति । गुण—इति लक्ष्यम् । द्रव्यकर्मभिन्ने समवायेन वर्तमाना या जातिस्तद्वत्त्वं गुणत्वमिति लक्षणम्, अत्र समवायेन तादृशवृत्तितालाभाय—जातिपदम्, अन्यथा कालिक-सम्बन्धेन तादृशगुणत्ववति ध्वंसादावतिव्याप्तिः स्यादिति ध्येयम् । सत्ताजातिमादाय द्रव्ये कर्मणि चाऽतिव्याप्तिवारणाय—द्रव्यकर्मभिन्ने—इति ॥ उक्तलक्षणस्य भेदघटिततया गौरवाल्लघु-लक्षणमाह—गुणत्वेति । समवायेन गुणत्वजातिमत्त्वमित्यर्थः ॥ न चैवं लक्षणलक्ष्यताव-च्छेदकयोरैक्यापत्तिरिति वाच्यम् । स्वार्थाऽनुमाने तदैक्यस्याऽकिञ्चित्करत्वात् । यद्यपि परार्था-ऽनुमानस्थले लक्षणलक्ष्यतावच्छेदकयोरैक्ये सति' शाब्दबोधद्वारा पञ्चावयववाक्यस्य यत् परार्थाऽ-ऽनुमितिप्रयोजकत्वं' तन्नोपपद्येत, यतः 'गुणः—स्वेतरभिन्नः—गुणत्वादि'त्याकारक-गुणपक्षके-तरभेदानुमापकगुणत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'गुणत्ववान् गुण'— इत्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानप्रसंगापत्तिः स्यात् । तथापि उपनयात् पक्षधर्मतामात्रभानवादिमते नैतल्ल-क्षणम्, अपि तु उपनयात् 'साध्यव्याप्यहेतोः पक्षे' बोधवादिमते एवैतल्लक्षणं, 'दण्डवान् रक्तदण्डवान्' इत्याकारकबोधस्य सर्वाऽनुभवसिद्धतया 'इतरभेदव्यापकगुणत्ववान् गुण', इति बोधस्य सर्वसंमतत्वसंभवात्, इति ध्येयम् । कर्मान्यत्वे सति द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्न-जातिमत्त्वं वा गुणसामान्यलक्षणं बोध्यम् । गुणत्वजातिसिद्धिरनुमानेन—यथा 'द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा,—किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वात्' रूपत्वादेः सत्ताया वा न्यूनाऽतिरिक्तदेशवृत्तित्वान्नाऽवच्छेदकत्वम्, अतश्चतुर्विंशत्यनुगतं' किञ्चिदवच्छेदकं वाच्यं, तदेव गुणत्वमिति ॥ असमवेताऽसमवेत—नित्यसमवेतसत्तासाक्षाद्व्याप्यजातिः—गुणत्वम् । असमवेताः—परमाणवस्तत्राऽसमवेतत्वकथनेन द्रव्यत्वसत्त्वयोर्वारणम्, 'नित्यसमवेतत्व' कथनेन कर्मत्वस्य वारणम्, सत्तासाक्षाद्व्याप्यत्वकथनेन रूपत्वरसत्वादिवारणमिति । लघुत्वादीनामधिकगुणत्वं शङ्कते—लघुत्वेति ॥ समाधत्ते—लघुत्वस्येति । लघुत्वादीनां क्लृप्तेष्वेवाऽन्तर्भावो न्याय्य इति भावः ॥

उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ॥

(दी०) कर्म विभजते—उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म, कर्मत्वजातिमद् वा। ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेत्! न, भ्रमणादीनामपि गमनेऽन्तर्भावात् न पञ्चत्वविरोधः ॥

---

(कि०) मूले—उत्क्षेपणेति। उत्क्षेपणं चाऽपक्षेपणं चाऽऽकुंचनं च प्रसारणं च गमनं चेति पञ्चकर्माणि। पञ्चपदं—'कर्मत्वं–उत्क्षेपणादिपञ्चाऽन्यतमत्वव्याप्यमिति'—व्याप्तिलाभाय। पञ्चत्वसंख्या–अत्र अपेक्षाबुद्धिविषयत्वरूपा ॥ कर्म विभजते–इति। जात्यभिप्रायेणैकवचनम्। एकत्वविशिष्टकर्मत्वाऽवान्तरोत्क्षेपणत्वादिजात्यवच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ संयोगभिन्नत्वे-इति। 'कर्म' इति लक्ष्यम्। शेषं लक्षणम्। विभिन्ने परमाणुद्वयेऽदृष्टवशात् क्रिया जायते, तया द्व्यणुकस्य द्रव्यस्य कारणीभूतः परमाणुद्वयसंयोगो भवति, तस्याऽसमवायिकारणं सा क्रियैवेति भावः ॥ शरीरवृक्षाद्यवयविद्वयसंयोगस्याऽसमवायिकारणं करवृक्षसंयोगस्तत्राऽतिव्याप्तिवारणाय–संयोगभिन्नत्वे सतीति। रूपादावतिव्याप्तिवारणाय–संयोगेति। घटादावतिव्याप्तिवारणाय–संयोगाऽसमवायिकारणमिति। 'असमवायि'पदमपि समवायिकारणघटादावतिव्याप्तिवारणाय बोध्यम्। अस्य लक्षणस्य भेदघटितत्वेन गौरवाल्लघुलक्षणमाह—कर्मत्वजातिमद्वेति। समवायेन कर्मत्वजातिमत्त्वमिति बोध्यम्, अन्यथा कालिकेन घटादावपि कर्मत्वजातेः सत्त्वादतिव्याप्तिः स्यात्। अत्र लक्षणलक्ष्यतानच्छेदकयोरैक्यापत्तिः पूर्ववद्वारणीयेति ध्येयम्. द्रव्यत्वगुणत्वभिन्नत्वे सति सत्तासाक्षाद्व्याप्यजातिमत्त्वमपि कर्मणो लक्षणं ज्ञातव्यम्। कर्मत्वजातिस्तु 'चलती'तिप्रत्यक्षप्रतीतिसिद्धा ॥ नित्याऽवृत्तिसत्तासाक्षाद्व्याप्यजातिर्वा कर्मत्वम्। 'नित्याऽवृत्तित्व'पदेन द्रव्यत्व-गुणत्व-सत्तानां वारणम्। 'सत्तासाक्षाद्व्याप्यत्व'कथनेन–उत्क्षेपणत्वादीनां वारणम्। 'जाति'कथनेन–जन्यगुण–कर्मान्यतरत्ववारणम् ॥ भ्रमणं रेचनं स्यन्दनमूर्ध्वज्वलनं तिर्यग्गमनं चाऽतिरिक्तं कर्म वर्तते, तत् कथं पञ्चेति शङ्कते–ननु भ्रमणादेरिति ॥ भ्रमणं=प्रसिद्धमश्वादेश्चक्राकारधावनम्। रेचनं=पक्षिणो गगनात् पृथिव्यामवतरणम्। स्यन्दनं=जलस्य गतिः। ऊर्ध्वज्वलनं=वह्नेर्गतिः। तिर्यग्गमनं=पवनादेर्गतिरिति, तेषां कर्मणां गमनेऽन्तर्भाव इति समाधत्ते– भ्रमणादीनामिति ॥ गतित्वं=उत्क्षेपणादिभिन्नत्वे सत्युत्तरसंयोगानुकूलक्रियात्वमिति ॥

परमपरं चेति द्विविधं सामान्यम् ॥

(प०) परमपरं चेति। परसामान्यमपरसामान्यमित्यर्थः। परत्वं–चाधिकदेशवृत्तित्वम्। अपरत्वं–न्यूनदेशवृत्तित्वम् ॥

(दी०) सामान्यं विभजते—परमिति। परमधिकदेशवृत्ति। अपरं न्यूनदेशवृत्ति। सामान्यादिचतुष्टये जातिर्नास्ति ॥

**(कि०)मूले-परमपरमिति** ॥ सामान्यं=जातिः। द्विविधं=द्विप्रकारकम् , द्वे सामान्ये-इति यावत् । तेन-'सामान्यत्वं-परसामान्यत्वाऽपरसामान्यत्वाऽन्यतरव्याप्य'मिति व्याप्तिलाभः । द्वित्वं-अपेक्षाबुद्धिविषयत्वरूपम् । तदियं प्रक्रिया-प्रथमक्षणे-'अयमेकः' 'अयमेकः' इत्यपेक्षाबुद्धिः, ततो द्वितीयक्षणे 'इमौ द्वा'विति प्रतीतिविषयद्वित्वोत्पत्तिः, ततस्तृतीयक्षणे द्वित्वस्य निर्विकल्पकं ज्ञानं, चतुर्थक्षणे द्वित्वस्य सविकल्पकं प्रत्यक्षं,-अपेक्षाबुद्धिनाशश्च, पञ्चमक्षणे द्वित्वनाश इति । अपेक्षाबुद्धिः द्वित्वस्य सविकल्पकप्रत्यक्षोपसम्पत्तये क्षणत्रयं तिष्ठति । अन्यानि ज्ञानानि तु क्षणद्वयमेवेति॥

**सामान्यं विभजते-इति** । एकोपाध्यभिप्रायेणैकवचनम् । उपाधिर्द्विविधः-सखण्डः, अखण्डश्च, सखण्डोपाधिस्तद्व्यक्तित्वादिरूपोऽनित्यघटादिगतः कल्पितधर्मविशेषः । अखण्डोपाधिस्तु-समवेतभिन्ननित्यधर्मात्मको गगनत्वादिः । उपाधित्वं-समवेतभिन्नधर्मत्वमिति॥ एकत्वविशिष्टसामान्यत्वाऽवान्तर-परसामान्यत्वाद्युपाध्यवच्छिन्नधर्मिप्रतिपादनाऽनुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ सामान्यस्य लक्षणं तु-~~नित्यत्वे सति अनेकसम~~वेतत्वम् । अनेकसमवेतत्वमात्रस्य लक्षणत्वे उभयद्रव्यसमवेते संयोगेऽतिव्याप्तिः, तद्वारणाय-नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वस्य गगनगतमहत्त्वपरिमाणे सत्त्वात् अतिव्याप्तिरतस्तद्वारणाय-**अनेकेति** । समवेतत्वं नाम समवायेन वृत्तित्वम् बोध्यम् ,'समवायेने'त्यस्यानुपादाने तु नित्यत्वे सति वृत्तित्वमात्रं घटात्यन्ताभावेऽतिव्याप्तं, घटात्यन्ताभावस्य' स्वरूपसम्बन्धेन अनेकेषु पटमठादिषु वर्तमानत्वात् , समवायेन वृत्तित्वकथने तु नाऽतिव्याप्तिरिति तु तत्त्वं । न च तथापि गगनकालयोर्नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम् । नित्यसंयोगाऽनङ्गीकारात् ॥ सामान्याऽनधिकरणत्वे सति विशेषभिन्नत्वे सति समवेतत्वमपि जातिलक्षणम् 'सामान्यानधिकरणत्व'पदेन द्रव्यगुणकर्मणां वारणम् । 'विशेषभिन्नत्व'पदेन विशेषाणां वारणम् । 'समवेतत्व'पदेन समवायाऽभावयोर्वारणम् । सामान्यवृत्तिर्यः सामान्यत्वधर्मः स न जातिः, अनवस्थाग्रस्तत्वात्, उक्तं हि द्रव्यकिरणावल्यामुदयनाचार्यैः 'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथाऽनवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रह' इति ॥ **व्यक्तेरभेदः**--स्वाश्रयव्यक्तेरैक्यम्, तच्च आकाशत्वादेर्जातित्वे बाधकम् । **व्यक्तेस्तुल्यत्वम्**-तुल्यव्यक्तिवृत्तित्वं, अन्यूनाऽनतिरिक्तव्यक्तिकत्वमिति यावत्, तच्च घटत्वकलशत्वयोर्भिन्नजातित्वे बाधकम्॥ **सङ्करः**--परस्पराऽत्यन्ताभावयोः समानाधिकरणयोर्धर्मयोरेकत्र समावेशः, स च भूतत्वादेर्जातित्वे बाधकः, यथा पृथिव्यप्तेजोवाय्वाकाशानि पञ्चभूतानि, पृथिव्यप्तेजोवायुमनांसि पञ्च मूर्तानि, तत्र भूतत्वं-बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् , बहिरिन्द्रियाणि घ्राणरसननेत्रत्वक्श्रोत्राणि पञ्च, तैर्ग्राह्याः क्रमशो विशेषगुणाः-गन्धरसरूपस्पर्शशब्दाः पञ्च, तद्वत्त्वं-क्रमशः पृथिव्यप्तेजोवाय्वाकाशेषु, अतस्तानि भूतानि । मूर्तत्वम्--अपकृष्टपरिमाणवत्त्वं, क्रियावत्त्वं वा, अपकृष्टपरिमाणं पृथिव्यप्तेजोवायूनां परमाणुषु मनसि चेति तानि मूर्तानि । तथा च भूतत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य-मूर्तत्वं विहाय गगने वर्तमानस्य भूतत्वस्य च-पृथिव्यादिचतुष्टये सत्त्वात् सङ्कर इति । ननु साङ्कर्यस्य जातिबाधकत्वे किं मानमिति चेत् ! 'स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभय-सम्बन्धेन यज्जातिविशिष्टजातित्वं यत्र तत्र तज्जातिव्यापकत्वमिति' नियमभङ्ग एव । यथा घटे घटत्वसमानाधिकरणं पृथिवीत्वं, पटे घटत्वाभावसमानाधिकरणं च पृथिवीत्वं, तादृशोभयसम्बन्धेन घटत्वविशिष्टा पृथिवीत्वजातिः, तत् पृथिवीत्वं घटत्वव्यापकमिति । सङ्करधर्मयोर्जातित्वे

व्याप्यव्यापकभावः न स्यादिति भावः ॥ **अनवस्था**—अप्रामाणिककल्पनासमाप्त्यभावः, यथा सकलजातिषु एकं जातित्वं, तज्जातित्व-तदाश्रयजातिषु च पुनर्वैजात्यं, एवमग्रेऽपीत्यनवस्था बोध्या। अतो जातित्वं न जातिरिति भावः ॥ **रूपहानिः**—रूपस्य—'स्वतोव्यावर्तकत्व'रूपलक्षणस्य हानिः, सा विशेषत्वस्य जातित्वे बाधिका। विशेषेषु यदि विशेषत्वं जातिस्तदा तेनैव विशेषाणामन्येभ्यो व्यावृत्तिसम्भवे 'स्वतो व्यावर्त्तकत्व'सिद्धान्तहानिः स्यादिति भावः। अथवा—रूपस्य='सामान्यरहितत्वे सति सामान्यभिन्नत्वे सति समवेतत्व' मिति यद्विशेषाणां लक्षणं तस्य हानिः स्यात्, विशेषाणां सामान्यवत्त्वाङ्गीकारे 'सामान्यरहितत्व'घटिततादृशलक्षणं न स्यादिति भावः ॥ **असम्बन्धः**—अनुयोगिता-प्रतियोगितान्यतरसम्बन्धेन समवायाऽभाव इत्यर्थः। स च समवायत्वाऽभावत्वयोर्जातित्वे बाधक इति ॥ सामान्यत्वमखण्डोपाधिः ॥ **परमिति**—यदपेक्षया यस्य सामान्यस्याल्पदेशवृत्तित्वं तत् सामान्यं परमित्यर्थः। **अपरमिति**। यदपेक्षया यस्य सामान्यस्याल्पदेशवृत्तित्वं तत् सामान्यमपरमित्यर्थः। सत्ताया द्रव्यत्वाऽपेक्षयाऽधिकदेशवृत्तित्वेन परसामान्यत्वं, पृथिवीत्वादीनां द्रव्यत्वाऽपेक्षया न्यूनदेशवृत्तित्वेनाऽपरसामान्यत्वम्, द्रव्यत्वादीनां सत्तातोऽपरत्वं पृथिवीत्वादीनां घटत्वादितः परत्वमिति बोध्यम्। परमपरमितिविभागो वैशेषिकनये बोध्यः। सत्ताजातिः 'द्रव्यं सत्' 'गुणः सन्' 'कर्मसत्' इत्यनुगतप्रतीत्यो सिद्धयति ॥ अथवा—प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन सत्त्वावच्छिन्नस्य कारणत्वमिति नियमात् तादृशकारणतावच्छेदकतया सत्ताया जातित्वसिद्धिः। प्रागभावे व्यभिचारवारणाय भिन्नान्तं प्रतियोगिताविशेषणम्। तथा च 'तादृशप्रतियोगित्वसम्बन्धावच्छिन्नध्वंसत्वावच्छिन्नध्वंसनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्ना या सन्निष्ठा कारणता सा-किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्' इत्यनुमानेन ध्वंसकारणतावच्छेदकतया सत्ताया जातित्वं-सिद्धयतीति भावः। सामान्यादिचतुष्टये=सामान्यविशेषसमवायाऽभावेषु, जातिर्नास्ति। तथा च सामान्यादिवृत्तिसामान्यत्वादीनामखण्डोपाधित्वमिति भावः ॥

## नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥

(दी०)विशेषं विभजते—नित्येति। पृथिव्यादिचतुष्टयस्य परमाणवः—आकाशादिपञ्चकं च नित्यद्रव्याणि ॥

---

**(कि०) मूले 'नित्यद्रव्ये'ति**। नित्येषु द्रव्येषु पृथिवीजलतेजःपवनानां परमाणुषु आकाशकालदिगात्ममनःसु च वर्त्तमाना इत्यर्थः। नित्यत्वं—ध्वंसाऽप्रतियोगित्वमात्रं प्रागभावाप्रतियोगित्वमात्रं वा बोध्यम्। अनन्ताः—असङ्ख्या इत्यर्थः। दीपिकायां **विशेषं विभजते इति**—एकवचनं विशेषत्वोपाध्यभिप्रायेण। तथा च एकत्वविशिष्टविशेषत्वाऽवान्तरतत्तद्व्यक्तित्वावच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ विशेषाणां सिद्धिप्रकारः—घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदप्रयोज्योऽवयविभेदः, यथा "अयं घटः—तद्घटभिन्नः, एतदीयकपाल-

भेदात् । अत्र हेतुः—स्वप्रतियोगिसमवेतत्वसम्बन्धेन बोध्यः, अग्रेऽपि तथा बोध्यम्, एवं-एतत्कपालं—तत्कपालभिन्नम्,—तत्कपालिकाभेदात् । एतत्कपालिका—तत्कपालिकाभिन्ना,—पिण्डभेदात् । अयं पिण्डः—तत्पिण्डभिन्नः,—चतुरणुकभेदात् । अयं चतुरणुकः—तच्चतुरणुकभिन्नः,—त्र्यणुकभेदात् । अयं त्र्यणुकः—तत्त्र्यणुकभिन्नः—द्व्यणुकभेदात् । इदं द्व्यणुकं—तद्द्व्यणुकभिन्नम्,—परमाणुभेदात् । इति" । ततो द्व्यणुकोत्पादान्यथाऽनुपपत्त्या परमाणुसिद्धौ सत्यां 'परमाणूनां भेदः—किञ्चित्प्रयोज्यः,—भेदत्वात्, कपालभेदप्रयोज्यघटभेदवत्' इत्यनुमानेन किञ्चित्पदेन विशेषभेद एव सिद्ध्यति । परमाणुगतविशेषाणां भेदसिद्ध्या च विशेषस्याऽपि सिद्धिरिति । विशेषस्तु स्वत एव व्यावृत्तः—स्वप्रयोज्यभेदवानेव, न तु तद्गतविशेषान्तरभेदप्रयुक्तभेदवानिति भावः । अत एव 'स्वतोव्यावृत्तत्व'मिति तल्लक्षणम् । स्वतोव्यावृत्तत्वं च-'स्वप्रयोज्य-स्वनिष्ठ-स्वसजातीयप्रतियोगिकभेदकत्व'मिति । स्वसाजात्यं च पदार्थविभाजकोपाधिरूपेण बोध्यम्, स्वं-विशेषः तेन प्रयोज्यो यो विशेषनिष्ठो विशेषान्तरप्रतियोगिको भेदो यस्य विशेषस्य तत्कत्वमित्यर्थः । केचित्तु—'स्वभिन्नलिङ्गजन्य-स्वविशेष्यक-स्वसजातीयेतरभेदानुमित्यविषयत्वं स्वतो व्यावृत्तत्वं' यथा 'विशेषाः—स्वसजातीयेतरभिन्नाः—स्वस्मात्' इत्यनुमितौ स्वेतरभेदसाधने 'स्व'मेव तादात्म्येन लिङ्गम्, नान्यदिति वदन्ति । तत्तु गौरवात् त्यज्यते—इति । सामान्यरहितत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं विशेषाणां लक्षणम् द्रव्यगुणकर्मवारणाय-सामान्यरहितत्वे सतीति । सामान्यवारणाय=सामान्यभिन्नत्वे सतीति । समवायाऽभाववारणाय—समवेतत्वमिति ॥ पृथिव्यादिचतुष्टयस्येति । पृथिवीजलतेजोवायूनामित्यर्थः ॥ नित्यत्वं=ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम् ॥

## समवायस्त्वेक एव ॥

(दी०) समवायस्य भेदो नास्तीत्याह—समवायस्त्विति ।

---

(कि०) मूले-समवायस्त्वेक एवेति । 'नित्यत्वे सति सम्बन्धत्वं' तल्लक्षणम् । नित्यत्वाऽनुपादाने संयोगादावतिव्याप्तिः । सम्बन्धत्वाऽनुपादाने परमाण्वादावतिव्याप्तिः ॥ अवयवाऽवयविनोः, जातिव्यक्त्योः, गुणगुणिनोः, क्रियाक्रियावतोः, नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः । समवायसिद्धिस्त्वनुमानेन—'गुणवान् घटः'—इति विशिष्टबुद्धिः—विशेषणविशेष्यसम्बन्धविषया,—विशिष्टबुद्धित्वात्, 'दण्डवान् पुरुष' इति विशिष्टबुद्धिवत् । यथा 'दण्डवान् पुरुष' इति विशिष्टबुद्धिः, तत्र विशेषणं-दण्डः, विशेष्यः पुरुषः, तयोः सम्बन्धस्तु-संयोगः, तद्विषयिणी भवति, तथा 'गुणवान् घट' इत्यत्र विशेषणं-गुणो विशेष्यो घटः, तयोः सम्बन्धस्तु न संयोगः, अपि तु समवाय एवेति तद्विषयकत्वं तादृशविशिष्टबुद्धौ अक्षतम् । न च स्वरूपः तादृशबुद्धिविषयः, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात्, अतो लाघवादेकसमवायसिद्धिरिति ॥ 'गुणवान् घट'इत्यत्र गुणघटयोः समवायसम्बन्धः, समवाय-

घटयोस्तु स्वरूपसम्बन्धः, स चाऽनुयोगितारूपः, अनुयोगिता चाऽनुयोगिघटरूपैवेति ध्येयम् । एवं समवायगुणयोः स्वरूपः सम्बन्धः, स च प्रतियोगितारूपः, अनुयोगितारूपो वेत्यन्यदेतत्, प्रतियोगितापि प्रतियोग्यात्मिकैव । स्वरूपसमवाययोः सम्बन्धोऽप्यनुयोगिताप्रतियोगितारूपः, ते चाऽनुयोगिप्रतियोगिस्वरूपे-इति बोध्यम् ॥ नव्यमते समवायनानात्वं, तत्खण्डनायाऽऽह—दीपिकायां—समवायस्य भेदो नास्तीति । समवायनानात्ववादिनां नव्यानां मते "समवायेन पटत्वाद्यवच्छिन्नं प्रति तादात्म्येन तन्तुत्वादिना हेतुत्वात् कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः—अनुमानं यथा—'तादात्म्यसम्बन्धावच्छिन्नकपालादिनिष्ठकारणतानिरूपिता घटादिनिष्ठा कार्यता—किञ्चित्सम्बन्धावच्छिन्ना,—कार्यतात्वादिति" बोध्यम् ।

**अभावश्चतुर्विधः—प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥**

(दी०) अभावं विभजते-अभाव इति ।

---

(कि०) मूले—अभावश्चतुर्विध इति । अस्यां चतुर्धा विभागबुद्धिजन्यम् । अभावत्वं प्रागभावादिचतुष्टयाऽन्यतमत्वव्याप्यमिति व्याप्तिलाभोऽपि बोध्यः । प्रतियोग्यनधिकरणे दशादावभावः कश्चित् प्रत्यक्षसिद्धः । अभावत्वम्—अखण्डोपाधिः, अनुयोगिताविशेषो वा । लक्षणन्तु—'प्रतियोगिज्ञानाऽधीनज्ञानविषयत्वं' ॥ समवाय-एकार्थसमवायाऽन्यतरसम्बन्धेन सत्तावत्त्वं भावत्वं तद्राहतत्वम्—अभावत्वमिति वा । अभावः स्वरूपसम्बन्धेन अधिकरणे वर्तते प्रतियोगितासम्बन्धेन स्वप्रतियोगिनि वर्तते, अभावस्वरूपयोः स्वरूपाऽधिकरणयोश्च सम्बन्धो यथायथमनुयोगिताप्रतियोगिताविशेषः, ते चाऽनुयोगिप्रतियोगिरूपे—इति. संयोगसमवाययोः सम्बन्धेऽप्येवमेव कल्पनीयम् । प्रागभाव इति । विनाशित्वे सत्यभावत्वं—प्रागभावत्वम् । उत्पत्तिमत्त्वे सति अभावत्वं—ध्वंसाभावत्वम् । त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वं—अत्यन्ताभावत्वम् । तादात्म्य—सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वं -अन्योन्याभावत्वमित्यादिकं तत्तल्लक्षणं बोध्यम् ॥ दीपिकायां—अभावं विभजते—इति । अभावत्वरूपाऽखण्डोपाध्यभिप्रायेणैकवचनम् । अभावत्वाऽवान्तरधर्मावच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान् ग्रन्थकार इति बोधः । अत्यन्ताभावाऽन्योन्याभावौ नित्यौ । प्रागभावप्रध्वंसाभावौ त्वनित्यौ ॥

**तत्र गन्धवती पृथिवी । सा द्विविधा-नित्याऽनित्या च । नित्या-परमाणुरूपा, अनित्या-कार्यरूपा । ( १ ) पुनस्त्रिविधा-शरी-**

---

(१) अत्र-'पुनस्त्रिविधा नाम—नित्याऽनित्योभयसाधारणी पृथिवी प्रकारान्तरेण त्रिविधेति अन्नंभट्टानां मतम् । अन्येषां तु अनित्या पृथिवी एव त्रिविधा, इति मतम् । एवमग्रे जलादावपि बोध्यमिति ॥

रेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥

( न्या० ) गन्धवतीति । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी । पृथिवीत्वं लक्ष्यतावच्छेदकम् । पृथिवीत्वावच्छिन्ना लक्ष्यता । (१) यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः । यो धर्मो यस्याऽवच्छेदकः स तद्धर्मावच्छिन्नः । तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना । ( २ ) गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम् ॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम् ॥

(प०) तदेव हि लक्षणं यदव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयशून्यम् । यथा गोः 'सास्नादिमत्त्वम्' । अव्याप्तिश्च—लक्ष्यैकदेशावृत्तित्वम् । अत एव गोर्न 'कपिलत्वं' लक्षणं, तस्याऽव्याप्तिग्रस्तत्वात् । अतिव्याप्तिश्च—लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । अत एव गोर्न—'शृङ्गित्वं' लक्षणं, तस्याऽतिव्याप्तिग्रस्तत्वात् । असम्भवश्च—लक्ष्यमात्रावृत्तित्वम् । यथा गोः—'एकशफवत्त्वं' न लक्षणं, तस्याऽसम्भवग्रस्तत्वात् । नित्येति । ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वं—नित्यत्वम् । ध्वंसेऽतिव्याप्तिवारणाय—ध्वंसभिन्नेति विशेषणम् । घटादावतिव्याप्तिवारणाय—विशेष्यदलम् । ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वाऽनित्यत्वम् ।यद्भोगायतनं तदेव शरीरं, चेष्टाश्रयो वा ॥ इन्द्रियमिति । चक्षुरादावतिव्याप्तिवारणाय—गन्धग्राहकमिति । (३) कालादावतिप्रसक्तिवारणाय—इन्द्रियमिति । विषय इति । शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः । शरीरादावतिव्याप्तिनिरासाय—सत्यन्तम् । परमाण्वादावतिव्याप्तिवारणाय—विशेष्यदलम् । कालादिवारणाय—जन्यत्वे सतीत्यपि बोध्यम् ॥

---

(१) "यद्धर्मावच्छिन्ना" लक्ष्यता स धर्मो लक्ष्यतावच्छेदकः, यो धर्मो यस्या अवच्छेदकः सा तद्धर्मावच्छिन्ना"—इति पाठान्तरम् ॥ ( २ ) गन्धस्य अधिकरणे वर्त्तमाना द्रव्यत्वस्य साक्षाद्व्याप्यजातिः पृथिवीत्वरूपा भवति, स्वभिन्नत्वे सति स्वव्याप्यव्याप्यभिन्नस्यैव साक्षाद्व्याप्यत्वस्वरूपत्वात्, तद्वत्त्वं सर्वत्र पृथिव्यामिति लक्षणसमन्वयः ॥

(३) गन्धग्राहकत्वं—गन्धविषयकप्रत्यक्षजनकत्वं, तच्च कालादौ वर्तते, कालादीनां यावत्कार्यं प्रति साधारणकारणत्वात्, उक्तं हि—"ईशस्तज्ज्ञानयत्नेच्छाः कालोऽदृष्टं दिगेव च । प्रागभावप्रतिबन्धकाऽभावौ कार्ये साधारणाः स्मृताः" इति ।

(दी०) तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्याः लक्षणमाह—गन्धवतीति। नाम्ना पदार्थसङ्कीर्तनमुद्देशः। उद्देशक्रमे च सर्वत्रेच्छैव नियामिका। ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः। न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम्। अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात्। किञ्च-उत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न, गन्धसमानाधिकरणद्रव्यत्वापरजातिम-

---

(कि०) मूले—'तत्र गन्धवतीति। तत्र=नवद्रव्येषु मध्ये इत्यर्थः। लक्ष्या-पृथिवी। लक्ष्यतावच्छेदकं-पृथिवीत्वं, तच गन्धसमवायिकारणतावच्छेदकतया सिद्धयति। कारणत्वं यद्धर्मावच्छिन्नं स धर्मः कारणताऽवच्छेदकः, यथा गन्धकारणत्वं पृथिवीत्वावच्छिन्नं सः—पृथिवीत्वधर्मः कारणतावच्छेदकः, यो धर्मो यस्याऽवच्छेदकः स तद्धर्मावच्छिन्नः, यथा पृथिवीत्वधर्मो गन्धसमवायिकारणताया अवच्छेदकः सा=गन्धसमवायिकारणता पृथिवीत्वावच्छिन्ना। अनुमानम्—'गन्धसमवायिकारणता-किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वात्, या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना, निरवच्छिन्न-कारणताया असंभवात्, अत्र यः किञ्चिद्धर्मः स एव पृथिवीत्वरूपः॥ नाम्नेति॥ तृतीयार्थोऽभेदः, स च सङ्कीर्तनपदार्थे—'प्रतिपादकशब्दा'त्मकेऽन्वेति, पदार्थः=वस्तु, तथा च 'नामाभिन्नवस्तुप्रतिपादकव्यापारः'—उद्देश इति पर्यवसितम्॥ पृथिव्या लक्षणं-गन्धवत्त्वम्। कालिकसम्बन्धेन गन्धवत्त्वस्य कालेऽतिव्याप्तिस्तद्वारणाय-समवायेन गन्धवत्त्वं बोध्यम्। तथाऽप्यव्याप्तिमाशङ्कते—नन्विति। तथा च एकः सुरभिः, अपरस्त्वसुरभिः, तादृशौ यौ=अवयवौ ताभ्यामारब्धे द्रव्ये-घटादौ अवयविनि न सुगन्ध उत्पद्यते न वा दुर्गन्ध उत्पद्यते यतः;=सुरभिद्रव्योत्पत्तौ असुरभ्यवयवस्य, असुरभिद्रव्योत्पत्तौ सुरभ्यवयवस्य, च प्रतिबन्धकत्वेन सुगन्धस्य दुर्गन्धस्य वाऽनुत्पादात्, गन्धवत्त्वविरहेण तादृशे घटेऽव्याप्तिरिति भावः॥ शङ्कते—न चेति। अयं भावः—तत्र घटे चित्रगन्धो वर्तत एव, अन्यथा तत्र प्रत्यक्षात्मिका या गन्धप्रतीतिर्भवति साऽनुपपन्ना स्यादिति॥ उत्तरयति—अवयवगन्धस्यैवेति। तत्र-घटे या गन्धप्रतीतिर्भवति सा तु स्वाश्रयसमवेतत्वसम्बन्धेन अवयवगन्धस्यैव न तु अवयविनो घटस्य गन्धस्य, एतश्चित्रगन्धो नैयायिकमते गगनकुसुमायमान एवेति। तथा च तत्र घटेऽव्याप्तिरेव॥ निरुक्तस्थलेऽवयवगन्धप्रतीतेः सविवादतयाऽऽह—किञ्चेति। अदृष्टवशात् यत्र प्रथमक्षणे घटसमवायिकारणसंयोगाऽनुकूला क्रिया। द्वितीयक्षणे द्रव्यकारणीभूतः संयोगः। तृतीयक्षणेऽदृष्टान्तरवशात् अवयवान्तरे तादृशसंयोगविघटकक्रिया, घटोत्पत्तिश्च। चतुर्थक्षणे तादृशक्रियया संयोगनाशो घटनाशश्च, प्रतियोगितासम्बन्धेन संयोगनाशात्मककारणस्य तृतीयक्षणे संयोगरूपे प्रतियोगिनि सत्त्वात्, तादृशेऽस्थितिके घटे गुणाः सर्वथा न सन्त्येवेति तत्राऽव्याप्तिरिति भावः। तां वारयितुं जातिघटकलक्षणमनुसरति—गन्धेति—गन्धाधिकरणे वर्तमाना या द्रव्यत्वापेक्षया-अल्पदेशे वर्तमाना जातिस्तद्वत्त्वमित्यर्थः। तथा च द्रव्यत्वसाक्षाद्व्याप्या या जातिः पृथिवीत्वरूपा तद्वत्त्वम् सर्वत्र पृथिव्यां समन्वितं भवतीति भावः। जलत्वमादाय जलादावतिव्याप्तिवारणाय-गन्ध-

त्त्वस्य विवक्षितत्वात् । ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न, अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न, सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्याभिमतत्वात् । पृथिवीं विभजते—सा द्विविधेति । नित्यत्वं ध्वंसाप्रतियोगित्वं । ध्वंसप्रतियोगित्वमनित्यत्वम् ।

प्रकारान्तरेण विभजते—पुनरिति । आत्मनो भोगायतनं—शरीरम् । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखान्यतरसाक्षात्कारो—भोगः ।

---

समानाधिकरणेति । द्रव्यत्वमादाय जलादावतिव्याप्तिवारणाय—द्रव्यत्वाऽपरेति । पृथिवीजलान्यतरत्वमादाय जलादावतिव्याप्तिवारणाय—जातिपदम् ॥ जलेऽपि गन्धप्रतीतिसत्त्वात् तत्राऽतिव्याप्तिमाशङ्कते नन्विति ॥ उत्तरयति—नेति । गन्धसमवायिकारणतायाः पृथिव्यामेव निश्चयात् 'पृथिवीसत्त्वे गन्धप्रतीतिसत्ता'इत्यन्वयेन 'पृथिवीभिन्ने च गन्धप्रतीत्यभाव' इति व्यतिरेकेण च पृथिवीगन्धस्यैव स्वसमवायिसंयुक्तरूपपरम्परासम्बन्धेन तत्र—जले भानाऽङ्गीकारात् तत्र नाऽतिव्याप्तिरिति भावः ॥ यथाश्रुतेऽतिव्याप्तिमाशङ्कते—ननु तथापीति । 'जन्यानां जनकः कालो जगतामाश्रयो मतः' इत्यभियुक्तोक्तेः कालिकविशेषणतया सर्वस्याधारभूतः काल इति गन्धस्यापि तत्र सत्त्वात् तत्राऽतिव्याप्तिः ॥ अनुगतरूपेण लक्षणताघटकसम्बन्धं निवेश्य कालादावतिव्याप्तिं वारयति—सर्वाधारतयेति । काले सर्वाधारताप्रयोजकः सम्बन्धः कालिकविशेषणताख्यः, तद्भिन्नः सम्बन्धो यथायथं समवायसंयोगस्वरूपादिः, अत्र च समवायस्य प्राप्ततया तेन सम्बन्धेन गन्धसामानाधिकरण्यघटकगन्धाधिकरणत्वस्य विवक्षिततया न तत्रातिव्याप्तिरिति भावः । पृथिवीं विभजते इति । पृथिवीत्वाऽवान्तरधर्मावच्छिन्नधर्मिप्रतिपादनानुकूलव्यापारवान् ग्रन्थकार इति बोधः ॥ नित्यत्वमिति । ध्वंसाऽप्रतियोगित्वं ध्वंसेऽतिव्याप्तं तद्वारणाय—ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वं वक्तव्यम् । घटादावतिव्याप्तिवारणाय—विशेष्यदलम् ॥ अथवा—पृथिवीत्वविशिष्टनित्यत्वं ध्वंसाप्रतियोगित्वमात्रं वक्तव्यम् । अनित्यत्वमिति । ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वाऽन्यतरवत्त्वमित्यर्थः । तेन न ध्वंसे वा प्रागभावेऽव्याप्तिः । वस्तुतः पृथिवीत्वविशिष्टाऽनित्यत्वं ध्वंसप्रतियोगित्वमात्रं प्रागभावप्रतियोगित्वमात्रं वा वक्तव्यमिति ध्येयम् । प्रकारान्तरेणेति । 'पृथिवी'मित्यनुपज्यते ॥ पुनस्त्रिविधेति मूलम् । अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूप-'विषय' लक्षणाऽऽक्रान्ततया विषयान्तर्गतत्वेन पृथिव्यास्त्रैविध्यम्, अत एव 'पुनः'—पदोक्तिः, टीकायां 'प्रकारान्तरेणे'तिपदोक्तिश्च सङ्गच्छते । केचित्तु—परमाणूनां साक्षादुपभोगसाधनताविरहादनित्यपृथिव्या एव त्रैविध्यं वर्णयन्ति । तन्न युक्तम् । तथा सति द्व्यणुकस्यापि साक्षाद् भोगसाधनत्वविरहात्तस्यातिरिक्तपृथिवीत्वापत्तेः । दीपिकायां शरीरलक्षणमाह—आत्मन इति । भोगस्याऽऽयतनं—अवच्छेदकम् । तथा च यादृशं लक्षणं सम्पन्नं तादृशमाह—यदवच्छिन्नेति ॥ भोगपदार्थमाह—सुखदुःखेति । तथा चात्मनः सुखदुःखान्यतरसाक्षात्काराऽवच्छेदकं शरीरमिति

शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम्। शरीरेन्द्रियभिन्नो विषयः। एवं च गन्धवच्छरीरम्, पार्थिवशरीरम्, गन्धवदिन्द्रियं

पर्यवसन्नं लक्षणम्। अत्र 'अन्त्यावयवित्वे सती'ति विशेषणं देयं, तेन करपादादीनां मतान्तरेण सुखाद्यवच्छेदकत्वेऽपि तत्र नाऽतिव्याप्तिः। अन्त्यावयवित्वं–द्रव्यान्तराऽनारम्भकद्रव्यत्वम्॥ शरीरत्वं–न जातिः, पृथिवीत्वादिना साङ्कर्यात्। पृथिवीत्वं विहाय शरीरत्वं जलीये तैजसे वा शरीरे वर्तते, शरीरत्वं विहाय पृथिवीत्वं घटादौ वर्तते, द्वयोः समावेशः पार्थिवशरीरे–इति। किन्तु अन्त्यावयवित्वे सति चेष्टाश्रयत्वं, चेष्टा च—हिताऽहितप्राप्तिपरिहाराऽनुकूला क्रिया, तदाश्रयत्वात् स्थावरजङ्गमादिषु शरीरत्वव्यवहारः। पार्थिवं शरीरं द्विविधं–योनिजम् अयोनिजं च। योनिजं द्विविधं–जरायुजम् अण्डजं च, जरायुजं–मानुषादीनाम्, अण्डजं–सर्पादीनाम्। अयोनिजमपि द्विविधम्–स्वेदजम्, उद्भिज्जं च, स्वेदजाः–कृमिदंशाद्याः, उद्भिज्जाः–तरुगुल्माद्याः, नारकीणां शरीरमप्ययोनिजमिति॥ 'इन्द्रियत्वमपि–न जातिः, पृथिवीत्वादिना सांकर्यात्। पृथिवीत्वाभाववति रसनेन्द्रिये इन्द्रियत्वं, इन्द्रियत्वाभाववति घटे पृथिवीत्वं, द्वयोः समावेशो घ्राणे इति साङ्कर्यम्। तर्हि किं नामेन्द्रियत्वमित्याकाङ्क्षायामाह-शब्देतरेति। शब्दादितरे उद्भूता ये विशेषगुणास्तेषाम् अनाश्रयत्वे सति ज्ञानस्य कारणं यद् इन्द्रियमनसोः आत्ममनसोश्च संयोगस्तदाश्रयत्वम्। आत्मनि चर्मणि चाऽतिव्याप्तिवारणाय–सत्यन्तम्। श्रोत्रेऽव्याप्तिवारणाय–शब्देतरेति। चक्षुरादौ विशेषगुणस्याऽनुद्भूतरूपादेः सत्त्वेनाऽव्याप्तिवारणाय-उद्भूतेति। अन्नंभट्टाऽभिप्रायस्तु-उद्भूतत्वं–प्रत्यक्षत्वप्रयोजिका रूपादिसंयोगादिगता जातिः, तादृशजातिमत्संयोगमादायाऽसंभववारणाय–विशेषेति। केचित्तु–उद्भूतत्वं न जातिः–शुक्लत्वादिना साङ्कर्यात्। शुक्लत्वाऽभाववति घटस्य कृष्णे रूपे उद्भूतत्वं, उद्भूतत्वाभाववति अनुद्भूतशुक्ले शुक्लत्वं, द्वयोः समावेशः उद्भूतशुक्ले इति। किन्तु शुक्लत्वादिव्याप्यं नाना अनुद्भूतत्वं, तत्तदभावकूटवत्त्वम्–उद्भूतत्वम्, तच्च संयोगेऽप्यस्ति, तथा च शब्देतरोद्भूतगुणं संयोगमादायाऽसंभववारणाय–विशेषेति। "रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः। बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः।" विशेषगुणत्वमग्रे वक्ष्यते। कालादावतिव्याप्तिवारणाय–विशेष्यदलम्। तत्रैवाऽतिव्याप्तिवारणाय–ज्ञानकारणेति। प्राचीनमते–विषयावयवेन्द्रियावयवसंयोगस्य प्रत्यक्षजनकतया तदाश्रयस्येन्द्रियाऽवयवस्य वारणाय'मनः' पदम् नवीनमते–कालादौ रूपाभावप्रत्यक्षं संयुक्तविशेषणतयैव भवतीति चक्षुःसंयुक्तविशेषणतासन्निकर्षघटकचक्षुःसंयोगाश्रयतया–अभावप्रत्यक्षज्ञानकारणसंयोगाश्रयत्वेन कालेऽतिव्याप्तिवारणाय 'मनः' पदम्॥ **विषय इति**। जन्यत्वे सति शरीरेन्द्रियभिन्नत्वे च सति उपभोगसाधनत्वं विषयत्वमित्यर्थः। शरीरेन्द्रियवारणाय-भिन्नान्तम्। परमाणुवारणाय जन्यत्वे सतीति। उपभोगाऽसाधनीभूतानाम् अभावादीनाम् अलीकानां गगनकुसुमादीनां वा वारणाय–उपभोगसाधनत्वमिति। कालादीनां विषयत्वमिष्टमेव। इमानि शरीरेन्द्रियविषयलक्षणानि पार्थिवजलीयतैजसादिशरीरेन्द्रियविषयेषु सामान्यतो वर्तन्त एव॥ **एवं चेति**। शरीरस्य–इन्द्रियस्य–विषयस्य–च सर्वसाधारणे लक्षणे कृते च सतीत्यर्थः। तथा च–गन्धवत्त्वविशेषित–पार्थिवशरीरेन्द्रियविषयाणां विशेषलक्षणानि, एवं 'शीतस्पर्शवत्त्व' विशेषित-जलीयशरीरेन्द्रियविषयाणां विशेषलक्षणानि, उष्णस्पर्शवत्त्वेन विशेषिततैजसशरीरेन्द्रियविषयाणां

पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषयः, इति तत्तल्लक्षणं बोध्यम्। पार्थिवं शरीरं दर्शयति —शरीरमिति। पार्थिवेन्द्रियं दर्शयति—इन्द्रियमिति। गन्धग्राहकमिति प्रयोजनकथनम्। घ्राणमिति संज्ञा। नासाग्रेत्याश्रयोक्तिः। एवमुत्तरत्र ज्ञेयम्। पार्थिवविषयं दर्शयति—मृत्पाषाणेति।

---

विशेषलक्षणानि, अपाकजाऽनुष्णाऽशीतस्पर्शवत्त्वेन विशेषितवायवीयशरीरेन्द्रियविषयाणां विशेषलक्षणानि च सम्पद्यन्ते इति भावः। तदेव स्पष्टयति—गन्धवच्छरीरमिति। पृथिव्याः सामान्यलक्षणं शरीरस्य सामान्यलक्षणं चैकीभूय पार्थिवशरीरस्य विशेषलक्षणं सम्पद्यते, यथा 'गन्धवत्त्वे सति अन्त्यावयवित्वे सति सुःखदुःखान्यतरसाक्षात्काराऽवच्छेदकत्वं पार्थिवशरीरत्वम्, एवमन्यदप्यूह्यम्॥ ननु गन्धवत्त्वस्य निवेशादेव घ्राणलक्षणस्य निर्वाहसम्भवे मूले 'गन्धग्राहकत्वा'-भिधानमनुचितमित्याशङ्कां निवारयति—प्रयोजनकथनमिति। मूलोक्तं 'गन्धग्राहक' मिति न लक्षणाऽभिप्रायकं, किन्तु गन्धप्रत्यक्षं घ्राणस्य प्रयोजनमिति द्योतकमिति भावः। अत एव घ्राणमिति न लक्ष्यनिर्देशः, किन्तु संज्ञाप्रदर्शनमात्रमित्याह—घ्राणमिति संज्ञा॥ एवमत्तरत्रेति। 'इन्द्रियं स्पर्शादिग्राहक'मित्यादावपि प्रयोजनादिकथनं बोध्यम्॥ घ्राणस्य पार्थिवत्वेऽनुमानं प्रमाणं यथा 'घ्राणं–पार्थिवम्, द्रव्यत्वे सति परकीयरूपरसाद्यनभिव्यञ्जकत्वे सति गन्धस्यैव व्यञ्जकत्वात्, केसररसव्यञ्जकगोघृतवत्॥ अन्ये तु='इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति'--इति मूले—'नासाग्रवर्ती'त्यनेन–स्थानं, 'घ्राण' मित्यनेन–लक्ष्यं, 'इन्द्रियं गन्धग्राहक' मित्यनेन–लक्षणं च दर्शितमिति, तदर्थश्च—स्वसंयुक्तसमवेतत्वसम्बन्धेन गन्धविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वमिति, सम्बन्धान्तरेण घ्राणेन्द्रियस्य गन्धादावसत्त्वात् व्यभिचारवारणाय—स्वसंयुक्तेत्यादि॥ चक्षुरादिवारणाय च--गन्धग्राहकत्वमित्युपात्तम्, एवं 'इन्द्रियं रसग्राहकं रसन' मित्यादावपि बोध्यमिति–सङ्गमयन्ति, तत्तु सुधीभिर्विभावनीयमिति॥ मूले—मृत्पाषाणादिरिति। आदिना घृत-तैल-दुग्धेक्षुरस लवण क्षार शर्करा-मधु-शुक्र-श्लेष्माऽत्तर-दान–मद्याऽऽम्ररसादयोऽपि पार्थिवविशेषभागात् पार्थिवविषया बोध्या इति॥

**शीतस्पर्शवत्य आपः। ता द्विविधाः-नित्याः, अनित्याश्च। नित्याः--परमाणुरूपाः। अनित्याः--कार्यरूपाः। पुनस्त्रिविधाः--शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः॥**

(प०) शीतेति। तेज आदावतिव्याप्तिवारणाय—शीतेति। (१) आकाशवारणाय-

(१) 'शीत'इति शब्दवत्त्वस्याऽऽकाशे सत्त्वादिति भावः॥

स्पर्शेति । कालादावतिप्रसक्तिवारणाय—समवायसम्बन्धेनेति पदं देयम् । इन्द्रियमिति । त्वगादावतिव्याप्तिवारणाय—रसग्राहकमिति । रसनेन्द्रियरसं(१) सन्निकर्षादावतिव्याप्तिनिरासाय—इन्द्रियमिति । सरिदिति । आदिना तडागहिमकरकादीनां संग्रहः ॥

(दी०) अपां लक्षणमाह—शीतेति । उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय—शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् । 'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः । अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् ।

---

(कि०) मूले—शीतस्पर्शवत्य आप इति । आपः—इति लक्ष्यम् । शीतस्पर्शवत्त्वं—लक्षणम् । कालिकेन कालेऽतिव्याप्तिवारणाय शीतस्पर्शवत्त्वं समवायेन बोध्यम् । तेजसि वायौ चाऽतिव्याप्तिवारणाय—शीतेति उत्पन्नविनष्टेति । पूर्ववत् उत्पत्तिद्वितीयक्षणे विनष्टं यत् जलं तत्रेत्यर्थः, तथा च तत्र शीतस्पर्शाऽभावेन भवत्यव्याप्तिरिति भावः ॥ शीतस्पर्शेति । शीतस्पर्शेन सह समानं=एकं अधिकरणं यस्याः सा तादृशी,—शीतस्पर्शाऽधिकरणे वर्तमानेति यावत्, अथ च द्रव्यत्वस्याऽपरा=द्रव्यत्वाऽपेक्षयाऽल्पदेशे विद्यमाना या जलत्वरूपा जातिस्तद्वत्त्वमित्यर्थः ॥ तादृशी जातिः—उत्पन्नविनष्टे जलेऽप्यस्तीति न तत्राऽव्याप्तिरिति भावः । 'द्रव्यत्वाऽपरे' त्यनुपादाने द्रव्यत्वं सत्त्वं चाऽऽदाय तेजःप्रभृतौ गुणे चाऽतिव्याप्तिः स्यात् । 'जाति' पदाऽनुपादाने जलपृथिव्यन्यतरत्वमादाय पृथिव्यामतिव्याप्तिः स्यात्, तद्वारणाय तत्तत्पदोपादानं बोध्यम् । पृथिवीत्वादिकमादाय पृथिव्यादावतिव्याप्तिवारणाय सामानाधिकरण्यान्तं जातिविशेषणम्, शीतत्वमपि स्पर्शविशेषणं तत्रैवाऽतिव्याप्तिवारणायेति बोध्यम् । जलसम्बन्धादेवेति । स्वसमवायिसंयुक्तत्वसम्बन्धेन शीतस्पर्शः शीलातले प्रतीयते, न तु समवायेनेति शीतस्पर्शवत्त्वं न तत्रातिव्याप्तमिति भावः ॥ जलत्वजातिस्तु—स्नेहसमवायिकारणतावच्छेदकतया सिद्ध्यति । 'इदं स्निग्ध'मित्यबाधितप्रतीतिविषयत्वेन स्नेहः चूर्णादिपिण्डी॰ ।वहेतुरूपो जले एव वर्तते, घृतादिरूपपृथिव्यां जलांशसत्त्वेन स्वाश्रयसंयुक्तत्वसम्बन्धेन स्नेहः प्रतीयते ॥ नित्यजले नित्यः स्नेहः, अनित्ये जले त्वनित्यः । तथा च 'समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नजन्यस्नेहनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यजलनिष्ठकारणता—किञ्चिद्धर्मावच्छिन्ना,— कारणतात्वात्'इत्यनुमानेन जन्यजलत्वे जातित्वसिद्धौ ततः 'समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नजन्यजलनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजलनिष्ठकारणता—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्' इत्यनेन नित्याऽनित्यसाधारणजलत्वजातिसिद्धिः कार्येति । ताः=आपः । दीपिकायां—पूर्वरीत्येति । नित्यत्वं ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम् । अनित्यत्वं पूर्ववत्—ध्वंसप्रागभावाऽन्यतरप्रतियोगित्वम्, 'पुनस्त्रिविधे'त्यस्य–प्रकारान्तरेणाऽऽपस्त्रिविधाः–इत्यर्थः, नित्यानाम् अपां

(१) रसनासंयुक्तसमवेतत्वरूपः सन्निकर्षो बोध्यः ॥

शरीरेन्द्रियभिन्नत्वरूपलक्षणाऽऽक्रान्ततया विषयान्तर्गतत्वादिति ॥ जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम् ॥ मूले रसग्राहकमिति । एतत्—प्रयोजनकथनम् । जिह्वाग्रवर्ती'तिस्थानकथनम् । 'रसन'मिति संज्ञाकथनम् ॥ रसनाया जलीयत्वेऽनुमानं प्रमाणम्-यथा 'रसनं—जलीयं,—द्रव्यत्वे सति गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात्, सक्तुरसव्यञ्जकजलवत् ॥ केचित्तु 'रसविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वं रसनाया लक्षणम् । रसनासंयुक्तसमवायसन्निकर्षवारणाय-इन्द्रियत्वम् । घ्राणादिवारणाय-सत्यन्तम् ॥ वस्तुतः—शीतस्पर्शवच्छरीरं—जलीयशरीरम् । शीतस्पर्शवदिन्द्रियम्—जलीयेन्द्रियम् । शीतस्पर्शवद्विषयो जलीयविषय इति—ग्रन्थकाराशयः ॥ मूले—सरित्समुद्रादिरिति । आदिना तडाग-हिम-करका-तुषाराऽभ्रपटल-स्वेदादयो ग्राह्याः । ननु करकाहिमादीनां काठिन्यात् पार्थिवत्वमेवेति चेन्न । तत्राऽदृष्टविशेषेण द्रवत्वप्रतिरोधः, पृथिवीसम्बन्धाच्च तत्र काठिन्यप्रत्ययः, पृथिवीभागस्तत्र स्वल्पो जलभागस्तु बहुल इति भावः ॥

**उष्णस्पर्शवत्तेजः । तच्च द्विविधम्—नित्यम्, अनित्यं च । नित्यं-परमाणुरूपम् । अनित्यं-कार्यरूपम् । पुनस्त्रिविधं-शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधः-भौमदिव्यौदर्याकरजभेदात् । भौमं—वह्न्यादिकम् । अबिन्धनं—दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरौदर्यम् । आकरजं सुवर्णादि ॥**

(प०)उष्णेति । जलादावतिव्याप्तिनिरासाय—उष्णेति । कालादावतिप्रसङ्गवारणाय-समवायसम्बन्धेनेति पदं देयम् । इन्द्रियमिति । घ्राणादावतिव्याप्तिवारणाय-रूपग्राहकमिति । कालादावतिव्याप्तिनिरसनाय—इन्द्रियमिति । 'भेदादि'ति पदं प्रत्येकमभिसम्बध्यते । भौममिति । आदिपदेन खद्योतगततेजःप्रभृतेः परिग्रहः । विद्युदादीति । आदिना-अर्कचन्द्रादीनां परिग्रहः । भुक्तेति । भुक्तस्याऽन्नादेः, पीतस्य-जलस्य, परिणामो—जाणता, तस्य हेतुरौदर्यमित्यर्थः । सुवर्णेति । आदिना ( १ ) रजतादिपरिग्रहः ॥

(दी०) तेजसो लक्षणमाह उष्णस्पर्शवदिति । 'उष्णं जलम्'इति प्रतीतेस्तेजः-

---

( कि० )-मूले-उष्णस्पर्शवत्तेज इति । तेजो—लक्ष्यम् । कालिकेन कालेऽतिव्याप्तिवारणाय उष्णस्पर्शवत्त्वं समवायेन बोध्यम् । जलादावतिव्याप्तिवारणाय—उष्णेति । 'उष्णं जल' मिति

---

( १ ) "सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु । सीसं कालायसं चैवमष्टौ लोहानि चक्षते" रीतिः=पित्तलम्, त्रपु=रङ्गम्, इति ॥

सम्बन्धानुविधायित्वात् नातिव्याप्तिः। विषयं विभजते—भौमेति। ननु सुवर्णं—

प्रतीतिस्तु तेजःसम्बन्धानुविधायनी, तेजःसम्बन्धः—संयोगो जले। उष्णस्पर्शस्तु स्वसमवायि-संयुक्तत्वसम्बन्धेन जले प्रतीयतेऽतो नातिव्याप्तिर्जले शङ्कनीया। अस्थितिके उत्पन्नविनष्टे तेजसि-सुवर्णादौ च अव्याप्तिवारणाय उष्णस्पर्शवद्वृत्तिद्रव्यत्वापरजातिमत्त्वं लक्षणं कार्यम्। द्रव्यत्वा-परत्वस्य जातिविशेषणत्वानुपादाने द्रव्यत्व—सत्तादिकमादाय—पृथिव्यादावतिव्याप्तिः—बोध्या। चन्द्रकिरणादौ—उष्णस्पर्शोऽस्ति किन्तु जलस्पर्शेनाऽभिभवात् तदग्रहः। रत्नकिरणादौ पार्थिव-स्पर्शेनाऽभिभवाच्चक्षुरादौ चाऽनुद्भूतत्वादग्रह इति॥ तेजस्त्वजातिसिद्धिः—उष्णस्पर्शसमवायि-कारणतावच्छेदकतया भवति। नित्य उष्णस्पर्शः परमाणुषु। अनित्य उष्णस्पर्शो द्व्यणुकादौ। तथा च—'समवायसम्बन्धावच्छिन्नाऽनित्योष्णस्पर्शत्वावच्छिन्नाऽनित्योष्णस्पर्शनिष्ठकार्यतानिरूपितता-दात्म्यसम्बन्धावच्छिन्नाऽनित्यतेजोनिष्ठकारणता—किंचिद्धर्मावच्छिन्ना,—कारणतात्वा' दित्यनेनाऽनि-त्यतेजस्त्वजातेः सिद्धौ सत्यां ततः—'समवायसम्बन्धावच्छिन्नाऽनित्यतेजस्त्वावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नतेजोनिष्ठकारणता—किंचिद्धर्मावच्छिन्ना,—कारणतात्वा'दित्यनेन सामा-न्यतस्तेजस्त्वजातिसिद्धिः कार्येति भावः॥

**मूले—नित्यमिति।** नित्यत्वमनित्यत्वं च पूर्ववत्। पुनस्त्रिविधमित्यपि—प्रकारान्तरेण त्रिविधमित्यर्थकम्। तैजसशरीरेन्द्रियविषयलक्षणानि-उष्णस्पर्शवच्छरीरं—तैजसशरीरम्, उष्णस्पर्श-वदिन्द्रियं—तैजसेन्द्रियम्। उष्णस्पर्शवद्विषयस्तैजसविषय इति॥ **शरीरमादित्यलोके—इति।** देवानां शरीरमयोनिजमिति बोध्यम्॥ इन्द्रियं रूपग्राहकमिति—प्रयोजनकथनम्, चक्षुरिति संज्ञा-निर्देशः, कृष्णताराग्रवर्तीति—स्थानकथनम्॥ **केचित्तु**—'इन्द्रियं रूपग्राहक'मिति लक्षणम्, तदर्थः—रूपविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वम्, घ्राणादिवारणाय—सत्यन्तम्, चक्षुःसंयुक्त-समवायसन्निकर्षवारणाय—इन्द्रियत्वमिति—**विवेचयन्ति**॥ चक्षुषस्तैजसत्वेऽनुमानं प्रमाणं—'चक्षुः—तैजसम्, द्रव्यत्वे सति परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्, प्रदीपवत्, प्रभावद्वा। इति॥ **मूले—भौमदिव्यौदर्याऽऽकरजभेदादिति।** भौमं च—दिव्यं च—औदर्यं च—आकारजं चेति भेदादित्यर्थः। भूमौ भवं भौमं—वह्न्यादिकम्, आदिना—खद्योतौषधिमण्यादीनां तेजःपरिग्रहः॥ अविन्धनं—आप एव—इन्धनमुद्दीपनं यस्य तदित्यर्थः। **विद्युदादीति**—आदिना सूर्य-चन्द्रतारकादीनां तेजः—परिग्रहः समुद्रस्थवडवानलपरिग्रहः अशनिपरिग्रहश्च॥ **भुक्तस्येति।** भुक्तस्य—ओदनादेः परिणामः—पाकः तस्य हेतुरौदर्यं—जाठराग्निरित्यर्थः॥ **आकरजमिति।** आकरं—खनिः तत्र जातमित्यर्थः॥ **सुवर्णादीति।** आदिना—सर्वलौहादिग्रहणम्, उक्तं चाऽमर-कोशे 'सर्वं च तैजसं लौहमि'ति। स्मृतिरपि वर्तते 'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु। सीसं कालायसं चैवमष्टौ लौहानि चक्षते"इति॥ रीतिः—पित्तलम्। त्रपु—रङ्गम्। अत्र काला-यसादौ पार्थिवभागोऽपि वर्ततेऽतो लोकानां तत्र—पार्थिवत्वेन व्यवहारः॥ शंकते दीपिकायां—**नन्विति। पीतत्वादिति।** समवायेन पीतरूपं पार्थिवत्वसाधको हेतुः॥ गुरुत्वादिति तैजसत्वा-ऽभावसाधको हेतुः। उत्तरयति—**नेति।** अत्रेयं प्रक्रियाऽनुसन्धेया—'कार्यम्—अनुमितिः। तदुपयोगि—व्याप्तिज्ञानम्। तद्विरोधिनी—व्यभिचारशङ्का। शङ्काविघटकः तर्कः। तर्कजनकः—कार्य-

पार्थिवम्–पीतत्वाद्,गुरुत्वात्, हरिद्राक्त' इति चेत्! न, अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन , असति प्रतिबन्धके

---

कारणभावनिश्चयः। तन्निश्चयं प्रति प्रत्यक्षतोऽन्वयव्यतिरेकनिश्चयौ–प्रयोजकाविति। यथा (दृष्टान्तः) 'पर्वतो-वह्निमान्,—धूमादि'तिस्थले 'पर्वतो वह्निमा' नित्यनुमितिः । तत्र 'यत्र यत्र धूमस्तत्र तत्र वह्नि'रितिव्याप्तिज्ञानं कारणम्, तादृशव्याप्तिज्ञानस्य विघटिका यदि—'हेतुरस्तु साध्यं मास्त्वि'ति–('धूमो वह्निव्यभिचारी न वे') त्याकारिकाऽऽशंका भवेत् तदा तन्नाशाय "धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्या'दिति तर्कः कर्तव्यः । तर्के प्रथमं दलं—आपादकं द्वितीयं दलं—आपाद्यम्, आपाद्याभावेन आपादकाऽभावस्य सिद्धिर्भवति तदेव तर्कस्य फलम्, वह्नि-जन्यत्वाऽभावाऽभावेन ( वह्निजन्यत्वेन ) वह्निव्यभिचारित्वाभावस्य ( वह्निव्याप्तिनिश्चयस्य ) सिद्धिर्भवति। अतो वह्निव्याप्तिज्ञाने तादृशाशङ्काविघटनद्वारा तर्कः उपयोगीति । तर्के च 'धूमं प्रति वह्निः कारण' मिति—वह्निजन्यत्वनिश्चयः कारणम् । निश्चये च 'वह्निसत्त्वे धूमसत्त्वे' वह्न्यभावे धूमाभाव' इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम् । तथा चाऽन्वयसहचारग्रहं विना कार्यकारणभावनिश्चयो न भवति, निश्चयं विना तर्को नोत्पद्येत, तर्कं विना शङ्का न नश्यति, शङ्कानाशं विना व्याप्तिज्ञानं न सुस्थिरम्, तथा सत्यनुमितिर्न स्यात्, अतोऽन्वयव्यति-रेकाभ्यां कार्यकारणभावनिश्चयः कर्तव्य इति हृदयम्। तथा प्रकृते 'सुवर्णं–अपार्थिवम्'; असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्यमानजन्यद्रवत्ववत्त्वात्, यत्र साध्यं नास्ति तत्र हेतुर्नास्ति यथा पार्थिवं घृतम्, इत्यनुमानम् । 'सुवर्णं–अपार्थिवम्' इत्यनुमितिः । तत्र 'यत्र अपार्थिवत्वं नास्ति तत्र असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्ववत्त्वं नास्ति' इति व्यतिरेकव्याप्तिज्ञानं कारणम् । व्यतिरेकव्याप्तिः–'साध्याऽभावव्यापकीभूताऽभाव-प्रतियोगित्व'रूपा। साध्याभावः–अपार्थिवत्वाभावः पार्थिवत्वरूपः, तद्व्यापकीभूतोऽभावो हेत्वभावः–अनुच्छिद्यमानजन्यद्रवत्ववत्त्वाऽभावः–उच्छिद्यमानजन्यद्रवत्वरूपः, तत्प्रतियोगित्वं अनुच्छिद्यमान-जन्यद्रवत्ववत्त्वे–इति। तत्र यदि तादृशनिश्चयविघटिका 'अपार्थिवत्वं माऽस्तु'='अनुच्छिद्यमा-नजन्यद्रवत्वमस्तु=अनुच्छिद्यमानजन्यद्रवत्वं अपार्थिवत्वव्यभिचारि न वे'ति शङ्का भवेत् तदा तन्नाशाय "असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्यमानजन्यद्रवत्वं यदि अपार्थिवत्व-व्यभिचारि स्यात् तदाऽसति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति नाश्यं स्यात्" इति तर्कः कर्तव्यः। तर्के–आपाद्याभावेन आपादकाऽभावस्य सिद्धिः फलं, यथा 'असति प्रतिबन्धकेऽत्यन्तानलसंयोग-विशिष्टनाश्यत्वाऽभावेन ( आपाद्याभावेन ) अपार्थिवत्वव्यभिचारित्वाऽभावस्य आपादकाभावस्य सिद्धिर्भवति, अतोऽपार्थिवत्वव्याप्तिज्ञाने तादृशाऽऽशङ्काविघटनद्वारा तर्कः उपयोगी । तर्के च 'पार्थिवद्रवत्वनाशं प्रति असति प्रतिबन्धकेऽत्यन्तानलसंयोगः कारण'मिति कार्यकारणभावनिश्चयः कारणम्। निश्चये च प्रत्यक्षतः–'अपार्थिवत्वसत्त्वे–असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सति अपार्थिवद्रवत्वाऽनाशः, ( पार्थिवद्रवत्वनाशः ), अपार्थिवत्वाभावसत्त्वे च प्रतिबन्धकाऽसमवहिते

पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात्। सुवर्णस्य अत्यन्तानल-संयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः। तस्मात् पीतद्रव्य-द्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जल-त्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात् तैजसत्वसिद्धिः। तस्योष्णस्पर्शभास्वर-रूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धात् अनुपलब्धिः। तस्मात् सुवर्णं तैजसमिति सिद्धम्।

---

घृतादावत्यन्तानलसंयोगे सति अनुच्छिद्यमानजन्यद्रवत्वनाशसत्त्वं—'ननु सति प्रतिबन्धके जलगत-घृतादौ' इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम्। तादृशसहचारज्ञानात् कार्यकारणभावनिश्चयात् तर्कः, तर्कात् शंकानाशः, शंकानाशात् व्याप्तिनिश्चयः, निश्चयाच्च 'सुवर्णं—अपार्थिव'मित्यनुमितिः सुदृढा भवति। अतः 'सुवर्णं—अपार्थिवमिति साधयिष्यन् तादृशानुमाने व्यभिचारशंकावारकतर्क-मूलभूतस्य कार्यकारणभावनिश्चयस्य सम्पादकमन्वयव्यतिरेकसहचारं दर्शयति—**'अत्यन्तानल-संयोगे सतीत्यादिना द्रवत्वनाशाऽदर्शनेनेत्यन्तेन**॥ अन्वयव्यतिरेकसहचाराकारौ तु पूर्वं दर्शितावेव। अनलसंयोगेऽत्यन्तत्वविशेषणं—यत्किञ्चिदनलसंयोगसमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणायेति। पार्थिवद्रवत्वनाशाऽग्निसंयोगयोः कार्यकारणभावाऽवधारणं तर्कं च दर्शयति—**'असतीत्यादिना कार्यकारणभावावधारणादित्यन्तेन**। तर्काकारस्तूपरि दर्शित एव। अनुमानं दर्शयति—**सुवर्णस्येत्यादिना—पार्थिवत्वानुपपत्तेरित्यन्तेन**। आकारस्तु पूर्वं दर्शित एव। तथा च सुवर्णेऽपार्थिवत्वसिद्धौ पूर्वपक्षिणा कृतं पार्थिवत्वसाधकाऽनुमानं खण्डितमेवेति बोध्यम्। सुवर्णे पार्थिवभागोपष्टम्भेन तत्र चाऽत्यन्ताऽनलसंयोगे सत्यपि पार्थिव-द्रवत्व पीतरूपयोरनुच्छिद्यमानत्वेन तत्प्रतिबन्धकीभूतं तैजसं द्रवद्रव्यान्तरं साधितं भवतीति दर्शयति— **तस्मादिति**। तस्मात्—सुवर्णस्याऽपार्थिवत्वसाधनादित्यर्थः। पीतद्रव्यं पृथिव्यात्मकं तस्य द्रवत्वस्य नाशं प्रति प्रतिबन्धकतया। **द्रवद्रव्यान्तरसिद्धाविति**। तथा चानुमानं—'अत्यन्तानलसंयोगी पीतिमगुरुत्वाश्रयः—द्रवत्वनाशविजातीयरूपप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः,—अत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वपीतिमाऽधिकरणत्वे सति गुरुत्वात्, जलमध्यस्थपीत-**घृतादिवदिति**॥ ननु सुवर्णेऽपार्थिवत्वसाधनेऽपि जलीयं वायवीयादिकं वा सुवर्णं कथं न भवे-दित्याशङ्कां निरस्यति—**नैमित्तिकेति** ॥ **जलत्वाऽनुपपत्तेरिति**। जले तु सांसिद्धिकमेव द्रवत्वं न तु नैमित्तिकमिति भावः। अनुमानम्—'सुवर्णं—न जलीयम्,—नैमित्तिकद्रवत्व-वत्त्वात्, घृतवत्॥ **रूपवत्तयेति**। सुवर्णं—न वाय्वाद्यात्मकम्,—रूपवत्त्वात्, घटवदिति। अत एव शेषतः—'सुवर्णं—तैजसम्,—असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्य-मानजन्यद्रवत्वाधिकरणत्वादितिरीत्या तैजसत्वसिद्धिरिति ॥ ननु तैजसे सुवर्णे कथमुष्णस्पर्शस्य भास्वररूपस्य च नोपलब्धिरित्याकाङ्क्षायामाह—**तस्योष्णेति**। सुवर्णे उष्णस्पर्शस्य पार्थिव-स्पर्शेनाभिभवात् शुक्लरूपस्य च पार्थिवरूपेणाऽभिभवादनुपलब्धिरिति भावः॥

रूपरहितः स्पर्शवान् वायुः ॥ स द्विविधः-नित्योऽनित्यश्च ॥ नित्यः--परमाणुरूपः ॥ अनित्यः--कार्यरूपः ॥ पुनस्त्रिविधः--शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकंत्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुःप्राणः । स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसंज्ञां लभते ॥

(न्या०) एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति-रूपरहितइति। रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । 'सति'सप्तम्या विशिष्टार्थकतया (१) 'रूपरहितत्वविशिष्टस्पर्शवत्त्वं' वायोर्लक्षणम् । विशेषणांऽशाऽनुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तत्राऽपि स्पर्शवत्त्वसत्त्वात्, अतस्तद्वारणाय–विशेषणोपादानम् । (२) तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वसत्त्वात्, अतस्तद्वारणाय–विशेष्योपादानम् । अतिव्याप्तिर्नाम–'अलक्ष्ये लक्षणसत्त्वम्' । यथा–गोः 'शृङ्गित्वं' लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । अव्याप्तिर्नाम–'लक्ष्यैकदेशाऽवृत्तित्वम्', लक्ष्यैकदेशे = लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये,–लक्षणाऽसत्त्वमव्याप्तिरित्यर्थः, यथा–गो'र्नीलरूपवत्त्वं' लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात् । असम्भवो नाम–'लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्' यथा–गोरेकशफवत्त्वं लक्षणं कृतं चेत् ! गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वात् । अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानि–तु (३) लक्ष्यतावच्छेदकसामानाधिकरण्ये

---

(१) सामानाधिकरण्यसम्बन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाऽभावविशिष्टस्पर्शवत्त्वमिति पाठान्तरम् । (२) 'रूपरहितत्व'मात्रस्य लक्षणत्वे इत्यर्थः ॥

(३) गोः'शृङ्गित्वं' लक्षणं अतिव्याप्तिग्रस्तम्, तत्र लक्ष्या=गौः,लक्ष्यतावच्छेदकं=गोत्वम्, तत्सामानाधिकरण्ये सति=तस्य-गोत्वस्य अधिकरणे–गवि वर्तमानत्वे सति, लक्ष्यतावच्छेदक—गोत्वाऽवच्छिन्ना प्रतियोगिता यस्य सः=तादृशो भेदः—'गोत्वावच्छिन्नं ने'त्याकारकः, स च महिष्यादौ वर्तते, तत्सामानाधिकरण्यं=तदधिकरणवृत्तित्वं, तच्च शृङ्गित्वे वर्तते—इति भावः ॥

सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्–अतिव्याप्तिः। अव्याप्तिस्तु–(१) लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। असम्भवस्तु–(२) लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्॥

(प०) रूपेति। घटादिवारणाय—विशेषणम्। आकाशादिवारणाय–विशेष्यम्। इन्द्रियमिति। चक्षुरादिवारणाय—स्पर्शग्राहकमिति। कालादावतिव्याप्तिवारणाय—इन्द्रियमिति। वृक्षेति। आदिपदेन जलादिपरिग्रहः। शरीरान्तरिति। महावाय्वादावतिव्याप्तिवारणाय—विशेषणम्। 'मन' आदिवारणाय–विशेष्यम्। (३) धनञ्जयवारणाय–संचारीति। उपाधीति। मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः, जलादेरधोनयनादपानः, भुक्तपरिणामाय जाठरानलस्य समुन्नयनात्समानः, अन्नादेरूर्ध्वनयनादुदानः, नाडीमुखेषु वितननाद्व्यानः, इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः॥

(दी०) वायुं निरूपयति—रूपरहितेति। आकाशादावतिव्याप्तिवारणाय-स्पर्श-

---

(कि०) **वायुं निरूपयतीति**—लक्षणस्वरूपप्रमाण्यादिप्रकारकज्ञानाऽनुकूलव्यापारो निरूपयतेरर्थः। तथा च वायुनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः॥ **मूले रूपरहितेति**। समवायेन रूपानधिकरणत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। स्पर्शोऽपाकजोऽनुष्णाशीतो बोध्यः। कालादिवारणाय–समवायेनेति। पृथिव्यादित्रिकवारणाय–रूपानधिकरणत्वे सतीति। गगनादेर्वारणाय–स्पर्शवत्त्वमिति। उत्पन्नविनष्टे द्रव्ये वायावव्याप्तिवारणाय–रूपरहितत्वविशिष्टस्पर्शवद्वृत्तिद्रव्यत्वापर–जातिमत्त्वं बोध्यम्। द्रव्यत्वादिकमादाय–पृथिव्यादावतिव्याप्तिवारणाय–द्रव्यत्वापरेति। नित्योऽनित्यश्चेति पूर्ववत्। पुनस्त्रिविधमपि–प्रकारान्तरेण त्रिविधमित्यर्थकम्। **वायुलोक-इति**। वायवीयशरीरमयोनिजं भूतप्रेतपिशाचादीनाम्। लक्षणानि–रूपरहितत्वविशिष्टस्पर्शवच्छरीरं–वायवीयशरीरम्, रूपरहितत्वविशिष्टस्पर्शवदिन्द्रियं–वायवीयेन्द्रियम्, रूपरहितत्वविशिष्टस्पर्शवान् विषयो–वायवीयविषय इति। इन्द्रियमिति–स्पर्शग्राहकमिति प्रयोजनकथनम्, त्वगिति—संज्ञा, सर्वशरीरवर्तीति–स्थानकथनम्। त्वचो वायवीयत्वेऽनुमानम्–'त्वक्–वायवीयम्,–रूपादिषु मध्ये स्पर्शस्यैवाऽभि-

---

(१) लक्ष्यतावच्छेदक-गोत्वस्य अधिकरणे शुक्लगवि वर्तमानो यः 'कपिलत्व' लक्षणस्याऽत्यन्ताभावस्तत्प्रतियोगित्वं कपिलत्वे-वर्तते इति भावः। (२) लक्ष्यतावच्छेदकगोत्वस्य व्यापको यः एकशफवत्त्वस्य अभावः तत्प्रतियोगित्वं एकशफवत्त्वे वर्तते॥ व्यापकत्वञ्चात्र यत्र गोत्वं तत्रैकशफवत्त्वाभाव इत्येवं बोध्यं इति भावः।

(३) वस्तुतस्तु–धनञ्जयस्य प्राणत्वेन लक्ष्यत्वात् तत्राऽतिव्याप्तिदानमनुचितमिति, किन्तु मृतशरीरे प्राणत्वरहिते धनञ्जयत्वेनाऽभिमते वायावतिव्याप्तिवारणाय 'सञ्चारी'ति बोध्यम्॥

वानिति। पृथिव्यादावतिव्याप्तिवारणाय–रूपरहितेति। ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह—शरीरेति। स चेति। एक एव प्राणः स्थानभेदात् प्राणापानादि-शब्दैर्व्यवह्रियत इत्यर्थः। स्पर्शानुमेयो वायुः। तथा हि–'योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते, 'स स्पर्शः–क्वचिदाश्रितः–गुणत्वात्, रूपवत्'। न चास्य पृथिवी आश्रयः, उद्भूतस्पर्शवतः पार्थिवस्योद्भूतरूपवत्त्वनियमात्। न जलतेजसी,

---

व्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याऽभिव्यञ्जकव्यञ्जनपवनवत्' ॥ अन्ये—तु 'इन्द्रियं स्पर्श-ग्राहकमिति लक्षणम्, चक्षुरादिवारणाय–स्पर्शग्राहकमिति। त्वक्संयुक्तसमवायेऽतिव्याप्तिवारणाय–इन्द्रियमिति विवेचयन्ति॥ वृक्षादीति। आदिना जलवह्न्यादिपरिग्रहः॥ शरीरेति। तथा च प्राणस्य विषयेऽन्तर्भाव इति। शरीरान्तःसञ्चारित्वे सति वायुत्वं प्राणलक्षणम्। महावाय्वादि-वारणाय–शरीरान्तःसञ्चारीति। मनोनाडीपुञ्जादिवारणाय–वायुत्वमिति। मृतशरीरस्थस्य प्राणत्वं विहाय धनंजयत्वेनाऽभिमतस्य वायोः सर्वशरीरव्याप्यत्वेन सञ्चरणाऽभावाद् तद्वारणाय–सञ्चारीति॥ स्थानभेदादीति। 'हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः' इति स्थानभेदः। क्रियाभेदो यथा–मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः, मलादीनामधोनयनादपानः, भुक्तस्य पाकार्थं जाठराग्नेः समुन्नयनात् समानः, रसादेरूर्ध्वनयनादुदानः, नाडीमुखेषु वितननाद्व्यानः' ॥ वायुत्वजातिः–विजातीयस्पर्श-समवायिकारणतावच्छेदकतया सिद्ध्यति। यथा 'समवायसम्बन्धावच्छिन्नजन्यविजातीयस्पर्शत्वा-वच्छिन्नविजातीयस्पर्शनिष्ठकार्यतानिरूपिताऽनित्यवायुनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारण-तात्वात्' इत्यनेनाऽनित्यवायुत्वस्य जातित्वसिद्धौ सत्यां ततः–'समवायसम्बन्धावच्छिन्नाऽनित्यवायु-त्वावच्छिन्नाऽनित्यवायुनिष्ठकार्यतानिरूपितवायुनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वात्' इत्य-नुमानेन सामान्यतो वायुत्वजातिसिद्धिः। दीपिकायां–स्पर्शोऽनुमेयो वायुरिति। विजातीय-स्पर्शेन अनुमेय इत्यर्थः। प्रथमं वायुस्पर्शस्य प्रत्यक्षत्वं दर्शयति—योऽयमिति। 'वायुवाने सति अपाकजाऽनुष्णाऽशीतस्पर्शप्रतीतिसत्त्वम्, वायुवानाऽभावे सति तादृशस्पर्शप्रतीत्यसत्त्वं' इत्यन्वय-व्यतिरेकाभ्यां स्पार्शनप्रतीतिविषयतया स्पर्शः सिद्ध एव, तादृशस्पर्शं पक्षीकृत्याऽनुमानं दर्शयति—'सः स्पर्श' इति। अपाकजोऽनुष्णाशीतस्पर्श इत्यर्थः। एतदनुमानेन सामान्यतः क्वचिदाश्रितत्वसाधने तादृशस्पर्शस्य नवद्रव्याश्रितत्वमपि स्यात्? न स्यादित्याह—न चेति। अस्य=विजातीयस्पर्शस्य। पृथिवीवृत्त्युद्भूतस्पर्शस्तु–उद्भूतरूपव्यापकः, अयं विजातीयस्पर्शस्तु उद्भूतरूपं विनाऽप्युपलभ्यते, अत एव न पार्थिवः तथा चाऽनुमानम्—'विजातीयस्पर्शः—न पृथिव्याश्रितः,–उद्भूतरूपं विनाऽपि उपलब्धिविषयत्वात्, शब्दवत्। अथवा–पृथिवी—निरुक्तस्पर्शवद्भिन्ना,—उद्भूतरूपवत्त्वात्, जलवत्॥ न जलतेजसीति। न चाऽस्याऽऽश्रये इति पूरणीयम्, तथा च–विजातीयस्पर्शः—न जलाश्रितः,—शीतभिन्नस्पर्शत्वात्, उष्णस्पर्श-वत्। विजातीयस्पर्शः–न तेजआश्रितः,–उष्णभिन्नस्पर्शत्वात्, शीतस्पर्शवदिति। अथवा-

अनुष्णाशीतत्वात् । न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात् । न मनः, परमाणु-स्पर्शस्यातीन्द्रियत्वात् । तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः । ननु 'वायुः–प्रत्यक्षः—प्रत्यक्षस्पर्शाश्रयत्वात्, घटवत्' इति चेत् ! न, उद्भूतरूपवत्त्वस्योपाधि-त्वात् । यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति घटादौ साध्यव्यापकत्वम् । यत्र 'प्रत्यक्षस्पर्शाऽऽश्रयत्वं' तत्र उद्भूतरूपवत्त्वं

---

विजातीयस्पर्शः,—न जलतेजआश्रितः,—अनुष्णाशीतस्पर्शत्वात्, पृथिवीस्पर्शवदिति । **न विभुचतुष्टयमिति** । नाऽस्याऽऽश्रयमितिपूरणीयम् । 'विजातीयस्पर्शः—न गगनकालदिगा-त्माश्रितः, सर्वकालीनोपलब्ध्यविषयत्वात् ॥ अत्र यदि 'हेतुरस्तु साध्यं मास्त्वि'ति शङ्का स्यात् तदा तद्विघटकस्तर्क उन्नेय इति ज्ञापनार्थं आपाद्यदलं लिखति—सर्वदोपलब्धिप्रसङ्गादिति । प्रसङ्गः—आपत्तिः । तथा च 'यदि विजातीयस्पर्शः व्याप्यवृत्तित्वे सति विभुपदार्थाश्रितः स्यात् तदा सर्वत्र सर्वकालीनोपलब्धिविषयः स्यादिति ॥ न च सर्वकालीनत्वेन सर्वत्रोपलभ्यते अतो न व्याप्यवृत्तित्वे सति विभुचतुष्टयाऽऽश्रित इति भावः । 'व्याप्यवृत्तित्व'दलं यावद्द्रव्यभावित्वप्रदर्शनाय ॥ **न मन इति** । विजातीयः स्पर्शः–न मनआश्रितः, बहिरिन्द्रियग्राह्यत्वात्, लौकिकप्रत्यक्षविषयत्वाद्वा, 'घटस्पर्शवदि'ति, स यदि मनोवृत्तिः स्यात् तदा परमाणुरूपमनोवृत्तित्वेनातीन्द्रियः स्यात, न चायमतीन्द्रिय अतो न मनआश्रित इति–भावः ॥ **तस्मादिति** । अष्टद्रव्याऽनाश्रितत्वादित्यर्थः ॥ **स वायुरिति** । विजातीयस्पर्शः—अष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्याऽनाश्रितत्वे सति द्रव्याश्रितत्वात्' इति परिशेषाद्वायुः सिद्ध्यतीति भावः । वायोः प्रत्यक्षस्पर्शवत्त्वेन त्वगिन्द्रियप्रत्यक्षविषयत्वमपि भवेदिति–पूर्वपक्षयति–**ननु वायुरिति** ॥ निरुक्तहेतोः सोपाधिकत्वेन व्याप्यत्वासिद्धत्वमित्युत्तरयति—**नेति** । उपाधित्वादिति । साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः, ।'स च त्रिविधः–केवलसाध्य-व्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति.। अत्र चोपाधिः पक्ष-धर्मावच्छिन्नसाध्यव्यापको बोध्यः । उद्भूतरूपवत्त्वे तादृशसाध्यव्यापकत्वं दर्शयति–**यत्र द्रव्यत्वे-सतीति** । द्रव्यत्वं=पक्षस्य वायोर्धर्मः, तदवच्छिन्नं साध्यं–द्रव्यत्वावच्छिन्नबहिरिन्द्रियप्रत्यक्षत्वं, तच्च यत्र घटादौ तत्र उद्भूतरूपवत्त्वं वर्तते इति उद्भूतरूपवत्त्वस्य साध्यव्यापकत्वम् ॥ साधना-व्यापकत्वं दर्शयति—**पक्षे इति** । पक्षे=वायौ साधनं=प्रत्यक्षस्पर्शाश्रयत्वं वर्तते, तत्र उद्-भूतरूपवत्त्वं नास्तीति साधनाऽव्यापकत्वम् । उपाधिमत्त्वं हेतौ स्वव्यभिचारित्वसम्बन्धेन बोध्यं, तेन सोपाधिको हेतुर्व्याप्यत्वाऽसिद्धो भवतीति भावः । हेतौ–उपाधिव्यभिचारेण साध्यव्यभिचा-रानुमानं फलम्, प्रकृते 'प्रत्यक्षस्पर्शाश्रयत्वरूपो हेतुः–प्रत्यक्षत्वात्मकसाध्यव्यभिचारी,–द्रव्यत्वाव-च्छिन्नबहिरिन्द्रियप्रत्यक्षत्वात्मकसाध्यव्यापकोद्भूतरूपवत्त्वात्मकोपाधिव्यभिचारित्वादिति । तथा च हेतौ साध्यव्यभिचारे गृहीते सति साध्यव्याप्तिज्ञानं नोत्पद्यते–अतो'वायुः–प्रत्यक्षः, इत्यनुमितिर्न भवत्येवेति भावः । शंकते–**न चैवमिति** । प्रत्यक्षस्पर्शाश्रयस्योद्भूतरूपाऽभावेन प्रत्यक्षत्वाऽनङ्गीकारे

नास्ती'ति पक्षे साधनाव्यापकत्वम् । न चैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः । इष्टत्वात् । तस्मात् रूपरहितत्वात् वायुरप्रत्यक्षः । इदानीं कार्यरूपपृथिव्यादि-चतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते । ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते । ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते । त्रिभिर्द्व्यणुकैः त्र्यणुकम् । एवं चतुरणुकादिक्रमेण महती पृथिवी, महत्य आपः, महत् तेजः, महान्वायुः उत्पद्यते । एवमुत्पन्नस्य कार्यद्रव्यस्य सञ्जिहीर्षावशात् परमाणुषु क्रिया । क्रियया परमाणुद्वयविभागे सति द्व्यणुकस्य नाशः । ततस्त्र्यणुकस्य, ततश्चतुरणुकस्य, इत्येवं महापृथिव्यादिनाशः । असमवायिकारणनाशाद् द्व्यणुकनाशः । समवायिकारणनाशाद् त्र्यणुकनाश इति सम्प्रदायः । सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः । किं पुनः परमाणुसद्भावे प्रमाणम्? उच्यते । जालसूर्यमरीचिस्थं सूक्ष्मतमं

---

तप्तसलिलस्थतेजसोऽप्युद्भूतरूपाऽभावादप्रत्यक्षत्वाऽऽपत्तिरिति भावः ॥ उत्तरयति–**इष्टत्वादिति** । तादृशं तेजोऽप्रत्यक्षं तत्स्पर्शस्तु प्रत्यक्षो भवत्येवेति भावः । उपसंहरति–**तस्मादिति** । अस्यैव विवरणं 'रूपरहितत्वादि'ति । **बौद्धः** शंकते–ननु परमाणुपुञ्ज एव घटपटादयः, न तु पुञ्जाऽति-रिक्ता अवयविनो वर्तन्ते, तथा च पृथिव्यादिचतुष्टयस्य नित्याऽनित्यादिविभागोऽनुचित–**इति** । तादृशाऽऽशंकावारणाय अवयवाऽवयविविभागप्रदर्शनेन सृष्टिप्रलयौ प्रदर्शयति–**इदानीमिति** । पृथिव्यादिचतुष्टयनिरूपणाऽनन्तरमित्यर्थः ॥ **ईश्वरस्येति** । सृष्टिपूर्वं परमेश्वरस्य कृतिसाध्य-विषयिणी–'एकोऽहं बहु स्यां प्रजायेय' 'एकाकी न रमते स द्वितीयमैच्छत्' 'तदैक्षत बहु स्यां' इत्यादिश्रुतिबोधिता या नित्येच्छा तद्वशात् वायवीयपरमाणुषु क्रिया भवतीति । अन्यत् सरलम् ॥ प्रलयं दर्शयति–**एवमिति** । संहर्तुमिच्छा=संजिहीर्षा, तद्वशात् परमाणुषु विभागाऽनुकूला क्रिया भवतीति । अन्यत् सरलम् । **असमवायिकारणनाशादिति** । परमाणुद्वयसंयोगस्य नाशादित्यर्थः ॥ **समवायिकारणनाशादिति** । द्व्यणुकस्य नाशादित्यर्थः ॥ सम्प्रदायः= प्राचीनाः ॥ **सर्वत्रेति** । नवीनास्तु–सर्वकार्यद्रव्यस्य द्व्यणुकादेरसमवायिकारणसंयोगनाशा-देव नाश इति वदन्ति । तथा च घटाद्यवयविनां सिद्धौ परमाणुपुञ्जो निरस्त एवेति ॥ चार्वाकाः शङ्कन्ते–प्रत्यक्षातिरिक्तं किमपि नास्ति, तथा च द्व्यणुकपरमाणूनामपि सर्वथा खपुष्पवदसत्त्व-मेवेति परमाणुसद्भावे किं पुनः प्रमाणं ? न किमपीति ॥ उत्तरं—**उच्यते–इति** । यद्—दृश्यते । रज इति शेषः । तत्=त्रसरेणुः । स एव पक्षः । साध्यं–सावयवत्वम् । अवयव-समवेतत्वमिति तदर्थः । चाक्षुषद्रव्यत्वादिति हेतुः । लौकिकचाक्षुषप्रत्यक्षविषयत्वे सति द्रव्यत्वा-दित्यर्थः, तेन न 'ज्ञातो घट'इत्याकारकाऽलौकिकचाक्षुषविषये ज्ञाने व्यभिचारः ॥ रूपादौ व्यभिचारवारणाय–द्रव्यत्वोपादानम् । आत्मादौ व्यभिचारवारणाय सत्यन्तम् ॥ न चाऽत्र 'चाक्षुषद्रव्यत्वमस्तु साऽवयवत्वं मास्त्वि'ति अप्रयोजकत्वशंका स्यात्, यतः–'चाक्षुषद्रव्यत्वं यदि साऽवयवत्वव्यभिचारि स्यात् तर्हि साऽवयवत्वप्रयोज्यतावच्छेदकं न स्यादि'ति तर्केण

यद् रजो दृश्यते 'तत्–सावयवं–चाक्षुषद्रव्यत्वात्,—पटवत्। 'त्र्यणुकावयवोऽपि–सावयवः,–महदारम्भकत्वात्,–तन्तुवत्। यो द्व्यणुकावयवः स एव परमाणुः। स च नित्यः, तस्याऽपि कार्यत्वेऽनवस्थाप्रसङ्गात्। तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः। सृष्टिप्रलयसद्भावे 'धाता यथापूर्वमकल्पयत्' इति श्रुतिः प्रमाणम्। सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः। सर्वभावकार्यध्वंसो महाप्रलयः। इति विवेकः।

---

तादृशाऽऽशंकाया विघटनसंभवात्॥ **त्र्यणुकाऽवयवोऽपी**ति। द्व्यणुक इत्यर्थः। सावयवः=अवयवसमवेतः। महतः=त्रसरेणोः। आरंभकत्वात्=जनकत्वात्। स 'परमाणुरि'ति संज्ञकः॥ **नित्य**—एति। ध्वंसाऽप्रतियोगी सन् प्रागभावाऽप्रतियोगीत्यर्थः॥ **कार्यत्वे**—इति। अनित्यत्वे तु तस्याऽपि कारणाऽन्तरमेवं तस्यापि पुनस्तस्यापीत्यनवस्थाभिया तत्रैव नित्यता स्वीकृता। किञ्च–अवयवधारायाः कुत्रचित्कदाचिदपि विश्रामाऽभावे मेरोरवयवधारायाः सर्षपाऽवयवधारायाश्चाऽनन्तत्वेन मेरुसर्षपयोरपि तुल्यपरिमाणाऽऽपत्तिः स्यात्॥ **यथा पूर्वमिति**। तादृशश्रुत्या मध्ये जगतो विनाशः, तत उत्पत्तिरित्यादिना प्रलयोऽपि व्यञ्जितः॥ **सर्वकार्येति**। यत्किञ्चिद्द्रव्यध्वंसस्येदानीमपि सत्त्वात् इदानींकालस्य वारणाय–**सर्वेति** नित्यद्रव्याणां ध्वंसाऽसंभवात्–कार्येत्युक्तम्। परमाणुनिष्ठरूपादीनामवान्तरप्रलये सत्त्वात्–द्रव्येति। **सर्वभावेति**। ध्वंसानां ध्वंसाऽसंभवेन महाप्रलयेऽपि सत्त्वात्–भावेति। नित्यभावानां विनाशाऽसंभवात्–कार्येति। यत्किञ्चिद्भावकार्यध्वंसस्येदानीमपि सत्त्वात्–सर्वेति॥

## शब्दगुणकम्–आकाशम्। तच्चैकं विभु नित्यं च॥

(न्या०) आकाशं लक्षयति–शब्दगुणकमिति। अत्र गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय, न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् (रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः। बुद्ध्यादि-भावनाऽन्ताश्च शब्दो वैशेषिका गुणाः)। तच्चैकमिति। अनेकत्वे मानाभावादिति भावः। विभ्विति। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम्। मूर्तत्वं च क्रियावत्त्वम्। पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि। पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं भूतपदवाच्यम्। भूतत्वं नाम–(१) बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्॥

---

(१) बहिरिन्द्रियाणि—श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि पञ्च, क्रमशस्तद्ग्राह्या विशेषगुणाः शब्द–स्पर्श–रूप–रस–गन्धाख्याः पञ्च, क्रमशस्तद्वत्त्वं आकाशाऽनिलाऽनलसलिलाऽवनिषु इति लक्षणसमन्वयः॥ तथा च लौकिकसन्निकर्षप्रयोज्या या बहिरिन्द्रियजन्यप्रत्यक्षीयविषयता तादृशविषयतावच्छेदकधर्मवद्विशेषगुणवत्त्वं भूतत्वमिति फलितार्थः॥

( प० ) शब्देति । शब्दो गुणो यस्य तत्तथा । असम्भववारणाय–'शब्द'-'गुणे'त्यभयुम् । विभ्विति । सर्वमूर्त्तद्रव्यसंयोगि ॥

(दी०)आकाशं लक्षयति-शब्दगुणकमिति । ननु किम्आकाशं पृथिव्यादिवन्नाना ? नेत्याह—तच्चैकमिति । भेदे प्रमाणाभावादित्यर्थः । एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमङ्गीकर्तव्यमित्याह—विभ्विति । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं क्रियावत्त्वं वा । विभुत्वादेव आत्मवत् नित्यत्वमित्याह—नित्यं चेति ।

---

(कि०) मूले–शब्दगुणकमिति । शब्दो गुणो यस्य तत् तथा, शब्दस्य भट्टनये द्रव्यत्वात् तन्निरासाय–गुणपदम् । समवायेन शब्दवत्त्वमात्रस्योचितत्वेऽपि गगने शब्दात्मकविशेषगुणज्ञापनाय—गुणपदमिति केचित् ॥ एकव्यक्तिवृत्तित्वादाकाशत्वं न जातिः, किन्तु आकाशत्वं अखण्डोपाधिरिति बोध्यम् ॥ नन्वाकाशस्य द्रव्यत्वे किं मानम् ? इति चेन्न । तत्र शब्दगुणकत्वस्यैव प्रमाणत्वात्, 'शब्दो–गुणः–अनित्यत्वे सत्येकेन्द्रियग्राह्यतावच्छेदकजातिमत्त्वात्, रूपवत्, इत्यनेन शब्दे गुणत्वसिद्धौ–'शब्दः–न पृथिव्यादिचतुष्टयाऽऽधारकः–श्रोत्रेन्द्रियग्राह्यत्वात्, शब्दत्ववत्'इत्यनेन पृथिव्यादिगुणत्वनिषेधे–'शब्दो–न कालादीनां गुणः–बहिरिन्द्रियग्राह्यत्वात्,–रूपवत्'इत्यनेन कालादिगुणत्वनिषेधे च—'शब्दः–अष्टद्रव्यातिरिक्तद्रव्याश्रितः,–अष्टद्रव्याऽनाश्रितत्वे सति गुणत्वात्,–इति परिशेषेण गगनात्मकाऽऽश्रयसिद्धेः ॥ आकाशं लक्षयतीति । असाधारणधर्मप्रकारकज्ञानाऽनुकूलव्यापारो हि लक्षयतेरर्थः । आकाशाऽसाधारणधर्मः शब्द एव, तथा च 'आकाशवृत्त्यसाधारणधर्मप्रकारकज्ञानाकूलव्यापारवान् मूलकार' इत्यर्थः ॥ आकाशस्य–'घटाकाश'–'मठाकाश'–इति प्रतीतिबलान्नानात्वं शङ्कते—ननु किमिति । उत्तरयति—नेत्याहेति । घटाकाशादिव्यवहारस्योपाधिकृतत्वेनाऽसाधकत्वादेकमाकाशमिति ॥ तस्याऽनेकत्वे प्रमाणं नास्तीत्याह—भेदे-इति ॥ एकत्वादेवेति । आकाशस्येति शेषः ॥ सर्वत्रेति । सर्वदिगवच्छेदेनेत्यर्थः ॥ उपलब्धेः शब्दवत्त्वेन सत्त्वनिश्चयादित्यर्थः ॥ सर्वमूर्तेति । पृथिवीजलतेजोवायुमनसां मूर्तद्रव्याणां संयोगाऽनुयोगित्वमित्यर्थः ॥ मूर्तत्वं निरूपयति–परिच्छिन्नपरिमाणवत्त्वमिति । उत्पत्तिकालीनघटादावव्याप्तिमाशंक्य–आह—क्रियावत्त्वमिति क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः, तेन नोत्पत्तिकालीनघटादावव्याप्तिरिति ॥ नित्यत्वमिति । 'आकाशं-नित्यं-विभुत्वात्, आत्मवत्'इति । आकाशस्य शरीरविषययोरभावः, इन्द्रियं तु कर्णशष्कुल्यवच्छिन्नं नभः–श्रोत्रम्, तच्छब्दग्राहकत्वेनाऽऽकाशमिति । ननु लाघवादेकमाकाशं कथं श्रोत्रात्मकं सत् पुरुषभेदाद्भिन्नमिति चेन्न । उपाधेः कर्णशष्कुल्यादेर्भेदाद्भेदव्यपदेशस्य सर्वसिद्धत्वात् ॥

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

( न्या० ) कालं लक्षयति—अतीतेति । व्यवहारहेतुत्वस्य लक्षणत्वे 'घट'—इति(१)व्यवहारहेतुभूतघटादावतिव्याप्तिः, तद्वारणाय—'अतीतादी'तिविशेषणोपादानम् ॥

(प०) अतीतेति । (२) 'अतीत'इत्यादिर्यो व्यवहारः—'अतीतो भविष्यन्वर्तमान'इत्यात्मकस्तस्याऽसाधारणहेतुः काल इत्यर्थः । नन्विदं लक्षणमाकाशेऽतिव्याप्तं, व्यवहारस्य शब्दात्मकत्वादिति चेत् ! न । अत्र हेतुपदेन निमित्तिहेतोर्विवक्षितत्वात् । न चैवं कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम्, विभुत्वस्यापि निवेशात् ॥

(दी०)कालं लक्षयति—अतीतेति । सर्वाधारः कालः सर्वकार्ये निमित्तकारणं च।

---

(कि०) मूले—**अतीतेति** । कालः=लक्ष्यः । 'विभुत्वे सति अतीतादिव्यवहाराऽसाधारणनिमित्तहेतुत्वमि'ति लक्षणम् । 'विभुत्वा'ऽनुपादाने कण्ठताल्वाद्यभिघातेऽतिव्याप्तिः । निमित्तहेतुत्वा'ऽनुपादाने शब्दात्मकाऽतीतादिव्यवहारस्य गगने सत्त्वादतिव्याप्तिः । ईश्वरवारणाय—असाधारणेति । प्राच्यादिव्यवहारमादाय दिग्वारणाय—अतीतादिव्यवहारेति । काले अतीतत्वं वर्तमानकालीनध्वंसीयप्रतियोगिताश्रयोपाध्यवच्छिन्नत्वम् । आदिना—अनागत—वर्तमानयोर्ग्रहणम् । अनागतत्वं—वर्तमानप्रागभावप्रतियोगित्वम् । वर्तमानत्वं—शब्दप्रयोगाऽधिकरणत्वम् । 'इह घटोऽस्ती'त्यादिशब्दप्रयोगस्याऽधिकरणतया लाघवात् कालसिद्धिः 'इदानीं घट'इति प्रतीतिः सूर्यपरिस्पन्दादिकं विषयीकरोति, तत्र सूर्यपरिस्पन्दादिना सह घटादेः सम्बन्धोऽपेक्षणीयः, स च संयोगादिर्न संभवति किन्तु 'स्वाश्रयतपनसंयोगिसंयोग'रूपः, तत्र स्वं—सूर्यक्रिया, तदाश्रयः—सूर्यः तस्य संयोगी कालः, तस्य संयोगो घटादाविति कालस्तत्र घटकतया सिद्ध इति बोध्यम् । कालत्वम्—अखण्डोपाधिः । नित्यत्वं—ध्वंसप्रागभावयोरप्रतियोगित्वम् । विभुत्वं—सर्वमूर्तद्रव्यसंयोगित्वम् ॥ दीपिकायां—**कालं लक्षयतीति** । कालवृत्त्यसाधारणधर्मप्रकारकज्ञानाऽनुकूलव्यापारवान् ग्रन्थकार इत्यर्थः । **सर्वाधार इति** । 'कालिकसम्बन्धेन सर्ववस्तुमानि'तिप्रतीत्या सर्वाधिकरणत्वेन कालसिद्धिः । **'सर्वकार्ये'ति** । 'सर्व'पदोपादानेन दण्डादिवारणम् ॥ **निमित्तकारणं चेति** । कार्यत्वावच्छिन्नं प्रति निमित्तकारणमिति भावः । एकोऽपि

(१) व्यवहारो द्विविधः—शब्दप्रयोगात्मकः, स्फुरणात्मकश्च, तादृशोभयविधव्यवहारहेतुत्वस्य घटे वर्तमानत्वादतिव्याप्तिरिति बोध्यम् ॥

(२) "अतीतत्वं—वर्तमानध्वंसप्रतियोगित्वम् । भविष्यत्त्वं—वर्तमानप्रागभावप्रतियोगित्वम् । वर्तमानत्वं—शब्दप्रयोगाधिकरणत्वम् ।

कालः उपाधिभेदात् क्षणदिनादिव्यवहारं भजते । उपाधिः—स्वजन्यविभागप्रागभावावच्छिन्नं कर्म । स्वं–क्रिया । पूर्वसंयोगावच्छिन्नविभागो वा । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा । उत्तरसंयोगावच्छिन्नं कर्म वेति । तत्तल्लक्षणकृतैर्दिनादिव्यवहारः ॥

**प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका विभ्वी नित्या च ॥**

( न्या० ) दिशो लक्षणमाह—प्राच्येति । उदयाचलसंनिहिता या दिक् सा-प्राची । अस्ताचलसंनिहिता या दिक् सा-प्रतीची । मेरोः संनिहिता या दिक् सा—उदीची । मेरोर्व्यवहिता या दिक् सा—अवाची ॥

( प० ) प्राचीति । 'इयं प्राची' 'इयमवाची' 'इयं प्रतीची' 'इयमुदीची' त्यादिव्यवहारासाधारणं कारणं दिगित्यर्थः । 'हेतुर्दिगि' त्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात्तद्वारणाय—प्राच्यादिव्यवहारहेतुरिति । आकाशादिवारणाय-असाधारणेत्यपि बोध्यम् ॥

(दी०) दिशो लक्षणमाह- -प्राचीति । दिगपि कार्यमात्रे निमित्तकारणम् ।

---

(कि०) मूले—प्राच्यादिव्यवहारहेतुर्दिगिति । दिगिति लक्ष्यम् । विभुत्वे सति प्राच्यादिव्यवहाराऽसाधारणनिमित्तहेतुत्वमितिलक्षणम् । कण्ठताल्वाद्यभिघातवारणाय—विभुत्वे सतीति । 'प्राच्यादी'तिशब्दात्मकव्यवहारस्याऽऽकाशे सत्त्वात् तद्वारणाय—निमित्तहेतुत्वमिति । ईश्वरवारणायाऽसाधारणेति । अतीतादिव्यवहारमादाय कालवारणाय—प्राच्यादीति । दिगेकाऽप्युपाधिभेदात् प्राच्यादिव्यपदेशभाग् भवतीति । प्राच्यादीत्यादिना—प्रतीच्युदीच्यवाचीग्रहणम् । उदयाचलसन्निहिता दिग्–प्राची । अस्ताचलसन्निहिता दिग्–प्रतीची । मेरोः सन्निहिता दिग्–उदीची । मेरोर्व्यवहिता दिग्–अवाची । दिक्सिद्धिस्त्वनुमानेन–'दैशिकपरत्वाऽपरत्वे–असमवायिकारणसंयोगाधिकरणजन्ये, 'भावत्वे सति कार्यत्वात,—घटवत्' अत्र एकम् असमवायिकारणसंयोगाधिकरणं घटादि, अपरं तु दिग्–इति । दिक्त्वम्–अखण्डोपाधिः ॥ **कार्यमात्रे निमित्तकारणमिति** । दैशिकविशेषणतया सर्वकार्याणामाधारत्वेन निमित्तकारणत्वमिति भावः ।

**ज्ञानाधिकरणमात्मा । स द्विविधः–परमात्मा जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

( न्या० ) आत्मानं निरूपयति—ज्ञानाधिकरणमिति । अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ॥

( प० ) ज्ञानाधिकरणेति । भूतलादिवारणाय-ज्ञानेति । कालादिवारणाय-

समवायेनेत्यपि देयम् । **ईश्वर इति** । समवायसंबन्धेन नित्यज्ञानवानीश्वरः । **जीव इति** । सुखादिसमवायिकारणं जीव इत्यर्थः ॥

(दी०) आत्मनो लक्षणमाह—**ज्ञानेति** । आत्मानं विभजते—**स द्विविध इति** । परमात्मनो लक्षणमाह—**तत्रेति** । नित्यज्ञानाधिकरणत्वम् ईश्वरत्वम् । नन्वीश्वरस्य सद्भावे किं प्रमाणं ? न तावत्प्रत्यक्षम् । तद्धि बाह्यं ? आभ्यन्तरं वा ? । नाद्यम्, अरूपिद्रव्यत्वात् । नान्त्यम्, आत्मसुखादिव्यतिरिक्तत्वात् । नाप्यनु-

---

(कि०) **मूले ज्ञानाऽधिकरणमिति** । आत्मा–लक्ष्यः । ज्ञानस्य समवायेनाऽधिकरणत्वमिति लक्षणम् । विषयतासम्बन्धेन विषयाणां ज्ञानवत्त्वात् तत्राऽतिव्याप्तिवारणाय—समवायेनेति । भूतलादिवारणाय—ज्ञानेति ॥ ननु मुक्तिदशायामात्ममनःसंयोगाऽभावेन ज्ञानाऽभावादात्मन्यव्याप्तिरिति चेन्न । ज्ञानसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षणात् । **भट्टाचार्य्यास्तु**=अत्र नित्यज्ञानवत्त्वस्य लक्षणत्वे जीवात्मन्यव्याप्तिः, अनित्यज्ञानवत्त्वस्य लक्षणत्वे परमात्मनि अव्याप्तिः, उभयविधज्ञानवत्त्वं त्वप्रसिद्धम्, अतः—'स्वावच्छिन्नाधिकरणत्वसम्बन्धेन ज्ञानत्ववत्त्वं लक्षणं बोध्य**मित्याहुः** । आत्मत्वजातिः—सुखदुःखज्ञानद्वेषकृतिभावनादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । यथा सुखादिसमवायिकारणता–किंचिद्धर्मावच्छिन्ना,–कारणतात्वात् । अत्र किंचिद्धर्मः—आत्मत्वजातिरूपः । ईश्वरेऽपि सा जातिरस्ति, किन्तु सुखाद्युत्पादकधर्माद्यात्मककारणाऽभावादेव न तत्र सुखाद्युत्पत्तिः । **परे तु**—ईश्वरे आत्मत्वजातिर्नास्ति, न च दशमद्रव्यत्वाऽऽपत्तिः, ज्ञानवत्त्वेनैव विभजनादिति—**वदन्ति** । आत्मा शरीरेऽवच्छेदकतासम्बन्धेन ज्ञानसम्पादकः, इन्द्रियेषु जनकतासम्बन्धेन । स्वात्मा 'अहं सुखी'त्यादिप्रत्यक्षप्रतीतिसिद्धः, परात्मा तु—'परशरीरं–प्रयत्नवताऽधिष्ठितं,—समवायेन चेष्टावत्त्वात्, गत्यनुमेयसारथियुक्तरथवत्' । चेष्टा हि प्रयत्नजन्या, अतश्चेष्टया प्रयत्नवत्तयाऽऽत्माऽनुमानगम्य इति भावः ॥ मूले—**परमात्मेति** । परमत्वं–जगज्जननादिकर्तृत्वम्, समवायेन नित्यज्ञानवत्त्वं वा ॥ **जीवात्मेति** । जीवत्वं—समवायेनाऽनित्यज्ञानवत्त्वम् ॥ तत्र=तयोः । दीपिकायां—**आत्मानं विभजते–इति** । जात्यभिप्रायेणैकवचनम् । तथापि एकत्वविशिष्टात्मत्वाऽवान्तरधर्मेण धर्मिप्रतिपादनानुकूलव्यापारवान् ग्रन्थकार इत्यर्थः । **नित्यज्ञानेति** । 'नित्ये'त्यनुपादाने जीवात्मन्यतिव्याप्तिः । 'ज्ञाना'ऽनुपादाने नित्यत्वे सति अधिकरणत्वस्य कालादावतिव्याप्तिः । 'अधिकरणत्वा'नुपादाने नित्यज्ञानत्वं नित्यज्ञानेऽतिव्याप्तम् भवतीति ध्येयम् ॥ नास्तिकः शङ्कते—**नन्वीश्वरस्येति** । **तद्धीति** । प्रमाणत्वेनाभिमतप्रत्यक्षमित्यर्थः ॥ **नाद्यमिति** । नेश्वरस्य-बाह्यप्रत्यक्षमित्यर्थः ॥ **अरूपीति** ॥ उद्भूतरूपवन्महद्द्रव्यस्यैव बाह्यप्रत्यक्षविषयत्वनियमो नत्वरूपिद्रव्यस्य, ईश्वरस्याऽरूपिद्रव्यत्वान्न बाह्यप्रत्यक्षमिति भावः । नाऽन्त्यम्=आन्तरं मानसप्रत्यक्षमपि नेश्वरस्येत्यर्थः ॥ आत्मसुखादिव्यतिरिक्तत्वात्—स्वात्मसुखादिभिन्नत्वादित्यर्थः ॥ स्वमनसा स्वात्मनः संयोगेन, स्वसुखादेस्तु संयुक्तसमवायेन प्रत्यक्षं भवति, परमात्मा तु अस्म-

मानम्, लिङ्गाभावात्। नाप्यागमः, तथाविधागमाभावात् इति चेत्! न, 'क्षित्यङ्कुरादिकं--कर्तृजन्यं--कार्यत्वात्,—घटवत्'इत्यनुमानस्य प्रमाणत्वात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्। उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम्। 'यः सर्वज्ञः स सर्ववित्' इत्यागमोऽपि तत्र प्रमाणम्।

जीवस्य लक्षणमाह—जीव–इति। सुखादिकं जीवलक्षणम्। ननु 'मनुष्योऽहं ब्राह्मणोऽहम्' इत्यादौ सर्वत्र 'अहम्'-प्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न, शरीरस्याऽऽत्मत्वे करपादादिनाशे शरीरनाशादात्मनोऽपि नाशापत्तेः।नापि इन्द्रियाणामात्मत्वम्। तथात्वे 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामि, इत्यनुसन्धानाभाव-

---

दात्मसुखादिव्यतिरिक्त इति न तस्य प्रत्यक्षमिति भावः॥ नाप्यनुमानमीश्वरसद्भावे मानम्, लिङ्गस्य—हेतोरभावादित्याह–नाप्यनुमानमित्यादि॥ नाऽप्यागमस्तत्र प्रमाणम्, तथाविधस्य अलौकिकेश्वरस्य प्रतिपादकाऽऽगमाऽभावादिति उत्तरयति—नेत्यादि। क्षित्यङ्कुरादिकं–पक्षः। क्षितिः—स्थूला पृथिवी। अङ्कुरम्–द्व्यणुकम्। आदिना–तद्घटादिः। अत्र क्षितित्वमङ्कुरत्वं तद्घटत्वं चेति न पक्षतावच्छेदकम्, किन्तु तत्त्रयसाधारणं स्वरूपसम्बन्धरूपं कार्यत्वं—पक्षतावच्छेदकं, तदवच्छिन्नः पक्षः—'क्षित्यङ्कुरादिकार्यम्'। प्रागभावप्रतियोगित्वात्मकं कार्यत्वं हेतुः, तेन न पक्षतावच्छेदकहेत्वोरैक्यम्॥ साध्यं–कर्तृजन्यत्वम्॥ घट-इति दृष्टान्तः, यथा घटे उपादानं–समवायिकारणं कपालद्वयम्, तद्गोचराऽपरोक्षम्,—तद्विषयकप्रत्यक्षम्, ज्ञान-चिकीर्षा-कृत्येतत्त्रयं तद्वान् कुलाल एव, स च कर्ता भवति, तथा क्षित्यङ्कुरादीनामुपादानकारणपरमाण्वादयः, तद्गोचराऽपरोक्षज्ञान-चिकीर्षा-कृतिमानीश्वर एव भवितुमर्हतीति सः सिद्धः॥ नन्वीश्वरः कथं परमाण्वादिविषयकप्रत्यक्षवानित्याकाङ्क्षायामाह—सकलेति। सकलानां परमाण्वादिसूक्ष्मपदार्थानां दर्शित्वात्–नित्यप्रत्यक्षज्ञानवत्त्वात् सर्वज्ञत्वं तस्य, यथा श्रुतिः—'यः सर्वज्ञः स सर्वविदि'ति, 'विद्'–धात्वर्थो विशेषरूपेण ज्ञानम्, 'ज्ञा' धात्वर्थः सामान्यरूपेण ज्ञानम्, तत्र च 'यःसर्ववित् स सर्वज्ञ' इति व्यत्यासः, तथा च यो यद्विषयकविशेषज्ञानवान्, सः तद्विषयकसामान्यज्ञानवानित्याशयः। दीपिकायां—लक्षणमाहेति। लक्षणस्वरूपमाहेत्यर्थः। समवायेन सुखदुःखादिकं जीवस्य लक्षणस्वरूपमित्यर्थः। शरीरात्मवादी चार्वाकः शङ्कते–नन्विति। तथा च मनुष्य–ब्राह्मणादिसंज्ञा देहस्यैवेति 'अहं'प्रत्ययात्मकाऽलौकिकमानसविषयो देह एवेति भावः॥ उत्तरयति—नेति। शरीरस्येति–आत्मनो विशेषणम्, तथा च समवायिकारणनाशस्य कार्यद्रव्यनाशकत्वेन नास्तिकमते शरीरात्मकाऽऽत्मनोऽपि करपादाद्यात्मकाऽवयवानां नाशे सति नाशापत्तिः स्यादिति भावः॥ केचन चार्वाकाः—इन्द्रियाण्येवात्मेति—वदन्ति, तद्दूषयितुमुपन्यस्यति—नाऽपीति। तथात्वे–इन्द्रियाणामाऽऽत्मत्वे॥ योऽहं'मिति अत्र प्रतीतौ द्रष्टा=दर्शनवान्, स्प्रष्टा=स्पार्शनवांश्चैक एव–प्रतीयते, तव मते द्रष्टृ=दर्शनवत् चक्षुरन्यत्, स्प्रष्टृ-स्पार्शन-

प्रसङ्गात् । अन्यानुभूतेऽन्यस्यानुसन्धानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः । स च न परमाणुपरिमाणः, शरीरव्यापि-सुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः, तथा सति अनित्यत्वप्रसङ्गेन कृत-हानाकृताभ्यागमप्रसङ्गात् । तस्मान्नित्यो विभुर्जीवः ।

---

वक्ष्याऽन्यत् वक्तव्यम्, एवञ्च योऽहं सोऽहमित्यादिना—एकस्यात्मनोऽनुसन्धानविषयत्वं न सम्भवतीति भावः । ननु चक्षुषा दृष्टं विषयं त्वक् स्मरिष्यतीति नानुपपत्तिरित्यत आह—अन्यानुभूते- इति । यथाऽन्येन पुरुषेणाऽनुभूते विषयेऽपरपुरुषस्य स्मरणं न भवति तथाऽन्येन चक्षुषाऽनुभूते रूपादौ अन्यस्य-त्वगिन्द्रियस्याऽनुसन्धानाऽयोगात्=स्मरणाऽसंभवात्, अन्यथा चैत्रेणाऽनुभूतस्य विषयस्य मैत्रेण स्मरणापत्तेः ॥ उपसंहरति—तस्मादिति । 'योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामी' त्यादिप्रतीतिविषयस्यैकस्याऽऽत्मनोऽवधारणात् । सुखादीति । सुखादिभोगवैचित्र्यात् । प्रतिशरीरं जीवभेदोऽनुमीयते यथा 'सुखादिकं—तत्तच्छरीरावच्छिन्नतत्तदात्मकं—न्यूनाधिकभावेन भोग-विषयकत्वात्, स्वोपार्जितधनवत्, वेदान्तिनस्तु—आत्मनोऽणुपरिमाणमभ्युपगच्छन्ति, तन्मतं दूषयति-'स च नेत्यादिना । सः—आत्मा परमाणुपरिमाणो भवितुं नार्हति, यतः—तन्मतेऽणुरूपस्याऽऽत्मनो हृदयपुण्डरीके वासात् शरीरव्यापि शरीरावयवे करचरणादौ यत् सुखदुःखादिकं जायते तस्याऽप्रत्यक्षाऽऽपत्तेः । भवति च 'करेऽहं दुःखी'त्यादि प्रत्यक्षम्, अत आत्मा महत्परिमाणवानिति ॥

जैनास्तु—आत्मा नाऽणुर्न च महान्, किन्तु मध्यमपरिमाणवान्, यावत्परिमाणकं शरीरं तावत्परिमाणवानिति, स च पिपीलिकाशरीरं प्रविष्टः सन् तच्छरीरपरिमाणो भवति, हस्तिशरीर-प्रविष्टः सन् हस्तिशरीरपरिमाणो भवतीति—वदन्ति, तत्खण्डयति—न मध्यमेति । तथा सति—मध्यमपरिमाणे सति तादृशशरीरपरिमाणवत आत्मन उत्पादविनाशशालितयाऽनित्यत्वप्रसङ्गः स्यात्, एवं च सति अस्मिन् शरीरे 'कृतस्य=यागादिना सम्पादितस्य धर्मादेर्हानं=नाशः—'अकृतस्य—शरीरान्तरेऽभ्यागमः=प्राप्तिः, तादृशप्रसंगादित्यर्थः । कर्तुरात्मन उत्तरजन्मनि असत्त्वात् अकर्तुश्च सत्त्वादिति भावः ॥ उपसंहरति—तस्मादिति । शरीरात्मकत्वादणु-मध्यमपरिमाणाद्यसंभवाच्च विभुर्नित्यो जीवात्मेति भावः ॥

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वा-दनन्तं परमाणुरूपं नित्यं च ॥

( न्या० ) मनो निरूपयति—सुखादीति । उपलब्धिर्नाम-साक्षात्कारः । तथा च—'सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं' मनसो लक्षणम् । इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः सुखादि-साक्षात्कारकारणत्वविशेषणम् । विशेष्यानुपादाने आत्मन्यतिव्याप्तिः,

आत्मनः सुखादिकं प्रति समवायिकारणत्वात्, अत इन्द्रियत्वरूप-विशेष्योपादानम् ॥

( प० ) सुखेति । आत्ममनःसंयोगादिवारणाय-इन्द्रियमिति । चक्षुरादि-वारणाय-सुखेति ॥

(दी०) मनसो लक्षणमाह—सुखेति । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । मनो विभजते—तच्चेति । एकैकस्यात्मन एकैकं मन आवश्यक-मित्यात्मनामनेकत्वान्मनसामप्यनेकत्वमित्यर्थः । परमाणुरूपमिति । मध्यमपरि-माणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः । ननु 'मनो-विभु-स्पर्शरहितद्रव्यत्वात्, आका-शादिवदिति चेन्न । मनसो विभुत्वे आत्ममनःसंयोगस्याऽसमवायिकारणस्याभावाज्ज्ञा-नानुत्पत्तिप्रसङ्गात् । न च विभुद्वयसंयोगोऽस्त्विति वाच्यम् । तत्संयोगस्य नित्यत्वेन

---

(कि०)मूले 'सुखाद्युपलब्धी'ति । मनःइति लक्ष्यम् । शेषं लक्षणम् । उपलब्धिर्नाम-साक्षात्कारः । सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं लक्षणम् । चक्षुरादावतिव्याप्तिवार-णाय-सुखदुःखादिसाक्षात्कारकारणत्वे सतीति । प्राचीननये आत्ममनःसंयोगस्य वारणाय—इन्द्रियत्वमिति । चक्षुरादिवारणाय—सुखेति ॥ कार्यमात्रे साधारणकारणानि यथा—'ईशस्तज्ज्ञान-यत्नेच्छा कालोऽदृष्टं दिगेव च । प्राक्प्रतिबन्धकाभावौ ( प्रागभावप्रतिबन्धकाऽभावौ ) कार्ये साधारणा मताः' इति ॥

मनःसंयोगादावतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणाऽपेक्षया लघुलक्षणमाह—दीपिकायां स्पर्शरहितत्वे सतीति । वाय्वादिवारणाय—स्पर्शरहितत्वम् । आकाशादिवारणाय—क्रिया-वत्त्वम् ॥ मनो विभजते—इति । मनस्त्वं जातिः, जात्यभिप्रायेणैकवचनम् । एकत्वविशिष्ट-मनस्त्वाऽवान्तरधर्मप्रतिपादनानुकूलव्यापारवान् ग्रन्थकार इति बोधः । मनसि प्रमाणम्—'सुखादि-साक्षात्कारः—सकरणकः,—जन्यसाक्षात्कारत्वात्,—चाक्षुषसाक्षात्कारवत् । अत्र यत्करणं तन्मन इति । एवम्—'सुखाद्यसमवायिकारणं संयोगः—क्वचिदाश्रितः,—द्विष्ठगुणत्वात्,—विभागवत् । अत्र संयोगाश्रय एक आत्माऽपरं तु मन एवेति ॥ एकैकमिति । सर्वात्मनामेकस्य मनसः स्वीकारे एकस्य ज्ञानकालेऽपरस्य तदनुपपत्तिः, तस्याऽणुत्वेन सकलानां—पुरुषाणां इन्द्रियैः सहैकदा संयोगाऽसम्भवादिति भावः ॥ मनसः परिमाणं निर्धारयति—परमाणुरूपमिति ॥ मध्यम-परिमाणत्वेऽनित्यत्वापत्तिं दर्शयति—मध्यमेति ॥ मनसो विभुत्वसाधनाय पूर्वपक्षयति—ननु मनो विभ्विति । तस्य विभोर्महत्परिमाणवत्त्वेनाऽनित्यत्वादिदोषाणां नापत्तिरिति भावः ॥ हेतौ द्रव्यत्वानुपादाने गुणकर्मादौ व्यभिचारः, स्पर्शरहितत्वानुपादाने घटादौ व्यभिचार इति ॥ उत्तरयति—नेत्यादिना । यतः विभुद्वयसंयोगस्याऽनङ्गीकारेण कारणविरहात् ज्ञानं सर्वदा विलीयेत भावकार्यस्याऽसमवायिकारणजन्यत्वनियमात् ॥ शङ्कते—न चेति ॥ उत्तरयति—

सुषुप्त्यभावप्रसङ्गात्, पुरीतद्व्यतिरिक्तप्रदेशे आत्ममनःसंयोगस्य सर्वदा विद्यमानत्वात् ॥ अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः, यदा निःसरति, तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

तत्संयोगस्येति । सुषुप्तिं प्रत्यात्ममनःसंयोगनाशस्य प्रयोजकत्वादिति भावः ॥ सुषुप्त्यभावप्रयोजकं हेतुमाह—पुरीतदिति । पुरीततो व्यतिरिक्ते देशे हृदयपुण्डरीके—इत्यर्थः ॥ स्वमते मनसोऽणुत्वे सुषुप्तेः निराबाधत्वं प्रदर्शयति—अणुत्वे त्विति ॥ ननु मनसोऽणुत्वे दीर्घशष्कुलीभक्षणादौ नानावधानभाजां कथमेकदाऽनेकेन्द्रियजं ज्ञानं स्यादिति चेन्न । मनसोऽतिलाघवात् झटिति नानेन्द्रियसम्बन्धात् नानाज्ञानोत्पत्तेर्निराबाधात्, तत्र युगपत्प्रत्ययस्य भ्रान्तित्वादिति दिक् ।

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्र-भेदात् सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।**

( न्या० ) रूपं लक्षयति—चक्षुरिति । चक्षुर्मात्रग्राह्यत्व(१) विशिष्टगुणत्वं रूपस्य लक्षणम् । विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम् । तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः, 'यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्ये'ति नियमात्तद्वारणाय विशेष्योपादानम् । चक्षुर्मात्रग्राह्यत्वं नाम—चक्षुर्भिन्नेन्द्रियाऽग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् । मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, तत्राऽपि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्, अतस्तद्वारणाय—मात्रपदं, संख्यादेश्चक्षुर्भिन्न-त्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति । अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय—चक्षुर्ग्राह्येति । अत्र लक्षणे ग्राह्यत्वं नामेन्द्रप्रत्यक्षविषयत्वम् । अग्राह्यत्वं नाम—तदविषयत्वम् । तथा च—'चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वमि'ति फलितोऽर्थः । ननु—प्रभा-घट-संयोगे रूपलक्षणस्याऽतिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न । गुणपदस्य विशेषगुणपरत्वात् । न चैवं विशेषगुणत्व-

(१) चक्षुर्मात्रग्राह्यत्वं—चक्षुर्भिन्नेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाभाववत्त्वे सति चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावत्त्वम्, विषयतावत्त्वं=विषयतैव, अतो विषयताविशिष्टत्वं गुणत्वे सामानाधिकरण्यसम्बन्धेन, सामानाधिकरण्यं च—एकाऽधिकरणवृत्तित्वम्, प्रकृते अधिकरणं रूपम्, तत्र विषयता स्वरूपसम्बन्धेन, गुणत्वं च समवायेनेति बोध्यम्

घटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम् ? जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात्। अथवा-चक्षुर्मात्रग्राह्यजातिमद् गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः। संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् । घट-पटसंयोगस्य त्वगिन्द्रिय-ग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्। यो गुणो यदिन्द्रियग्राह्य-स्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात्। अत्र जातिघटितलक्षणे गुणत्वानु-पादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदु-पादानम् । एवं रसादिलक्षणे (१) विशेषणानुपादाने लक्ष्यभिन्नगुणा-दावतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावति-व्याप्तिः। अतो विशेषणविशेष्ययोरुपादानम् ॥

( प० ) चक्षुरिति। रूपत्वादिवारणाय-गुणपदम्। रसादिवारणाय-चक्षु-र्ग्राह्य इति । संख्यादिवारणाय-मात्रपदम् । यद्यपि प्रभाभित्तिसंयोगवारणाय 'गुण' पदेन 'विशेषगुण'स्य विवक्षणीयतया तत एव संख्यादिवारणं संभवतीति मात्रपदं व्यर्थं, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम्। वस्तुतस्तु—परमाणुरूपेऽव्याप्तिवारणाय—चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया 'विशेष-पदं न देयम्। द्व्यणुकादिवारणाय 'गुण' पदं तु देयम्। सप्तेति। रूपमित्यनुषज्यते॥

( दी० ) रूपं लक्षयति—चक्षुरिति। संख्यादावतिव्याप्तिवारणाय–मात्रपदम्।

---

(कि०) मूलं–चक्षुर्मात्रेति। रूपं–लक्ष्यम् । चक्षुर्मात्रग्राह्यत्वे सति गुणत्वं लक्षणम्। गुणत्वमात्रोपादाने रसादावतिव्याप्तिः । चक्षुर्मात्रग्राह्यत्वोपादाने रूपत्वेऽतिव्याप्तिः, 'येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैव गृह्यते' इति नियमात्। चक्षुर्मात्रग्राह्यत्वं नाम—चक्षुर्भिन्नेन्द्रियाऽग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। 'मात्र'पदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, तदुपादाने तु संख्यादेस्त्वगिन्द्रियेणाऽपि ग्राह्यत्वान्नातिव्याप्तिः । 'चक्षुर्ग्राह्यत्वाऽनुपादानेऽतीन्द्रिय-गुरुत्वादावतिव्याप्तिः । ग्राह्यत्वं–प्रत्यक्षविषयत्वम्, अग्राह्यत्वं–प्रत्यक्षाऽविषयत्वम्। तथा च—'चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वं रूपत्व-मिति लक्षणार्थः॥ ननु प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति चेन्न। 'गुण' पदेन विशेषगुणत्वस्य विव-क्षितत्वात्। न चैवं सति पूर्वोक्तसंयोगादिवारणसंभवे मात्रपदं व्यर्थमिति वाच्यम्। जलमात्रवृत्ति-

---

( १ ) 'रसनाग्राह्यो गुणो रस' इत्यादौ रसनाग्राह्यत्वघटितविशेषणाऽनुपादाने गुणत्वमादाय लक्ष्य-रसादिभिन्नगुणादावतिव्याप्तिः, विशेष्यं यत् गुणपदं, तदनुपादाने रसनासंयुक्तसमवेत-समवायेन रसनाग्राह्यत्वस्य रसत्वादौ सत्त्वात् अतिव्याप्तिः, तद्वारणाय तदुपादानमिति भावः॥

रूपत्वेऽतिव्याप्तिवारणाय–गुणपदम् । प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणाय—'चक्षुर्मात्रग्राह्यजातिमत्त्वं वाच्यम् ॥ रूपं विभजते—तच्चेति । नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेत् ! न, रूपस्य व्याप्यवृत्तित्वनियमात् । ननु चित्रपटे अवयवरूपस्य प्रतीतिरस्त्विति चेत् ! न, रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात् । न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्, गौरवात् । तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः । रूपस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—तत्रेति ।

---

सांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय'मात्र'पदसार्थक्यात् ॥ ननु तथापि परमाणुरूपेऽव्याप्तिरिति चेन्न । चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्यैव लक्षणत्वात् । अत्र गुणत्वानुपादाने सुवर्णेऽतिव्याप्तिरिति ध्येयम् ॥ रूपत्वजातिः प्रत्यक्षसिद्धा ॥ **मूले सप्तविधमिति** । गुणे गुणाऽनंगीकारात् सप्तत्वम्–अपेक्षाबुद्धिविषयत्वम् । सप्तग्रहणं 'रूपत्वं शुक्लादिसप्तान्यतमत्वव्याप्य'मिति व्याप्तिलाभाय बोध्यम् । **मूले पृथिवीति** । पृथिव्यां जले तेजसि च वर्तते इत्यर्थः । तत्र—तेषां मध्ये । सप्तविधम्–शुक्लनीलपीतरक्तादिभेदेन नानाजातीयं रूपं पृथिव्यामेव, न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात् । अन्यत् सुगमम् । दीपिकायां–**रूपं लक्षयतीति** । रूपसम्बन्ध्यसाधारणधर्मप्रकारकज्ञानानुकूलव्यापारवान् ग्रन्थकार इति बोधः ॥ रूपं विभजते–इत्यस्य एकत्वविशिष्टरूपत्वावान्तरधर्मावच्छिन्नधर्मिप्रतिपादनानुकूलव्यापारवान् ग्रन्थकार इति बोधः ॥ शङ्कते–**नन्वव्याप्यवृत्तीति**। दैशिकाऽव्याप्यवृत्तित्वमित्यर्थः । तच्च स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नाऽधिकरणे स्वरूपसम्बन्धेन वृत्तिर्यः स्वावछेदकावच्छिन्नाऽभावस्तत्कत्वम् । स्वं=प्रतियोगिता । **समुदाय एवेति** । एवकारेण पटातिरिक्तचित्ररूपव्यवच्छेदः । तथा च–रूपवति पटे परस्पराऽवच्छेदकभेदेन रूपाऽभावानामपि सत्त्वेन न सप्तमं चित्रं रूपम् अङ्गीकार्यमिति भावः ॥ उत्तरयति—**नेति** । रूपस्याऽव्याप्यवृत्तित्वं नास्त्येव, अतो न पटरूपसमुदायोऽभ्युपगमाऽर्हः ॥ व्याप्यवृत्तित्वं=व्याप्यवृत्तिताघटकसम्बन्धेन तदधिकरणे सम्बन्धसामान्येन वर्तमानो योऽभावस्तन्निरूपिततत्सम्बन्धावच्छिन्नप्रतियोगित्वाभावरूपं बोध्यम् ॥ रूपाणां अव्याप्यवृत्तित्वे तु 'एकैकचित्ररूपस्थलेऽनेकरूपाणां एकैकतत्तद्रूपप्रागभावादिस्थलेऽनेकरूपप्रागभावादीनां च कल्पनेन अनेकरूपेषु 'चित्राणि रूपाणि' त्याकारकप्रतीतिविषयत्वकल्पनेन च गौरवमिति । लाघवात् व्याप्यवृत्ति एकं चित्रं रूपमङ्गीकार्यमिति भावः ॥ ननु लाघवात् पटे चित्रं रूपमेव नाऽङ्गीकार्यं, किन्तु तन्तुष्वेव भिन्नं भिन्नं रूपं वर्तते, तदेव स्वाश्रयसमवेतत्वसम्बन्धेन पटे वर्तत एवेत्याशंकते—**नन्विति** । उत्तरयति–**नेति** । **रूपरहितत्वेनेति** । अयं भावः–तर्हि पटे तु किमपि रूपं समवायेन नाऽङ्गीकृतं भवेत् ? तदा लौकिकविषयतया द्रव्यचाक्षुषं प्रति समवायेन रूपस्य कारणतया चित्रत्वेन पटस्य प्रत्यक्षमेव न स्यात्, पटे तादृशकारणस्याऽभावादिति ॥ ननु सर्वत्र द्रव्यप्रत्यक्षे स्वाश्रयसमवेतत्वसम्बन्धेन रूपवत्त्वमेव प्रत्यक्षप्रयोजकमङ्गीक्रियताम्, तथा च पटस्य प्रत्यक्षं स्यात्, स्वाश्रयसमवेतत्वसम्बन्धेन

तन्तुरूपस्य पटे सत्त्वादित्याशंकते—न चेति ॥ उत्तरयति—गौरवादिति । साक्षात्सम्बन्धेन रूपस्य प्रत्यक्षप्रयोजकत्वकल्पनाऽपेक्षया परम्परासम्बन्धेन रूपस्य कारणत्वकल्पने गौरवमिति भावः ॥ उपसंहरति—तस्मादिति । समवायेन रूपस्य तादृशप्रत्यक्षकारणत्वस्य स्वीकारादित्यर्थः ॥ चित्ररूपसिद्धिरिति । अन्यथा पटस्य चाक्षुषत्वमेव न स्यादिति भावः ॥

**रसनग्राह्यो गुणो रसः । स च मधुरा-ऽम्ल-लवण-कटु-कषाय-तिक्त भेदात् षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ॥**

(प०) रसनेति । रसत्वादिवारणाय—गुण इति । रूपादावतिव्याप्तिवारणाय—रसनेति । तत्रेति । पृथिवीजलयोरित्यर्थः । षड्विध इति । अत्र रस इत्यनुवर्तते ॥

(दी०) रसं लक्षयति—रसनेति । रसत्वेऽतिव्याप्तिवारणाय—गुणपदम् । रसस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—पृथिव्यामिति ।

---

(कि०) मूले—रसनाग्राह्येति । रसः-लक्ष्यः । रसनाजन्यप्रत्यक्षविषयत्वे सति गुणत्वं लक्षणम् । परमाणुरसेऽव्याप्तिवारणाय—रसनाग्राह्यतावच्छेदकगुणविभाजकजातिमत्त्वं लक्षणमित्यवसेयम् । रसत्वजातिः प्रत्यक्षसिद्धा । चित्ररूपवच्चित्ररसो नाङ्गीकृतः । द्रव्ये रसनेन्द्रियसन्निकर्षस्य संयोगस्य षड्विधसन्निकर्षघटकस्य सत्त्वेऽपि रसनेन्द्रियस्य तद्ग्रहणेऽसामर्थ्यात्, अतिरिक्तचित्ररसाऽनङ्गीकारेऽपि आम्रादेः रासनप्रत्यक्षत्वाऽनुपपत्तेरभावाच्च । चित्ररसाऽनङ्गीकारेऽपि न काचिदनुपपत्तिरिति भावः । तत्रेति । पृथिवीजलयोर्मध्ये—इत्यर्थः ॥ षड्विध इति । मधुराऽम्ललवणकटुकषायतिक्तभेदेन षड्विधरसः पृथिव्यामेव, जले तु मधुर एव । जले माधुर्ये किं मानमिति चेत्! हरितक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् ॥ मरीचमर्चिकाशुण्ठ्यादीनामङ्गुल्यादिस्पर्शाऽनन्तरमङ्गुल्यादिना नेत्रनासिकादौ स्पृष्टे सति तत्र तिक्तरसो भासते, तथा च तिक्तस्य न केवलरसनाग्राह्यत्वमिति चेन्न । तत्र तिक्तरसो नाऽनुभूयते, किन्तु ज्वलनमनुभूयते, तच्च दाह एव, तिक्ते पदार्थे तैजसभागोऽधिक इति फलबलात्कल्पनीयमिति ॥

**घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः—सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥**

(प०) घ्राणग्राह्य इति । गन्धत्वादावतिव्याप्तिवारणाय-गुण इति । रूपादावतिव्याप्तिवारणाय—घ्राणग्राह्य इति । पृथिवीति । 'पृथिवीसंबन्धसत्त्वे गन्धप्रतीतिसत्त्वं' 'पृथिवीसंबन्धाभावे गन्धप्रतीत्यभाव'—इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव जले प्रतीतिर्बोध्या । एवं वायावपि । ननु देशान्तरस्थकस्तूरी-

कुसुमसंबद्धपवनस्यैतद्देशे तृत्संबन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः । न च वाय्वानीतत्र्यणुकादिसंबन्धोऽस्त्येवेति वाच्यम्, कस्तूर्या न्यूनतापत्तेः, कुसुमस्य च सच्छिद्रत्वापत्तेरिति चेन्न । (१) भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तरानुत्पत्तेः । कर्पूरादौ तु तदभावान्न तथात्वमिति ॥

(दी०) गन्धं लक्षयति–घ्राणेति । गन्धत्वेऽतिव्याप्तिवारणाय–गुणपदम् ।

---

(कि०) मूले–घ्राणग्राह्येति । गन्धो लक्ष्यः । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं लक्षणम् । गुण'पदानुपादाने गन्धत्वेऽतिव्याप्तिः । रूपादावतिव्याप्तिवारणाय–घ्राणग्राह्येति । परमाणुगन्धेऽव्याप्तिवारणाय–'घ्राणेन्द्रियग्राह्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वं वक्तव्यम् । गन्धत्वजातिः प्रत्यक्षसिद्धा । ननु सुरभ्यसुरभ्यवयवाऽऽरब्धे द्रव्ये चित्रगन्धोऽङ्गीकार्यं इति चेन्न । घ्राणस्य गन्धाश्रयग्रहणे सामर्थ्याभावेन तदनावश्यकत्वात् ॥ पृथिवीमात्रेति । 'पृथिवीसत्त्वे गन्धसत्त्वं' 'पृथिवीभिन्ने च गन्धाऽभावसत्त्व'मित्यन्वयव्यतिरेकाभ्यां पृथिव्यामेव गन्धः । जलादौ पृथिवीसम्बन्धाद्गन्धप्रतीतिः । देशान्तरस्थोत्कटगन्धवत्पार्थिवपरमाणुषु वाय्वानीतेषु सत्सु पृथिवीसम्बन्धादेव वायौ गन्धप्रतीतिरित्यपि बोध्यम् ॥

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः—शीतोष्णा-ऽनुष्णाऽशीत-भेदात् । पृथिवीजलतेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवी-वाय्वोः ॥**

(न्या०) स्पर्शं लक्षयति–त्वगिन्द्रियमात्रग्राह्य इति । अत्रापि मात्रपदं (२)संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय । अन्यविशेषणकृत्यं (३) पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः ।

---

(१) सर्वमेव कार्यं साक्षात् परम्परया वा भोक्त्रदृष्टाधीनमेवोत्पद्यते, तथा च कस्तूर्याः कुसुमस्य च भोगसम्पादकाऽदृष्टं कस्मिँश्चित्पुरुषादौ भवेत् तदा वृद्धिशीलं कस्तूरीकुसुमादिकं विवर्धते, अन्यथा तु नश्यति, कर्पूरादिकम् अपि यावद्भोक्तुरदृष्टाधीनं तावन्न नश्यति, आपणेषु तस्य चिरकालस्थायित्वेनोपलम्भात्, अन्यथा तु नश्यति इति भावः, तदभावादित्यस्य=भोक्त्रदृष्टविरहादित्यर्थः ॥

(२) तथा च लक्षणार्थः—संयुक्तसमवायसन्निकर्षप्रयोज्या या त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षीयविषयता तच्छून्यत्वे सति तादृशी या त्वगिन्द्रिजन्यप्रत्यक्षीयविषयता तदाश्रयत्वे सति गुणत्वम् ॥ (३) पूर्ववत्=पूर्वोक्तरूपादिवदिति ॥

( प० ) स्पर्शत्वादावतिव्याप्तिवारणाय-गुणं इति । रूपादावतिव्याप्तिवारणाय-त्वगिन्द्रियेति । संख्यादिवारणाय-मात्रपदम् । तत्रेति । पृथिव्यादिचतुष्टये । शीत इति-शीतस्पर्शः । उष्ण इति-उष्णस्पर्शः ॥

( दी० ) स्पर्शं लक्षयति-त्वगिति । स्पर्शत्वेऽतिव्याप्तिवारणाय-गुणपदम् । संयोगादावतिव्याप्तिवारणाय-मात्रपदम् ।

---

( कि० ) मूले-त्वगिन्द्रियेति । स्पर्शो लक्ष्यः । मात्रपददानेन 'त्वगितरेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वमिति लक्षणम् । स्पर्शत्वेऽतिव्याप्तिवारणाय-गुणत्वम् । सङ्ख्यादिसामान्यगुणेऽतिव्याप्तिवारणाय-त्वगितरेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सतीति । सङ्ख्यादीनां चक्षुषाऽपि ग्राह्यत्वात् तद्वारणम् । अतीन्द्रिये गुरुत्वादावतिव्याप्तिवारणाय-त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सतीति । परमाणुस्पर्शेऽव्याप्तिवारणाय-त्वगिन्द्रियमात्रग्राह्यतावच्छेदक-गुणत्वव्याप्यजातिमत्त्वं बोध्यम् । स्पर्शत्वजातिः प्रत्यक्षसिद्धा । स च-स्पर्शः शीतः उष्णः, अनुष्णाशीतश्चेति भेदात् त्रेधा ॥ अनुष्णाशीतेति । पाकजोऽनुष्णाशीतः स्पर्शः पृथिव्याम्, तत्र विजातीयतेजःसंयोगात्मकपाकवशात् स्पर्शादिपरिवर्तनसंभवात् । वायौ तु पाकाऽयोगादनुष्णाशीतोऽपाकजः स्पर्शः ।

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्राऽपाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥**

( न्या० ) रूपादिचतुष्टयमिति । एतत्तत्त्वनिर्णयश्चेत्थम्—पाको नाम—विजातीयतेजःसंयोगः । स च नानाजातीयरूपजनको विजातीयस्तेजःसंयोगः। तदपेक्षया रसजनको विजातीयस्तेजःसंयोगः। एवं गन्धजनकोऽपि ततो विजातीय एव । एवं स्पर्शजनकोऽपि तथैव । एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः । यथा—तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः, पूर्वरसस्याऽम्ललस्यैवानुभवात् । क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाऽम्ललरसनाशेन मधुररसस्यानुभवात् । तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः । एवं गन्धजनको विलक्षण एव, रूप-रसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः । एवं स्पर्शजनकोऽपि, पाकवशात्कठिन-

स्पर्शनाशेन मृदुस्पर्शानुभवात्। तस्माद्रूपादिजनका विजातीया एव पाका यथाकार्यमुन्नेयाः। अत एव पार्थिवपरमाणूनामेक(१)जातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः, यथा—गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं तत्रैव तादृशरूपरसादय उत्पद्यन्ते, तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धव्द्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः, एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते, एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक् ॥

(दी०) पाकजमिति। पाकः = तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र परमाणुष्वेव पाको न व्द्यणुकादौ। आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्व्द्यणुकादिक्रमेण रक्तघटोत्पत्तिः। तत्र परमाणवः

---

(कि०) मूले रूपादिचतुष्टयमिति। सप्तविधं रूपं—षड्विधोरसो—द्विविधो गन्धः—पाकजोऽनुष्णाशीतस्पर्शश्चेति—चतुष्टयं पृथिव्यां—नित्याऽनित्योभयविधायां पाकजमनित्यं चेत्यर्थः। अन्यत्र=जले। गन्धाऽभावाद् रूपादित्रयं—रूपं रसः स्पर्शश्चेतित्रयम् पाकजमेव, किन्तु तत् त्रयं जलपरमाणुषु नित्यं जलद्व्यणुकादौ त्वनित्यमिति। एवं तेजसि गन्धरसोभयाभावात् रूपस्पर्शौ अपाकजावेव, तेजःपरमाणुषु नित्यौ तेजोद्व्यणुकादावनित्यौ। एवं वायौ गन्धरसरूपाऽभावात् स्पर्शोऽपाकजः, वायुपरमाणुषु नित्यो वायुद्व्यणुकादावनित्य इति। नित्यत्वादिकं पूर्ववद्बोध्यम्। नित्यगतमित्यस्य—जलादिपरमाणुगतमित्यर्थः, अनित्यगतमित्यस्य—द्व्यणुकादिगतमित्यर्थः ॥ दीपिकायां—पाक इति। पूर्वरूपरसादिपरावृत्तिजनको विजातीयस्तेजःसंयोगः पाकः, तेन पूर्वं रूपरसादिकं नश्यति रूपरसाद्यन्तरं चोत्पद्यते इत्यर्थः ॥ अत्रेति। पृथिव्यामित्यर्थः। वैशेषिकाणां मते परमाणुष्वेव पाकः। एवकारव्यवच्छेद्यं स्फुटयति—न द्व्यणुकादाविति। तन्मतसमन्वयं दर्शयति—आमपाकेत्यादिना। आमः—अपक्वः, पाके निक्षिप्तश्च यो घटस्तस्मिन्नित्यर्थः। श्यामघटनाशे सति तत्परमाणुषु रक्तादिरूपान्तरोत्पत्तौ सत्यां पुना रक्तघटोत्पत्तिरितिसमुदितार्थः। वैशेषिकाणामयमाशयः—'वह्निसंयोगेनाऽवयविषु विनिष्टेषु स्वतन्त्रेषु परमाणुषु पाकः' पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण महावयविघटाद्युत्पत्तिरिति। अत्र द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्यां रूपादिमद्भवतीति ज्ञानार्थं क्षणप्रक्रिया प्रदर्श्यते। विभागजविभागाऽ-

---

(१) पार्थिवपरमाणुभिः पृथिवीत्वात्मकैकजात्यवच्छिन्नत्वेन समानत्वेऽपि विभिन्नपाकयोगात् पृथिवीत्वव्याप्यविभिन्ननानादुग्धत्व-दधित्वनवनीतत्वादिजात्यवच्छिन्नद्रव्याणि समुत्पद्यन्ते ॥

समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः। पूर्वघटनाशं विनैव अवयविनि अवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुषु रूपादिकमनित्यमित्यर्थः। अन्यत्रेति। जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्य-

---

नङ्गीकारे नव क्षणा भवन्तीति। यथा—'वह्निसंयोगात्परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः—१। ततः परमाणौ श्यामादिनाशः—२। ततो रक्ताद्युत्पत्तिः—३। ततो द्रव्यारम्भानुगुणक्रिया—४। ततो विभागः ५। ततः पूर्वसंयोग-नाशः—६। तत आरम्भकसंयोगः ७। ततो द्व्यणुकोत्पत्तिः—८। तयो रक्ताद्युत्पत्तिः—९। ततः क्रमेण घट इति ॥ विभागजविभागाङ्गीकारे तु दशक्षणा एकादशक्षणाश्च भवन्तीति॥ तत्रेति। तत्र—परमाणुरूपे इत्यर्थः। परमाणुः समवायिकारणम्, परमाणुतेजसोः संयोगोऽ-समवायिकारणम्, भोक्तृपुरुषादिगताऽदृष्टादिकं निमित्तम्। अदृष्टं=घटेन जलाहरणद्वारा जल-प्रयोज्यतृप्तिसम्पादकं पुण्यम्॥ द्व्यणुकादिरूपे—इति। द्व्यणुकस्य रूपे द्व्यणुकं समवायि-कारणम्, कारणस्य—परमाणोः रूपमसमवायिकारणम्। अदृष्टादिकं निमित्तम्। पीलवः= परमाणवः, तत्र पाकवादिनो वैशेषिकाः—वदन्तीति शेषः, "षोडशपदार्थानां सप्तस्वन्तर्भावेण सप्तविशेषपदार्थप्रतिपादककाणादसूत्रं तद्भाष्यमन्यं चैतदर्थप्रतिपादकमभिधायत विदन्ति" वा— वैशेषिकाः, 'क्रतूक्थादी'त्यादिपदग्राह्यत्वाट्ठक्॥ नैयायिकानामाशयं दर्शयति—पूर्वघटनाश-मित्यादिना—तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगविनाशक-क्रियाजनकत्वे मानाऽभावान्नाऽवयविविनाशः, अतो युगपद्—घटादिपरमाण्वन्तेषु सर्वत्रैकदैव पाक इति। पीठरं=अवयवाऽवष्टब्धोऽवयवी। नैयायिकाः—न्यायो युक्तिः—प्रमाणैरर्थपरीक्षणमिति यावत्, तत्प्रतिपादकोऽप्युपचारान्न्यायस्तमधीयन्ते विदन्ति वेत्यर्थे ठक्' 'क्रतूक्थादी'त्यादिपद-ग्राह्यत्वात्, 'नय्ये'त्यैच्॥ विजातीयतेजःसंयोगरूपः पाको रूपजनको विजातीयः, रसजनको विजातीयः, गन्धजनकोऽपि विजातीयः, स्पर्शजनकोऽपि विजातीयः, परमाणुषु विभिन्नतेजः-संयोगात् विभिन्ना गुणा उत्पद्यन्ते इति भावः॥ उद्भूतत्वमिति। प्रत्यक्षत्वप्रयोजको धर्मः— इत्यर्थः—रूपादिगता जातिरित्यपि केचित्। न च शुक्लत्वादिना साङ्कर्यम्, गुणसाङ्कर्यं न बाधक-मिति नवीनाऽभिप्रायेणाऽत्र निर्वाहात्, अन्नंभट्टस्यापीदमेव मतम्। तदभावः=उद्भूतत्वाभाव इत्यर्थः॥ अत्रेदं बोध्यम्—उद्भूतत्वेऽनुद्भूतत्वे न बहुमतानि। नवीनैरन्नंभट्टैश्च—उद्भूतत्वं जातिस्त्रसरेण्वादिगतरूपादिप्रत्यक्षप्रयोजिका त्रसरेण्वादिगतरूपादिनिष्ठा, अनुद्भूतत्वं तूद्भूतत्वाभावः, स च परमाणुद्व्यणुकादिगतरूपादिनिष्ठ इति—स्वीक्रियते। कैश्चित्तु—परमाणुद्व्यणुकानां शुक्लादिगतं शुक्लत्वादिव्याप्यं नानाऽनुद्भूतत्वं तत्तद्रूपाणां प्रत्यक्षाऽभावप्रयोजको धर्मविशेषः—उपाधिरिति यावत्, तादृशाऽनुद्भूतत्वाभाव—एवोद्भूतत्वम्, तच्च त्रसरेण्वादिगतरूपसंयोगादिगुणनिष्ठं प्रत्यक्ष-त्वप्रयोजकं सप्तमपदार्थरूपमिति—स्वीक्रियते। अन्येस्तु—'परमाणुवृत्तिध्यामुद्भूतरूपसम्बन्धत्तुमयं

गतमिति । द्व्यणुकादिनिष्ठमित्यर्थः । रूपादिचतुष्टयम् उद्भूतं प्रत्यक्षम् । अनुद्भूतमप्रत्यक्षम् । उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः । तदभावोऽनुद्भूतत्वम् ।

---

घटरूपं परमाणुरूपं चाऽऽदाय वर्तते' इत्यत्र परमाणुरूपेऽप्युद्भूतत्वमङ्गीक्रियते, तदभिप्रायेण—उद्भूतत्वं नाम—उत्पत्तिमत्त्वमित्यायाति । मुक्तावलीकारैः उद्भूतत्वं कचित्परमाणुरूपादावङ्गीकृतं कचिच्च नहि । अन्नंभट्टै—त्रसरेणुगतरूपादावेवाऽङ्गीकृतम् । नीलकण्ठैः—कचिदनुद्भूतत्वाभावरूपं कचिच्च जातिरूपमिति । अतः सुधीर्यथापेक्षं यथायोगमारथेयं तदिति । वस्तुतस्तु 'यद्यत्र प्रत्यक्षत्वप्रयोजकसन्निकर्षवत्ता स्यात्तर्ह्युपलभ्येते'त्यापादनयोग्यता एव उद्भूतत्वं बोध्यम्, तदभावोऽनुद्भूतत्वमिति ध्येयम् ।

**एकत्वादिव्यवहारहेतुः संख्या सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्राऽनित्यमेव ।**

(प०) एकत्वादीति । एकत्वादिप्रकारको यो व्यवहारः—'एको द्वावि'त्याद्यात्मकस्तस्य हेतुः संख्या इत्यर्थः । घटादिवारणाय-एकत्वादीति । कालादिवारणायाऽसाधारणेत्यपि देयम् । ननु संख्याया अवधिरस्ति न वेत्यत आह—एकत्वादीति । तथा च—"एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च । वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥" इति महदुक्तेः परार्धपर्यन्तैव संख्या—इति भावः ॥

( दी० ) संख्यां लक्षयति—एकेति ।

---

( कि० ) मूले एकत्वादीति । संख्या—लक्ष्या । 'एकत्व'मित्यादिर्यो व्यवहारः—'एको द्वा'वित्याकारकस्तस्याऽसाधारणहेतुत्वं सङ्ख्यात्वमिति लक्षणार्थः । घटादिवारणाय—एकत्वादीति । कालादिवारणाय—असाधारणेति । संख्यात्वं—जातिः, एकत्वत्वादिकमपि—जातिः सा च प्रत्यक्षसिद्धा ॥ परार्धेति । 'एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥' अयुतं = दशसहस्रम् । नियुतं=दशलक्षकम् । अर्बुदं = दशकोटिः, वृन्दं= शतकोटिः, ततो दशगुणं = खर्वः, एवमग्रेऽपि दशवृद्ध्यव बोध्यम् । लोकेऽत्वर्बुद'पदेन—शतकोटिर्गृह्यते तच्छास्त्रविरुद्धम् ॥ द्वित्वादयः परार्धान्ता व्यासज्यवृत्तिसङ्ख्या अपेक्षाबुद्धिजन्याः । बहुत्वमपि-सङ्ख्यैव ।—नित्याऽनित्यादिभेदेन एकत्वस्य द्वैविध्यमाह—एकत्वमिति ॥ नित्यगतमिति । परमाणुगतमित्यर्थः ॥ एकत्वनाशं प्रति आश्रयनाशस्य हेतुत्वेन परमाणुनाशाऽसंभवेन तद्गतैकत्वस्यापि न नाश इति भावः ॥ अनित्यगतमिति । कार्यगत

मित्यर्थः। द्व्यणुकादीनां नाशात् तद्गतैकत्वस्य नाश इत्यर्थः॥ द्वित्वादिकं त्विति। द्वित्वं प्रति समवायिकारणगतमेकत्वम् असमवायिकारणम्। 'अयमेकोऽयमेक' इत्याकारकाऽपेक्षाबुद्धिः निमित्तकारणम्। अपेक्षाबुद्धेर्नाशाद् द्वित्वनाश इति बोध्यम्॥ सर्वत्रेति। नित्याऽनित्य-द्रव्ययोरित्यर्थः॥

**मानव्यवहाराऽसाधारणं कारणं परिमाणम्। नवद्रव्यवृत्ति। तच्चतुर्विधम्-अणु, महत्, दीर्घं, ह्रस्वं, चेति॥**

(प०) मानेति। मानं=परिमितिस्तस्या यो व्यवहारः,='इदं महदिद-मणु'-इत्याद्यात्मकः, तस्य कारणं परिमाणमित्यर्थः। (१) दण्डादिवारणाय-मानेति। कालादिवारणायाऽसाधारणेति। (२) शब्दत्ववारणाय-कारणमिति। नवद्रव्येति। चतुर्विधमपि परम-मध्यमभेदेन द्विविधम्। तत्र-परमाणुत्वह्रस्वत्वे परमाणुमनसोः। मध्यमाणुत्वह्रस्वत्वे द्व्यणुके। परममहत्त्वदीर्घत्वे गगनादौ। मध्यममहत्त्वदीर्घत्वे घटादौ। 'एतन्मौक्तिकादिदं मौक्तिकमण्वि'तिव्यवहारस्यापकृष्टमहत्वाश्रयत्वा-द्गौणत्वं बोध्यम्। एवमेव 'केतनाद्व्यजनं ह्रस्वमि'त्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम्।

(दी०) परिमाणं लक्षयति—मानेति। परिमाणं विभजते—तच्चेति। भाव-प्रधानो निर्देशः, अणुत्वं, महत्त्वं, दीर्घत्वं ह्रस्वत्वं चेत्यर्थः।

---

(कि०) मूले-मानव्यवहारेति। परिमाणं लक्ष्यम्। मानं-परिमितिस्तस्या य 'इदं महदिदमण्वि'त्यादिव्यवहारस्तस्याऽसाधारणकारणं परिमाणमिति लक्षणार्थः। दण्डादिवारणाय-मानेति। कालादिवारणाय-असाधारणेति। कारणपदानुपादाने 'मानव्यवहारे'तिशब्देऽपि शब्दत्वधर्मस्याऽसाधारणत्वेनाऽतिव्याप्तिस्तद्वारणाय-कारणमिति। परिमाणत्वजातिः प्रत्यक्षसिद्धा॥ अणुत्वमिति। नन्वणुत्वमेव-ह्रस्वत्वमस्तु, महत्त्वमेव च दीर्घत्वमस्तु, कुतश्चातुर्विध्यमिति चेन्न। तदवधिकाऽणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाऽव्यवहारात्,-तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाऽव्यवहाराच्च,-ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया चातुर्विध्य-सम्भवात्॥ तत्परिमाणम् अनित्ये द्रव्येऽनित्यम्, नित्ये द्रव्ये नित्यम्। अनित्यं तु-संख्याजन्यं, परिमाणजन्यं, प्रचयजन्यं चेति त्रिधा। द्व्यणुके त्रसरेणौ च सङ्ख्याजन्यम्। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति क्रमशः परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम्, परिमाणस्य-'स्वसंमानजातीय-स्वोत्कृष्टपरिमाणजनकत्व'नियमात्, द्व्यणुकस्याऽणुपरिमाणं तु परमाणुपरिमाणा-

---

(१) 'मान'पदाऽनुपादाने 'दण्डमानये'त्यादिशब्दप्रयोगात्मकव्यवहाराऽसाधारणकारणे दण्डेऽतिव्याप्तिर्बोध्या॥ (२) 'कारण'पदाऽनुपादाने 'मानव्यवहार'इत्याकारकाऽऽनुपूर्व्यवच्छिन्नशब्दमादाय तस्याऽसाधारणो धर्मो मानव्यवहारत्वात्मकः शब्दत्वात्मकश्च, तत्राऽतिव्याप्तिः। कारणपदोपादाने तु तादृशधर्मस्य कारणत्वाऽभावात् नाऽतिव्याप्तिः॥

ऽपेक्षया नोत्कृष्टम्, त्रसरेणुपरिमाणं तु न सजातीयम्, अतः परमाणुगतद्वित्वसंख्या द्व्यणुकपरिमाणस्य, द्व्यणुकगतत्रित्वसङ्ख्या त्रसरेणुपरिमाणस्याऽसमवायिकारणमिति भावः। उत्कृष्टत्वं च—महदपेक्षया महत्तरत्वम्, अण्वपेक्षयाऽणुतरत्वमिति। त्रसरेणुपरिमाणं तु चतुरणुपरिमाणस्याऽसमवायिकारणं भवति, एवं घटपरिमाणं कपालपरिमाणजन्यम्॥ शिथिलीभूतः संयोगः प्रचयस्तज्जन्यं परिमाणं तूलकादौ बोध्यम्॥ परिमाणमाश्रयनाशात् नश्यति॥

## पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम्। सर्वद्रव्यवृत्ति॥

(प०) पृथगिति। 'अयमस्मात्पृथगि'ति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः। दण्डादिवारणाय-पृथगित्यादि। कालादिवारणाय-असाधारणेति। पृथग्व्यवहारत्वधर्मवारणाय-कारणमिति॥

(दी०) पृथक्त्वं लक्षयति—पृथगिति। 'इदमस्मात् पृथक्' इति व्यवहारकारणमित्यर्थः।

---

(कि०) मूले-पृथग्व्यवहारेति। पृथक्त्वं—लक्ष्यम्। 'इदमस्मात्पृथगि'ति यो व्यवहारस्तस्याऽसाधारणं कारणमिति लक्षणार्थः। दण्डादिवारणाय—पृथगित्यादि। कालादिवारणाय—असाधारणेति। पृथग्व्यवहारत्ववारणाय—कारणमिति। पृथक्त्वत्वजातिः प्रत्यक्षसिद्धा। एकपृथक्त्व—द्विपृथक्त्वादिभेदैः पृथक्त्वस्याऽनेकविधत्वम्। तत्रैकपृथक्त्वं नित्यगतं नित्यम्, अनित्यगतमनित्यम्। द्विपृथक्त्वादिकं सर्वत्राऽनित्यमेव, अस्य चाऽऽश्रयद्वितीयक्षणे उत्पत्तिराश्रयनाशाच्च नाश इति॥ ननु 'अयमस्मात्पृथगि'त्यादिप्रतीतिः अन्योन्याभावमेवावगाहते तत् कथं पृथक्त्वं गुणान्तरमिति चेन्न। 'घटः पटो ने'त्यन्योन्याभावसाधकप्रतीतितो 'घटः पटात्पृथगि'ति प्रतीतेर्विलक्षणत्वात्। किञ्च—पृथक्त्वस्यान्योन्याभावस्वरूपत्वे 'घटात् पृथक्' इतिवत् 'घटो न पट'-इत्यत्रापि पञ्चमीविभक्त्यापत्तेः, 'घटो न घटरूपमि'तिवत्—'घटात् पृथक् घटरूपमि'त्यपि प्रतीत्यापत्तेः।

## संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः॥

(प०) संयुक्तेति। 'इमौ संयुक्ता'विति यो व्यवहारस्तस्य हेतुः संयोग इत्यर्थः। दण्डादिवारणाय—संयुक्तव्यवहारेति। कालादिवारणाय—असाधारणेत्यपि देयम्। संयुक्तव्यवहारत्वे धर्मेऽतिप्रसक्तिवारणाय—हेतुरिति। उपदर्शितलक्षणचतुष्टयेऽसाधारणपदं देयम्। क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणायाऽसाधारणेति दृश्यते तत्त्वाधुनिकैर्न्यस्तमिति बोध्यम्॥

(दी०) संयोगं लक्षयति—संयुक्तेति। 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः। संख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्याप्तिवारणाय—असाधारणेति देयम्।

संयोगो द्विविधः—कर्मजः, संयोगजश्च । आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः । द्वितीयो–हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः । अव्याप्यवृत्तिः संयोगः । स्वात्यन्ताभावसमानाधिकरणत्वम्--अव्याप्यवृत्तित्वम् ।

---

( कि० ) मूले--संयुक्तेति । संयोगो लक्ष्यः । 'इमौ संयुक्ता'विति यो व्यवहारस्तस्याऽसाधारणहेतुत्वमिति लक्षणार्थः । दण्डादिवारणाय---संयुक्तव्यवहारेति । कालादिवारणाय—असाधारणेति । तादृशव्यवहारत्ववारणाय–कारणमिति । संयोगत्वजातिः–प्रत्यक्षसिद्धा ॥ दीपिकायां—सङ्ख्यादिलक्षणेष्विति । कर्मज इति । सोऽपि द्विविधः–अन्यतरकर्मज उभयकर्मजश्च । आद्यः–वृक्षविहंगमयोः संयोगः द्वितीयः–मेषयोः संयोगः ॥ अभिघातनोदनभेदात् कर्मजसंयोगोऽपि द्वेधा, तत्र शब्दहेतुः–अभिघातः । शब्दाऽहेतुः–नोदनः । अव्याप्यवृत्तिरिति । यथा भूतले प्रसारितो दण्डो मध्ये मध्येऽसंयुक्तः संयुक्तश्च दृश्यते तत्र 'स्वं=संयोगस्तस्याऽत्यन्ताभावेन सह समानमेकमधिकरणं यस्य तत्त्वम्–अव्याप्यवृत्तित्वमिति । स्वप्रतियोगित्व–स्वसामानाधिकरण्योभयसम्बन्धेनाऽभावविशिष्टत्वमिति तु–निष्कर्षः ॥

## संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥

(न्या०) विभागं लक्षयति—संयोगेति । संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् । विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय–गुणत्वमिति विशेष्योपादानम् ॥

(प०) संयोगेति । संयोगनाशजनक इत्यर्थः । कालेऽतिप्रसक्तिवारणाय–गुणपदम् । ईश्वरेच्छादिवारणाय–असाधारणेत्यपि बोध्यम् । ननु असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यादिति चेत् ! न । क्रियायामतिप्रसक्तिवारणाय–तस्याप्यावश्यकत्वात् ॥

(दी०) विभागं लक्षयति–-संयोगेति । कालादावतिव्याप्तिवारणाय—गुण इति । रूपादावतिव्याप्तिवारणाय—संयोगनाशक इति । विभागोऽपि द्विविधः—कर्मजो विभागजश्च । आद्यो--हस्तक्रियया हस्तपुस्तकविभागः । द्वितीयो--हस्तपुस्तकविभागात्कायपुस्तकविभागः ।

---

( कि० ) मूले-संयोगनाशक इति । विभागो लक्ष्यः । संयोगनाशाऽसाधारणकारणत्वे सति गुणत्वं लक्षणम् । क्रियायाः संयोगनाशकत्वात् तत्राऽतिव्याप्तिवारणाय–गुणत्वम् । ईश्वरेच्छादिवारणाय–असाधारणेति । संयोगस्य प्रतियोगिविधया स्वनाशं प्रति हेतुत्वात् संयोगेऽतिव्याप्तिवारणाय—प्रतियोगित्वसम्बन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकतावत्त्वमि'ति लक्षणमवसेयम् । वस्तुतस्तु—'संयोगनाशत्वावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारण-

तावत्त्वमिति लक्षणं बोध्यम् ॥ अथवा–विभक्तव्यवहाराऽसाधारणकारणत्वे सति गुणत्वमित्यपि लक्षणम् ॥ कर्मज इति । अयमपि द्वेधा,–अन्यतरकर्मजः, उभयकर्मजश्च । आद्यो-वृक्षविहंगमविभागः । द्वितीयो—मेषयोर्विभागः ॥ विभागजश्चेति । अयमपि द्वेधा–कारणमात्रविभागजन्यः, कारणाऽकारणविभागजन्यश्चेति । आद्यः—करशाखाविभागात् कायवृक्षविभागः । द्वितीयो–हस्तवृक्षविभागात् कायवृक्षविभागः । विभागत्वजातिः प्रत्यक्षसिद्धा । विभागोऽप्यव्याप्यवृत्तिर्बोध्यः ॥

**पराऽपर-व्यवहाराऽसाधारणकारणे परत्वाऽपरत्वे । पृथिव्यादिचतुष्टयमनो (१)वृत्तिनी । ते द्विविधे–दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥**

(प०) परेति । परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वमित्यर्थः । दण्डादिवारणाय–परव्यवहारेति । कालादिवारणाय–असाधारणेति । परव्यवहारत्वधर्मेऽतिव्याप्तिवारणाय--कारणेति । एवमेव द्वितीयेऽपि बोध्यम् ॥

(दी०) परत्वापरत्वयोर्लक्षणमाह--परापरेति । परव्यवहाराऽसाधारणकारणं परत्वम् । अपरव्यवहाराऽसाधारणकारणम्-अपरत्वम् इत्यर्थः । परत्वाऽपरत्वे विभजते—ते द्विविधे इति । दिक्कृतयोरुदाहरणमाह—दूरस्थ इति । कालकृते उदाहरति—ज्येष्ठ इति ।

---

(कि०) मूले-परापरव्यवहारेति । 'अयं पर' इतिव्यवहाराऽसाधारणकारणं परत्वम् । 'अयमपर' इति व्यवहाराऽसाधारणकारणमपरत्वम् । परत्वलक्षणे 'परव्यवहारे' त्यनुपादानेऽसाधारणकारणत्वमात्रस्यैव लक्षणत्वे दण्डेऽपि 'दण्ड'इत्यभिधानात्मकाऽसाधारणकारणत्वसत्त्वेनाऽतिव्याप्तिस्तद्वारणाय-परव्यवहारेति । यद्वा-प्रत्यक्षाऽद्यसाधारणकारणे--इन्द्रियादावतिव्याप्तिरपि बोध्या । 'कारण'–पदानुपादाने परव्यवहारे परव्यवहारत्वस्याऽसाधारणधर्मत्वसत्त्वेन तमादायाऽतिव्याप्तिः स्यात् । कालादिवारणाय—असाधारणमिति ॥ अपरत्वलक्षणेऽपि व्यावृत्तिः पूर्ववत् । परत्वत्वमपरत्वत्वं च जातिः प्रत्यक्षसिद्धा । परत्वाऽपरत्वेऽनित्ये एव ॥ पृथिव्यादिचतुष्टयेति । पृथिवीजलतेजोवायुषु दिक्कृतं कालकृतं च तद् वर्तते, मनसि तु दिक्कृतमात्रं, न तु कालकृतं

---

(१) परमाणूनां मनसश्च नित्यत्वेन तत्र कालकृतपरत्वाऽपरत्वे न संभवतः, किन्तु दिक्कृतपरत्वाऽपरत्वे बोध्ये ॥ शरीरावच्छिन्नमनसि परमाणुषु च 'इदमस्मात् पूर्वं—इदमस्मात् पश्चिमं' इत्यादिप्रतीतिरिति बोध्यम् ॥

मनसो नित्यत्वात् ॥ दैशिकपरत्वे विप्रकृष्टत्वविपर्यिण्यपेक्षा–बुद्धिर्निमित्तकारणम्, दैशिकाऽपरत्वे च सन्निकृष्टत्वविपर्यिण्यपेक्षाबुद्धिर्निमित्तकारणम् ॥ तयोरसमवायिकारणं तु दिक्पिण्डसंयोगः ॥ कालिकपरत्वे सूर्यपरिस्पन्दभूयस्त्वज्ञानं निमित्तकारणम् । कालिकाऽपरत्वे सूर्यपरिस्पन्दाऽल्पीयस्त्व-ज्ञानं निमित्तकारणम् । कालिकपरत्वाऽपरत्वेऽनित्ये एव । दैशिकपरत्वाऽपरत्वे तु नित्याऽनित्य-साधारणे । कालिकपरत्वाऽपरत्वयोरसमवायिकारणं कालपिण्डसंयोगः ॥ उभयविधयोः परत्वाऽ-परत्वयोरपेक्षाबुद्धिनाशान्नाशो भवतीति ॥

## आद्यपतनाऽसमवायिकारणं गुरुत्वं । पृथिवीजलवृत्ति ॥

( न्या० ) गुरुत्वं लक्षयति—आद्येति । द्वितीयपतनक्रियायां वेगस्याऽसमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय-आद्येति । उत्तरत्र स्यन्दने 'आद्यत्व'विशेषणमपि पूर्ववदेव योजनीयम् ॥

(प०) आद्येति । (१)दण्डादिवारणाय--असमवायीति । (२) रूपादिवारणाय पतनेति । (३)वेगेऽतिव्याप्तिवारणाय--आद्येति ॥

(दी०) गुरुत्वं लक्षयति—आद्येति । द्वितीयादिपतनस्य वेगाऽसमवायिकारणत्वा-द्वेगेऽतिव्याप्तिवारणाय–आद्येति ।

---

( कि० ) मूले–आद्यपतनेति । गुरुत्वं लक्ष्यम् । शेषं लक्षणम् । द्वितीयादिपतनक्रियां प्रति वेगोऽसमवायिकारणं भवतीति वेगवारणाय–आद्येति । अत्राऽऽद्यत्वं नाम–स्वसमानाधिकरण-पतनप्रतियोगिकध्वंसाऽसमानकालीनत्वम् । द्वितीयादिपतनानां प्राथमिकपतनध्वंससमानकालीन-त्वान्नाऽऽद्यत्वमिति । आम्रादिपतनक्रियायां बहुशो दण्डादीनां निमित्तत्वाद्द दण्डादिवारणाय–असमवायीति । घटरूपं प्रति कपालरूपादेरसमवायिकारणत्वेन कपालादिरूपवारणाय–पतनेति । गुरुत्वं अतीन्द्रियम्, तस्याऽनुमानेन सिद्धिः—यथा 'संयोगाऽसमवधानकालीना पतनक्रिया–गुणाऽसमवायिकारणिका,–क्रियात्वात्,—संयोगजन्यक्रियावत् । अत्र यो गुणस्तत्—गुरुत्वम् ॥ पतनाऽसमवायिकारणतावच्छेदकतया गुरुत्वत्वजातिः सिद्ध्यति,–यथा–'पतनाऽसमवायिकारणता–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वात् । अत्र किञ्चिद्धर्म एव गुरुत्वत्वजातिः । अनित्ये पृथिवीजलेऽ-नित्यं,–नित्ये पृथिवीजले च नित्यं,–गुरुत्वमिति ॥

---

(१) फलादिपतने दण्डादीनामपि निमित्तत्वात् दण्डादिवारणाय-असमवायीति । (२) 'पतना'—ऽनुपादाने पटरूपे तन्तुरूपादेरसमवायिकारणत्वादतिव्याप्तिरतद्वारणाय—पतनेति । (३) द्वितीयादिपतने वेगस्याऽसमवायिकारणत्वात् तद्वारणाय—आद्येति । आद्यत्वं नाम—'स्वाऽधिकरणसमय-ध्वंसाऽनधिकरणत्वविशिष्टाऽधिकरणसमयसम्बन्धः । अथवा स्व-(पतन)-समानाधिकरण–पतन–प्रतियोगिकध्वंससमानकालीनं यद्यत् ( द्वितीयादिपतनम् ) तदन्यत्, तच्च प्रथमे पतने–इति ॥

(आद्य)स्यन्दनाऽसमवायिकारणं द्रवत्वम् । पृथिवीजलतेजोवृत्ति । तद् द्विविधम्—सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥

(प०) आद्यस्यन्दनेति । दण्डादिवारणाय—असमवायीति(१) । रसादिवारणाय—स्यन्दनेति ॥

(दी०) द्रवत्वं लक्षयति—स्यन्दनेति । स्यन्दनं प्रस्रवणम् । तेजःसंयोगजं नैमित्तिकम्, तद्भिन्नं सांसिद्धिकम् । पृथिव्यां नैमित्तिकमुदाहरति—घृतादाविति । तेजसि तदाह—सुवर्णादाविति ।

---

(कि० )मूले-आद्यस्यन्दनेति । द्रवत्वं लक्ष्यम् । शेषं लक्षणम् । स्यन्दनं—स्रवणरूपा क्रिया । द्वितीयस्यन्दनं प्रति कारणीभूते वेगेऽतिव्याप्तिवारणाय—आद्येति । आद्यत्वं पूर्ववत् । कपालरूपादिवारणाय—स्यन्दनेति । दण्डादिवारणाय—असमवायीति । द्रवत्वत्वजातिः प्रत्यक्षसिद्धा जलपरमाणौ द्रवत्वं नित्यम्, अन्यत्र=पृथिवीतेजःपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यमिति ॥

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥

( न्या० ) स्नेहं लक्षयति—चूर्णादिति । चूर्णादिपिण्डिभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम-चूर्णादेर्धारणाऽऽकर्षण-हेतुभूतो विलक्षणः संयोगः, तादृशसंयोगे स्नेहस्यैवाऽसाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवासाधारण( निमित्त )कारणम् । विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय—विशेष्योपादानम् । (२)वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

---

(१) अवयविरसं प्रति अवयवरसस्याऽसमवायिकारणत्वेन अवयवरसेऽतिव्याप्तिवारणाय—स्यन्दनेति । क्वचित् निरुद्धजलस्यन्दननिमित्तभूते दण्डेऽतिव्याप्तिवारणाय—असमवायीति । अत्राऽपि आद्यत्वं पूर्ववत् बोध्यम् ॥ स्यन्दनं नाम जलप्रस्रवणात्मिका क्रिया ॥

(२) जलगतद्रवत्वाऽपेक्षया द्रुतजलसंयोगस्य कारणत्वकल्पने द्रवत्वस्य उभयपक्षे कारणप्रविष्टत्वेन लाघवाऽभावेऽपि द्रवत्वस्य स्नेहस्य च स्वसमवायिसंयुक्तत्वसम्बन्धेन कारणत्वकल्पनाऽपेक्षया

( प० ) चूर्णादीति । चूर्णं = पिष्टं, तदेवादिर्यस्य मृत्तिकादेः, स चूर्णादिस्तस्य पिण्डीभावः = संयोगविशेषस्तस्य हेतुर्निमित्तकारणं स्नेह इत्यर्थः । कालादावतिव्याप्तिवारणाय–गुणपदम् । रूपादावतिव्याप्तिवारणाय–पिण्डीभावेति । ( १ ) चूर्णपदं स्पष्टार्थम् ॥

(दी०) स्नेहं लक्षयति—चूर्णेति । कालादावतिव्याप्तिवारणाय-गुण इति । रूपादावतिव्याप्तिवारणाय–चूर्णादिपण्डीभावेति ।

---

( कि० ) मूले-चूर्णादीति । स्नेहो लक्ष्यः । 'चूर्णादिपिण्डीभावाऽसाधारणनिमित्तहेतुत्वे सति गुणत्वमि'ति लक्षणम् । पिण्डीभावो नाम–चूर्णादेर्धारणाऽऽकर्षणादिसम्पादकः संयोगः, तत्र स्नेहस्यैवाऽसाधारणकारणत्वम् । लोष्टादिपिण्डीभावहेतुभूताऽग्निसंयोगे व्यभिचारवारणाय–चूर्णमिति पिष्टादिपरम् । स्नेहः प्रत्यक्षसिद्धः । स्नेहत्वं जातिः । घृते तैलादौ च जलस्यैव स्नेहः । नित्यजले नित्योऽनित्यजलेऽनित्यः स्नेहः ॥

**श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः–ध्वन्यात्मको वर्णात्मकश्चेति । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥**

( न्या० ) शब्दं लक्षयति—श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय–गुण इति । रूपादावतिव्याप्तिवारणाय—श्रोत्रेति । सः त्रिविधः–संयोगजो, विभागजः, शब्दजश्चेति । यथा—भेरीदण्डसंयोगजो झांकारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः । शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन (२)कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते, तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ॥

---

द्रुतजलसंयोगस्य समवायेनैव कारणत्वकल्पने लाघवमित्यभिप्रेत्य आह—वस्तुतस्तु—इति ॥ एतन्मते मूलोक्तलक्षणव्याहतिः, कारणतावच्छेदकगौरवं च ॥ द्रुतसुवर्णेन चूर्णपिण्डीभावाऽदर्शनात् द्रवत्वं त्वन्यथासिद्धम्, अतः स्नेहस्यैव कारणता युक्ता, फलमुखगौरवं तु न दोषावहमिति भावः ॥ (१) लौहादिपिण्डीभावकारणीभूते वह्निसंयोगे व्यभिचारवारणाय चूर्णपदं पिष्टादिपरम् ॥

( २ ) यथा जलमध्ये पाषाणादिनिक्षेपे सति प्रथमं वर्तुलाकार एकस्तरंगः, ततो द्वितीयस्ततस्तृतीय इत्येवं, अथवा–कदम्बपुष्पे वर्तुलाकारं बहुमञ्जरीणां चक्रमुत्पद्यते ततो द्वितीयं ततस्तृतीयं इत्येवं नियमः, तथा एकशब्दात् दशदिक्षु दशशब्दास्ततोऽनेके इत्येवं परम्परया कर्णदेशपर्यन्तमुत्पन्ना भवन्ति, ते एव साक्षात् समवायेन प्रत्यक्षविषयीभूता इति भावः ।

( प० ) श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय–गुण इति । रूपादिवारणाय-श्रोत्रग्राह्य इति । वस्तुतस्तु–श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय–श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्'गुण'पदमनुपादेयमेव ॥

(दी०) शब्दं लक्षयति—श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय--गुण इति । रूपादावतिव्याप्तिवारणाय–श्रोत्रेति । शब्दस्त्रिविधः–संयोगजो, विभागजः, शब्दजश्चेति । तत्र आद्यो–भेरीदण्डसंयोगजन्यः । द्वितीयो–वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः । भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः ।

---

( कि० ) मूले–श्रोत्रेन्द्रियेति । श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति लक्षणम् । शब्दत्वं जातिः प्रत्यक्षसिद्धा । शब्दः सर्वोऽप्यनित्योऽव्याप्यवृत्तिश्च, गगने यत्किंचिद्भेर्याद्यवच्छेदेन शब्द उत्पद्यते,–तदाऽन्यदेशावच्छेदेन तदभावस्यापि तत्र सत्त्वात् ॥ दीपिकायां–भेरीदण्डसंयोगजन्य इति । भेरीदण्डसंयोगजन्ये शब्दे भेर्याकाशसंयोगोऽसमवायिकारणम्, भेरीदण्डसंयोगो निमित्तकारणम् । 'चटपटा'शब्दे वंशदलाकाशविभागोऽसमवायिकारणम्, वंशदलद्वयविभागो निमित्तम् । शब्दजन्यशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्, पवनादिकं तु निमित्तम् ॥ ध्वन्यात्मकशब्दवत् वर्णात्मकशब्दस्यापि त्रैविध्यं, यथा–वायुकण्ठसंयोगेन जायमानः प्रथमः । ओष्ठद्वयविभागेन जायमानो द्वितीयः । शब्दाच्छब्दान्तरस्तृतीयः । आकाशः शब्दमात्रे समवायिकारणम्, कण्ठाकाशसंयोगः–ओष्ठाकाशविभागादि चाऽसमवायिकारणम् ॥ शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं 'वीचीतरङ्गन्यायेन' 'कदम्बमुकुल'न्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते इति । तत्र पूर्वपूर्वशब्दः उत्तरोत्तरशब्दे कारणमित्याशयः ॥

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा–स्मृतिरनुभवश्च ।**

( न्या० ) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । व्यवहारः= शब्दप्रयोगादिः । ज्ञानं विना शब्दप्रयोगाद्यसम्भवाच्छब्दप्रयोगादिरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ॥

( प० ) बुद्धिलक्षणमाह—सर्वेति । सर्वे ये व्यवहारा आहारविहारादयस्तेषां-हेतुर्बुद्धिरित्यर्थः । दण्डादिवारणाय--सर्वव्यवहारेति । कालादिवारणाय—असाधारणेत्यपि देयम् । बुद्धेः सांख्याऽभिमतद्रव्यत्वनिरसनाय-गुण-इति ।

(दी०) बुद्धेर्लक्षणमाह—सर्वेति । कालादावतिव्याप्तिवारणाय–गुण इति । रूपादावतिव्याप्तिवारणाय–सर्वव्यवहार इति । 'जानामी'त्यनुव्यवसायगम्यज्ञानत्वं लक्षणमित्यर्थः । बुद्धिं विभजते—सेति ।

---

( कि० ) मूले–सर्वव्यवहारेति । बुद्धिर्लक्ष्या । व्यवहारः–शब्दप्रयोगः । 'सर्वव्यवहा-

राऽसाधारणहेतुत्वे सति गुणत्वं लक्षणम् । ईश्वरेच्छादिवारणाय–असाधारणेति ॥ दीपिकायां लाघवाल्लक्षणान्तरमाह–जानामीति । ज्ञानत्वजातिमत्त्वमित्यर्थः । 'बुद्धि'रित्युक्त्वा 'ज्ञानमि'त्यभिधानं तु सांख्यमतनिराकरणाय, अन्यथा बुद्धिशब्देन सांख्यमताऽभिमता प्रकृतेः प्रथमपरिणामिनी बुद्धिः कथं न गृहीतव्येति शिष्याणामाशंका स्यादिति ध्येयम् ॥ ज्ञानत्वं,–स्मृतित्वं,–अनुभवत्वं, चेति–जातयोऽनुभवसिद्धाः ॥

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥**

( न्या० ) स्मृतिं लक्षयति—**संस्कारेति** । बहिरिन्द्रियाऽजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वारणाय–विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय-विशेष्योपादानम्, ध्वंसम्प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् । (१) प्रत्यभिज्ञायामतिव्याप्तिवारणाय–मात्रपदम् ।

( **संस्कारेति** । संस्कारध्वंसेऽतिव्याप्तिवारणाय–ज्ञानमिति । अनुभवेऽतिव्याप्तिवारणाय–संस्कारजन्यमिति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय–संस्कारमात्रजन्यत्वं वियक्षणीयम् । क्वचित्तथैव पाठः । न चैवं सति–(२)असम्भवः, तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाजन्यार्थकत्वात् ॥

(दी०) स्मृतेर्लक्षणमाह—संस्कारेति । भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय–ज्ञानमिति घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय–संस्कारजन्यमिति । प्रत्यभिज्ञायामतिव्याप्तिवारणाय–मात्रेति ।

---

( कि० ) "संस्कारमात्रजन्यत्वे सति ज्ञानत्वं"—स्मृतेर्लक्षणम् । प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणत्वात्—संस्कारजन्ये संस्कारध्वंसेऽतिव्याप्तिवारणाय–ज्ञानपदमित्याह–दीपिकायां-**संस्कारेति** । ज्ञानत्वमात्रस्य लक्षणत्वे दोषमाह–**घटादीति** । 'मात्र'पदाऽनुपादाने प्रत्यभिज्ञायामतिव्याप्तिः, पुरोवर्तिनि पूर्वदृष्टस्याऽभेदावगाहिज्ञानं प्रत्यभिज्ञा,–यथा–'सोऽयं देवदत्त' इति । इयं हि–संस्कारेन्द्रियसन्निकर्षाभ्यामुत्पद्यते, तत्र तत्तांऽशे संस्कारो हेतुः, इदन्त्वांशे इन्द्रियाऽर्थसन्निकर्षो हेतुः । 'मात्र'पदोपादाने तु तद्वारणमिति भावः ॥

(१) संस्कारेन्द्रियसन्निकर्षाभ्यां जायमाने 'तत्त्वेदन्त्वावगाहिज्ञाने' 'सोऽयं यज्ञदत्त' इत्याकारके संस्कारजन्यत्वस्य सत्त्वात् अतिव्याप्तिः, तद्वारणाय मात्रपदं–बहिरिन्द्रियाऽजन्यत्वाऽर्थकं बोध्यम् ॥

(२)संस्कारमात्रजन्यत्वकथने सति कार्यमात्रे कालादीनां साधारणकारणत्वात् ज्ञानस्य संस्कारेतरकालादिजन्यत्वात् संस्कारमात्रजन्यत्वाऽभावात् असंभव इति भावः ॥ तस्य=मात्रपदस्य ॥

**तद्भिन्नं ज्ञानमनुभवः । स द्विविधः-'यथार्थोऽयथार्थश्चे'ति ।**

( न्या० ) अनुभवं लक्षयति—तद्भिन्नमिति । तद्भिन्नत्वं नाम—स्मृतिभिन्नत्वम् । तथा च स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम् । तत्र विशेषणानुपादाने—स्मृतावतिव्याप्तिः, विशेष्यानुपादाने—घटादावतिव्याप्तिरतस्तद्वारणाय विशेषण—विशेष्ययोरुभयोरुपादानम् । अनुभवं विभजते—स द्विविध इति ॥

(प०) तदिति । स्मृतित्वावच्छिन्नभिन्नमित्यर्थः । तेन यत्किंचित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेऽपि न क्षतिः । घटादावतिव्याप्तिवारणाय--ज्ञानमिति । स्मृतिवारणाय--तद्भिन्नमिति ॥

(दी०) अनुभवं लक्षयति—तद्भिन्नमिति । स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः । अनुभवं विभजते—स द्विविध इति ।

---

(कि०)मूले-तद्भिन्नमिति । स्मृतित्वावच्छिन्नभिन्नत्वे सति ज्ञानत्वमिति लक्षणार्थः । घटादावतिव्याप्तिवारणाय—ज्ञानत्वम् । स्मृतावतिव्याप्तिवारणाय--स्मृतित्वावच्छिन्नभिन्नत्वमिति ॥ यथार्थः=प्रमा ॥ अयथार्थः=अप्रमा ॥

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः । यथा 'अयं घट' इति ज्ञानम् । सैव प्रमेत्युच्यते ॥**

( न्या० ) यथार्थानुभवं लक्षयति—तद्वतीति । 'तद्वती'त्यत्र सप्तम्यर्थो—विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः, तथा च (१)तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम्,

---

(१) अत्र तद्वन्निष्ठविशेष्यतायाः तन्निष्ठप्रकारतायाश्च निरूपकत्वसम्बन्धेन अनुभवे अन्वयः, न तु परस्परं प्रकारताविशेष्यतयोः, तथा च तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे च सति अनुभवत्वम् इति लक्षणं बोध्यम् ॥ रजते 'इदं रजत'-मितिज्ञाने-रजतं विशेष्यम्, रजतत्वं विशेषणं प्रकारः, रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपकत्वे सति रजतत्वनिष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं तत्र वर्तते इति तस्य प्रमात्वं बोध्यम् । एतल्लक्षणे विशेष्यत्वप्रकारत्वयोर्निरूपकत्व( साक्षात् )सम्बन्धेनाऽनुभवेऽन्वयो भवति । किन्तु तथा सति रङ्गरजतयोः—यत्र 'इमे रजतरङ्गे'इति समूहालम्बनं ज्ञानं जातम्, सोऽयमनुभवोऽयथार्थः, तत्र यथार्थानुभवलक्षणस्याऽतिव्याप्तिः, यद्यथा—'इमे रजतरङ्गे' इति ज्ञाने—रजतत्वनिष्ठा प्रकारता रङ्गनिष्ठा च विशेष्यता वर्तते, एवं रङ्गत्वनिष्ठा प्रकारता रजतनिष्ठा

उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानम्। अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः॥ तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति तु निष्कर्षः॥ अन्यथा यथाश्रुते—रङ्ग-रजतयोः—'इमे रजत-रङ्गे' इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्व-रजतत्वप्रकारकत्वयोः, रङ्गत्ववद्विशेष्यकत्व-रङ्गत्वप्रकारकत्वयोः सत्त्वात्। उक्तनिष्कर्षे तु नातिव्याप्तिः, (१) रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावात्। किंतु समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वात्। एवं रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वप्रकारताया रजतत्ववद्विशेष्यता-

विशेष्यता च वर्तते। तादृशप्रकारताद्वयस्य विशेष्यताद्वयस्य च निरूपकानुभवत्वमपि तत्रास्ति। तथा च रजतत्ववद्रङ्गनिष्ठविशेष्यतानिरूपकत्वे सति रजतत्वनिष्ठप्रकारतानिरूपकत्वम्, एवम्—रङ्गत्ववद्रजतनिष्ठविशेष्यतानिरूपकत्वे सति रङ्गत्वनिष्ठप्रकारतानिरूपकत्वं च तत्राऽनुभवे वर्तते इति भवत्यतिव्याप्तिः। तद्वारणाय–विशेष्यताया निरूपितत्वसम्बन्धेन प्रकारतायामन्वयो नत्वनुभवे, अनुभवे तु प्रकारताया एव निरूपकत्वसम्बन्धेन अन्वयः, तथा च 'तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठप्रकारता तादृशप्रकारतानिरूपकानुभवत्वं यथार्थत्वमिति निष्कर्षः॥ 'इदं रजत'मित्यत्र रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपिता रजतत्वनिष्ठा प्रकारता वर्तते तत्र लक्षणसमन्वयः। उक्तसमूहालम्बनभ्रमस्य तु रङ्गांशे रजतत्वावगाहित्वेन रजतत्वनिष्ठप्रकारताया रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वात् रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितत्वाऽभावात्, एवं-रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वनिष्ठप्रकारताया रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितत्वात् रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाऽभावाच्च, रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपिता रजतत्वप्रकारता न मिलति रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपिता रङ्गत्वनिष्ठा प्रकारता च न मिलति। अतस्तत्र नाऽतिव्याप्तिरिति ध्येयम्। ययोर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरेवाऽवच्छेद्याऽवच्छेदकभाव इति सिद्धान्तः। तद्वत्त्वम्—येन सम्बन्धेन प्रकारो विशेष्ये वास्तविकः स सम्बन्धः प्रकारतावच्छेदकस्तेन तद्वत्त्वं ग्राह्यमित्यपि बोध्यम्॥

(१) अथ पाठान्तरम्—"तज्ज्ञानस्य रंगांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रङ्गत्वनिष्ठप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रजतत्वप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाऽभावाच्चे"ति॥

निरूपितत्वाच्चेति। (१) नानामुख्यविशेष्यताशालिज्ञानं समूहालम्बनम् ॥

(प०) **तद्वतीति**। तद्वति तत्प्रकारो यस्य स तथेत्यर्थः। तद्वद्विशेष्यकत-त्प्रकारक इति यावत्। स्मृतिवारणाय--अनुभव इति। अयथार्थानुभववारणाय--तद्वतीति। निर्विकल्पकेऽतिव्याप्तिवारणाय--तत्प्रकारक इति ॥

(दी०) यथार्थानुभवं लक्षयति—तद्वतीति। ननु 'घटे घटत्वम्' इति प्रमाया-मव्याप्तिः, घटत्वे घटाभावादिति चेत्? न, 'यत्र यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्धा-नुभवः' इत्यर्थात् घटत्वेऽपि घटसम्बन्धोऽस्ति इति नाव्याप्तिः॥ स एवेति। यथार्थानुभव एव शास्त्रे 'प्रमा' इत्युच्यते इत्यर्थः।

---

(कि०) **मूले तद्वतीति**। 'यथार्थ–इति लक्ष्यनिर्देशः। घटत्वादिमति घटादौ घटत्वादि-प्रकारकोऽनुभवः–यथार्थः। 'घट'इति ज्ञाने घटत्वं प्रकारः, घटो विशेष्यः, घटत्वनिष्ठा प्रकारता, घटनिष्ठा विशेष्यता, प्रकारता-विशेष्यते ज्ञाननिरूपिते, ज्ञानं तयोर्निरूपकम्, 'तद्वता'त्यत्र सप्तम्यर्थो–विशेष्यता, 'तत्पदेन प्रकारीभूतो धर्मः, 'वत्'पदेन धर्मवान् घटः, सप्तम्यर्थविशेष्यताया निरूपकत्वसम्बन्धेन अनुभवेऽन्वयः, धर्मनिष्ठप्रकारताया अपि निरूपकत्वसम्बन्धेनाऽनुभवेऽन्वयः, तथा च–'तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वमिति फलितो लक्षणार्थः॥ उक्तलक्षणे स्मृतिवारणायाऽनुभवत्वनिवेशः। ननु 'तद्वती'त्यस्य—तदधि-करण–इत्यर्थकतया 'घटे घटत्व'मितिप्रमात्मके ज्ञानेऽव्याप्तिः। घटस्य आधेयतासम्बन्धेन घटत्वेऽ-न्वयः, अतो घटः प्रकारः, घटत्वं विशेष्यम्, आधेयतासम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन घटात्मकप्रकारस्याऽधिकरणाऽप्रसिद्धिरि'त्याशङ्कते–दीपिकायां–-ननु 'घटे घटत्व'-मिति॥ उत्तरयति–नेत्यादिना॥ यत्रेति। 'तद्वति तत्प्रकारकोऽनुभव'इतिमूलस्य 'तत्सम्बन्धवति तत्सम्बन्धानुभवो यथार्थ' इत्यर्थो लक्षणयाऽव्याप्तिवारणायाऽनुसरणीयः। तथा च घटत्वस्यापि घटसम्बन्धितया तादृशप्रमायामाधेयतया घटसम्बन्धिघटत्वविशेष्यकत्वावच्छिन्नघट-प्रकारकत्वस्य सत्त्वान्नाऽव्याप्तिरिति ध्येयम्॥ **यथार्थानुभव एवेति**। 'एव' कारेण यथार्थ-स्मृतिव्यवच्छेदः। यथार्थज्ञानमात्रस्य प्रमात्वे स्मृतिकरणस्य अनुभवस्य प्रमितिकरणत्वप्राप्त्या पञ्चमप्रमाणत्वाऽऽपत्तेरिति तु तत्त्वम्॥

## तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः ॥

(न्या०) अयथार्थानुभवं लक्षयति—**तदभाववतीति**। अत्रापि पूर्ववत् 'तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्व विव-

(१) "घटपटमठा"इत्याकारकज्ञानीया या नाना=अनेकाः. मुख्यविशेष्यताः. तन्निरूपक-ज्ञानं समूहालम्बनमित्यर्थः॥

क्षणीयम् । (१) अन्यथा रङ्ग-रजतयोः—'इमे रङ्गरजते' इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः । एतत्समूहालम्बनस्य रङ्ग-रजतोभयविशेष्यकत्वेन रजतत्व-रङ्गत्वोभयप्रकारकत्वेन च रजतत्वाऽभाववद्रङ्गविशेष्यकत्व-रजतत्वप्रकारकत्वयोः, रङ्गत्वाभाववद्रजतविशेष्यकत्व-रङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः । उदाहरणम्—यथा शुक्तौ 'इदं रजतम्' इति ॥

(५०) तदभावेति । तदभाववद्विशेष्यकतत्प्रकारकोऽनुभवोऽयथार्थानुभव इत्यर्थः । यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । (२) अयथार्थ स्मृतिवारणाय-अनुभव इति । ( ३ ) यथार्थानुभवेऽतिव्याप्तिनिरसनाय—तदभाववतीति ( ४ ) निर्विकल्पकवारणाय—तत्प्रकारक इति ॥

---

(६४) पृष्ठे पदकृत्ये—अयथार्थाऽनुभववारणायेति । 'तद्वती'त्यनुपादाने 'तत्प्रकारकाऽनुभवत्वस्य 'शुक्तौ—इदं रजत'—मित्ययथार्थानुभवेऽतिव्याप्तिः, तत्पदेन—रजतत्वमादाय रजतत्वप्रकारकानुभवत्वस्य तत्र सत्त्वात् । 'तद्वती'त्युपादाने तु तस्य रजतत्ववति रजते रजतत्वप्रकारकाऽनुभवत्वाभावान्नातिव्याप्तिः ॥ तद्वन्निष्ठविषयतामात्रस्य लक्षणघटकत्वमते—आह—निर्विकल्पके—इति । 'तत्प्रकारके'त्यनुपादाने 'घटघटत्वे'इत्याकारको यः—निर्विकल्पकज्ञानीया या प्रकारताख्य—संसर्गताख्य विशेष्यताख्यविषयत्वाऽतिरिक्ता घटत्वधर्मवद्घटनिष्ठा चतुर्थी=विषयता तन्निरूपको—निर्विकल्पकाऽनुभवः तत्राऽतिव्याप्तिः, तद्वारणाय—'तत्प्रकारक' इति । तथा चोक्तनिर्विकल्पकाऽनुभवस्य घटत्ववद्घटनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारतानिरूपकत्वविरहान्नातिव्याप्तिरिति भावः ॥

(१) तदभाववन्निष्ठविशेष्यतानिरूपकत्वस्य तन्निष्ठप्रकारतानिरूपकत्वस्य चाऽनुभवे विवक्षणीयत्वे—'तदभाववन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे च सति अनुभवत्वम्' अयथार्थत्वमित्यस्य लक्षणत्वे इत्यर्थः ।

(२) रजतत्वाभाववति शुक्तिविशेषे रजतत्वप्रकारकस्य 'शुक्ताविदं रजत'मितिस्मरणस्य वारणायेत्यर्थः ॥ ( ३ ) यथार्थानुभवे='रजते'—'इदं रजत'—मित्याकारकरजतत्वप्रकारकयथार्थानुभवेऽतिव्याप्तिवारणाय—तदभाववतीति । तथा चोक्तप्रमायां रजतत्वाभाववति रजतत्वप्रकारकानुभवत्वविरहान्नातिव्याप्तिरिति भावः । ( ४ ) 'घटाभाव—भूतले'—इत्याकारको यो विशेष्यताऽऽख्य—संसर्गताख्यप्रकारताख्यविषयत्वाऽनिरूपको 'घटाभाववद्भूतल'निष्ठाया निर्विकल्पकज्ञानीयचतुर्थविषयताया निरूपको निर्विकल्पकाऽनुभवस्तत्राऽतिव्याप्तिवारणाय—तत्प्रकारक इति । तथा चोक्तानुभवस्य घटाभाववद्भूतलनिष्ठविशेष्यतानिरूपित—घटाभावनिष्ठप्रकारतानिरूपकत्वाऽभावान्नातिव्याप्तिरितिभावः ॥

(दी०) अयथार्थानुभवं निरूपयति—तदभाववतीति । ननु 'इदं संयोगि'इति प्रमायामतिव्याप्तिः, इति चेन्न, यदवच्छेदेन यत्सम्बन्धाभावः, तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वात् नातिव्याप्तिः ।

---

(वि०) मूले-तदभाववतीति । 'अयथार्थ' इति लक्ष्यनिर्देशः । यथा—रजतत्वाभाववत्यां शुक्तौ रजतत्वप्रकारकोऽनुभवः-शुक्तौ-'इदं रजत'मिति, स अयथार्थ इत्यर्थः ॥ अत्रापि 'सति'सप्तम्यर्थो-विशेष्यता, तस्या अनुभवे निरूपकत्वसम्बन्धेन अन्वयः, 'तत्प्रकारक'इत्यत्र तन्निष्ठप्रकारताया अपि निरूपकत्वसम्बन्धेनाऽनुभवेऽन्वयः, तथा च 'तदभाववन्निष्ठविशेष्यता-निरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वमिति पर्यवसितम् ॥ ननु-अस्य 'रङ्गरजतयोः'-'इमे रङ्गरजते' इति यथार्थज्ञानेऽतिव्याप्तिः । तत्र रङ्गरजते—विशेष्ये स्तः, रङ्गत्वरजतत्वे-प्रकारे स्तः, अतो रङ्गरजतोभयविशेष्यतानिरूपकत्वेन रङ्गत्वरजतत्वोभयप्रकारता-निरूपकत्वेन च तादृशानुभवे रङ्गत्वाभाववद्रजतनिष्ठ.विशेष्यतानिरूपकत्वे सति रजतत्वप्रकारता-निरूपकत्वस्य, रजतत्वाऽभाववद्रङ्गनिष्ठ.विशेष्यतानिरूपकत्वे सति रङ्गत्वप्रकारतानिरूपकत्वस्य च सत्त्वात् । अतो विशेष्यताया निरूपितत्वसम्बन्धेन प्रकारतायामन्वयो न त्वनुभवे, तादृशप्रकार-ताया एवानुभवेऽन्वयः, तथा च 'तदभाववन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तादृश-प्रकारतानिरूपकत्वे सत्यनुभवत्वं अयथार्थत्वम्'इतिपर्यवसितम् । लक्षणम् । प्रकृते रङ्गत्वनिष्ठा प्रकारता रङ्गनिष्ठविशेष्यतानिरूपिता, न तु रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपिता, एवं-रज-तत्वनिष्ठा प्रकारता रजतनिष्ठविशेष्यतानिरूपिता, न तु रजतत्वाऽभाववद्रङ्गनिष्ठविशेष्यतानिरूपिता, अतो नातिव्याप्तिरिति ॥ स्मृतिवारणाय-अनुभवेति ॥ तादृशपरिष्कृतलक्षणस्याऽप्यतिव्याप्तिं शङ्कते दीपिकायां—ननु 'इदं संयोगी'ति । अयं भावः—संयोगोऽव्याप्यवृत्तिपदार्थः, वानरादेः संयोगो वृक्षे शाखावच्छेदेन वर्तते, मूलावच्छेदेन तु नास्ति, अतो मूलावच्छेदेन संयोगाभाव-वद्वृक्षनिष्ठविशेष्यतानिरूपिता या शाखावच्छेदेन संयोगनिष्ठा प्रकारता तन्निरूपकानुभवत्वस्य—'इदं संयोगी'तिज्ञाने सत्त्वात्, मूलावच्छेदेन वृक्षः संयोगाऽभाववानिति प्रत्ययात् ॥ उत्तरयति-नेति । यदवच्छेदेनेति । यदवच्छेदेन यत्सम्बन्धावच्छिन्नप्रतियोगिताको यदभावस्तद्वन्निष्ठ-'वशेष्यतानिरूपिता या तदवच्छेदेन तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तादृशप्रकारतानिरूपकत्वे सत्यनुभवत्वस्य विवक्षितत्वादित्यर्थः ॥ अक्षरार्थः—यदवच्छेदेन=मूलावच्छेदेन वृक्षे, यित्सम्बन्धाभावः=यत्सम्बन्धेन यस्याऽभावः, समवायसम्बन्धेन संयोगस्याऽभावो वर्तते इति यावत् । तादृशाभाववति वृक्षे-इति शेषं पूरणीयम् । तदवच्छेदेन=मूलावच्छेदेन, तत्सम्बन्ध-ज्ञानस्य=तत्सम्बन्धेन तत्प्रकारकज्ञानस्य, समवायसम्बन्धेन संयोगप्रकारकानुभवस्येति यावत् । विवक्षितत्वात्=अयथार्थानुभवत्वस्य परिष्करणीयत्वादिति ॥ समन्वयति—**संयोगाभावावच्छे-देनेति** । 'इदं संयोगी'त्यत्र संयोगाभावावच्छेदेन=समवायेन संयोगाभाववन्मूलावच्छेदेन-

वृक्षे=यदि तादृशमूलावच्छेदेनैव समवायेन संयोगज्ञानं='संयोगवानि'त्यनुभवः, तदा तादृशानुभवस्य भ्रमत्वात्=अयथार्थत्वात् लक्ष्यमेवेति तत्र लक्षणगमनमिष्टम् ॥ अथ च संयोगावच्छेदेन='इदं संयोगी'त्यत्र समवायेन संयोगवच्छाखावच्छेदेन वृक्षे यदि तादृशशाखावच्छेदेनैव संयोगसम्बन्धस्य=समवायसम्बन्धेन संयोगस्य ज्ञानं, तदा स यथार्थानुभवस्तत्र लक्षणाऽगमनान्नातिव्याप्तिरिति भावः ॥ अथवा–प्रतियोगिवैयधिकरण्यम्–अभावे निवेशनीयम् ॥ अयम्–अव्याप्यवृत्तिपदार्थविषयकभ्रमस्थले प्रपञ्चः ॥ व्याप्यवृत्तिपदार्थविषयकभ्रमस्थले तु–'तत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभाववत्तन्निष्ठविशेष्यतानिरूपिता या तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तन्निरूपकत्वे सति अनुभवत्वम्–अयथार्थत्वमिति बोध्यम् ॥

**यथार्थानुभवश्चतुर्विधः–प्रत्यक्षाऽनुमित्युपमितिशाब्दभेदात् ॥**

( न्या० ) यथार्थानुभवं विभजते–**चतुर्विध इति** ॥

(प०) यथार्थेति । यथार्थानुभवः–प्रत्यक्षप्रमैवेति–चार्वाकाः । अनुमितिरपीति–काणाद–बौद्धाः । उपमितिरपीति–नैयायिकैकदेशिनः । शाब्दमपीति–नैयायिकाः । अर्थापत्तिरपीति–प्राभाकराः । अनुपलब्धिप्रकोऽपीति–भाट्ट-वेदान्तिनौ । साभाविकैतिह्यकावपीति–पौराणिकाः । चैष्टिकोऽपीति–तान्त्रिकाः । एतेषां मतेऽस्वरसं संभाव्य तस्य चातुर्विध्यं दर्शितम् ॥

(दी०) यथार्थानुभवं विभजते–यथार्थेति ।

---

(कि०) मूले—प्रत्यक्षेति । प्रत्यक्षं चाऽनुमितिश्चोपमितिश्च शाब्दबोधश्चेति भेदात् प्रमा चतुर्विधा । यथार्थाऽनुभवं विभजते–इति । यथार्थाऽनुभवत्वाऽवान्तरमिथोविरुद्धधर्मप्रकारकज्ञानाऽनुकूल–शब्दप्रयोगात्मकव्यापाराऽनुकूलकृतिमान् ग्रन्थकार इति बोधः ॥

**तत्करणमपि चतुर्विधम्-प्रत्यक्षाऽनुमानोपमानशब्दभेदात् ॥**

( न्या० ) **तत्करणमिति** । फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः । प्रत्यक्षादिचतुर्विधप्रमाणानां 'प्रमाकरणत्वं' सामान्यलक्षणम् एकैकप्रमाणलक्षणं तु वक्ष्यते–'प्रत्यक्षज्ञाने'त्यादिना ॥

(प०) तदिति । यथार्थानुभवात्मकप्रमायाः करणमित्यर्थः ॥

(दी०) प्रसङ्गात् प्रमाकरणं विभजते–तत्करणमिति । प्रमाकरणमित्यर्थः । प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम् ।

---

(कि०) प्रमाकरणानि–प्रत्यक्षानुमानोपमानशब्दभेदाच्चत्वारि । प्रत्यक्षं क्रियतेऽनेनेति–व्युत्पत्त्या प्रत्यक्षप्रमाणानि=इन्द्रियाणि । अनुमीयतेऽनेनेति–व्युत्पत्त्या अनुमितिकरणं=

अनुमानं=व्याप्तिज्ञानम् । उपमीयतेऽनेनेति–व्युत्पत्त्या उपमितिकरणं=उपमानं=सादृश्य-ज्ञानम् । शब्द्यतेऽनेनेति—व्युत्पत्त्या शाब्दबोधकरणं=शब्दः=शब्दज्ञानम्,–पदज्ञानमिति यावत् ॥ प्रमाणानि चत्वार्येव, न न्यूनानि नाऽप्यधिकानि । अर्थापत्त्यनुपलब्धिसंभवैतिह्यचेष्टात्मकानां केषांचिदभिमतप्रमाणानामत्रैवाऽन्तर्भावात् ॥

ननु–यथार्थानुभवनिरूपणप्रकरणेऽसङ्गतानां तत्करणानां निरूपणमन्याय्यमित्याशंकां निवारयति दीपिकायां—प्रसङ्गादिति । प्रसङ्गसंगतेरित्यर्थः । स्मृतस्योपेक्षाऽनर्हत्वं=प्रसङ्गः सामान्यधर्मप्रकारेण ज्ञानविषयस्यैव विशेषधर्मप्रकारेण प्रतिपादनं संभवतीत्यतः प्रमाणानां सामान्यलक्षणं स्फुटयति—प्रमायाः करणमिति । प्रमात्वावच्छिन्नकार्यतानिरूपिताऽसाधारणकारणतावत्त्वं–प्रमाणत्वमित्यर्थः ॥

## असाधारणं कारणं करणम् ॥

( न्या० ) करणलक्षणमाह—असाधारणमिति । 'व्यापारवदसाधारणं कारणं'–करणमित्यर्थः । असाधारणत्वं च–'कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, यथा–दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम् । कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डः—असाधारणं कारणम्, भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम् । साधारणत्वं च-'कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्' । ईश्वराऽदृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् ॥

(प०) असाधारणमिति । कालादिवारणाय–असाधारणमिति । व्यापारेऽतिव्याप्तिवारणाय–व्यापारवदित्यपि देयम् । ( १ ) व्यापारश्च–द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । ( २ ) ईश्वरेच्छादिवारणाय–तज्जन्यत्वे सतीति । कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं ( ३ ) कुलालपुत्रस्याप्यस्त्यतस्तत्रातिव्याप्तिवारणाय–प्रथमं सत्यन्तम् । दण्डरूपादिवारणाय–तज्जन्यजनक इति ॥

---

(१) व्यापारवत्त्वं साक्षात् स्वजनकत्वसम्बन्धेन बोध्यम्, भवति हि भ्रमणरूपो व्यापारो दण्डे स्वजनकत्वसम्बन्धेन वृत्तिमानिति ॥ द्रव्याऽन्यत्वे सतीति । यथा–दण्डेन घटजनने भ्रमणं व्यापारः, यतस्तत् कपालात्मकद्रव्यभिन्नत्वे सति दण्डजन्यत्वे च सति दण्डजन्यघटजनकं भवतीति ( २ ) ईश्वरेच्छेति । 'तज्जन्यत्वे सती'त्यनुपादाने ईश्वरेच्छायां कपालात्मकद्रव्यभिन्नत्वस्य दण्डजन्यघटजनकत्वस्य च सत्त्वादतिव्याप्तिः । तदुपादाने तु नित्यायास्तस्या दण्डजन्यत्वविरहान्नातिव्याप्तिः ॥ ( ३ )अत्रेदमीक्षणीयम्–घटजनकत्वं हि कुलालत्वेन रूपेण, कुलालपदेन इदानीं पितृत्वेनाऽभिमतव्यक्तेर्ग्रहणे, तज्जन्यत्वदलं पुत्रे वर्तते, किन्तु कुलालजन्यघटजनकत्वं तत्र न घटते,-

(दी०) कारणलक्षणमाह—असाधारणमिति साधारणकारणे दिक्कालादावति-व्याप्तिवारणाय—असाधारणमिति ।

( कि० ) मूले–प्रमाणज्ञानस्य करणसामान्यज्ञानाधीनत्वात् करणं तावन्निर्वक्ति–असाधारण-मिति । असाधारणत्वं=व्यापारवत्त्वम् । तथा च फलाऽयोगव्यवच्छिन्नव्यापारवत् कारणं करण-मिति फलितार्थः । व्यापारेऽतिव्याप्तिवारणाय–व्यापारवदिति । व्यापारत्वं–तज्जन्यत्वे सति तज्जन्य-जनकत्वम् । असाधारणत्वं–कार्यत्वाऽतिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् , यथा घटः–कार्यम् , चक्रभ्रमणं–व्यापारः, दण्डः–असाधारणकारणम् । घटे कार्यत्वाऽतिरिक्तो घटत्वधर्मः, तदवच्छिन्नघटनिष्ठकार्यतानिरूपितकारणताशालित्वम् । ईश्वरादौ वर्तते तत् । अनुभवत्वव्याप्यधर्मा-वच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणत्वं प्रमाणेष्वेव, न त्वीश्वरादाविति भावः ॥

कार्यनियतपूर्ववृत्ति कारणम् ॥

( न्या० ) कारणं लक्षयति–कार्यनियतेति । कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वम् । नियतत्वविशेषणानुपादाने पूर्ववर्तिनो (१) रासभादे-रपि घटादिकारणत्वं स्यादतो–'नियतत्वे सती'ति विशेषणम् । नियतपूर्वव-र्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतः–'अनन्यथासिद्ध' पदमपि कार-णलक्षणे निवेशनीयम् , एवं च न तत्राऽतिव्याप्तिः, दण्डरूपादीनां अन्य-थासिद्धत्वात् ॥

( प० ) कार्येति । कार्यान्नियतावश्यंभाविनी पूर्ववृत्तिः = पूर्वक्षणवृत्तिर्यस्य तत्तथेत्यर्थः । अनियतरासभादिवारणाय—नियतेति । कार्यवारणाय–पूर्वेति । दण्ड-त्वादिवारणाय–'अनन्यथासिद्धत्व'विशेषणस्यावश्यकत्वेन तत एव रासभादिवारण-सम्भवे 'नियत' पदमनर्थकमेव । एवं चानन्यथासिद्धकार्यपूर्ववृत्तिकारणमिति फलि-तम् । अनन्यथासिद्धत्वम्—अन्यथासिद्धिशून्यत्वम् । अन्यथासिद्धिश्चावश्यक्लृप्त-नियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसंभवे तत्सहभूतत्वं' तच्च दण्डत्वादौ वर्ततेऽतो दण्डत्वादिकमन्यथासिद्धम् ॥

कुलालजन्यघटं प्रति पुत्रस्य जनकत्वे तु कुलालपितृत्वेन पितुरन्यथासिद्धत्वं जागर्ति, तथा सति घटे कुलालत्वाऽवच्छिन्ननिरूपितजन्यत्वं व्याहन्यते, घटे यदि कुलालजन्यत्वं रक्ष्यते तदा कुलालजन्य-घटजनकत्वं पुत्रव्यक्तित्वेन न संभवति । यदि च पितृपुत्राभ्यां संभूय घट उत्पादितस्तदा कुलालपुत्रे कपाले च व्यापारत्वमिष्टमेव, क्षत्यभावात्, अतो 'द्रव्याऽन्यत्वे सती'ति विशेषणदानं चिन्त्यमेवेति ॥

(१) तत्तद्घटार्थं मृत्तिकावहनेन रासभस्य तत्तद्घटं प्रति कारणत्वसत्त्वेऽपि घटत्वावच्छिन्न-सामान्ये कारणत्वाऽभावात् अन्यथासिद्धत्वमिति भावः ॥

(दी०) कारणलक्षणमाह--कार्येति। 'पूर्ववृत्तिकारणम्' इत्युक्ते रासभादौ अतिव्याप्तिः स्यादतो–नियतेति। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः–पूर्ववृत्तीति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत्! न, 'अनन्यथासिद्धत्वे सति' इति विशेषणात्। अनन्यथासिद्धत्वम्–अन्यथासिद्धिविरहः। अन्यथासिद्धिः त्रिविधा–येन (१) सहैव

---

( कि० ) मूले–कार्यनियतपूर्ववृत्तीति। कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वमित्यर्थः। नियतत्वं हि–व्यापकत्वम्,–कार्याऽधिकरणवृत्त्यत्यन्ताऽभावाऽप्रतियोगित्वम्। यत्किंचिद्घटं प्रति मृदाद्यानयनद्वारा रासभस्य कारणतासम्भवेऽपि घटत्वावच्छिन्नं प्रति कारणत्वं नास्ति, यतः–यादृशघटादिकार्ये या मृत्तिका रासभेन नाऽऽनीता, तादृशघटवन्निष्ठात्यन्ताभावप्रतियोगित्वस्य रासभे सत्त्वात् रासभो न नियतपूर्ववृत्तिरिति भावः॥ दीपिकायां—तावन्मात्रेति। नियतत्वमेव कारणत्वमित्युक्तौ कार्ये स्वस्मिन् स्वनियतत्वसत्त्वेन अतिव्याप्तिः, तद्वारणाय–पूर्ववृत्तीति। तथा च स्वव्यापकत्वस्य स्वस्मिन् सत्त्वेऽपि स्वपूर्वकालवृत्तित्वस्य तत्र विरहात् नाऽतिव्याप्तिरिति हृदयम्॥ पटं प्रति तन्तुरूपस्याऽपि नियतपूर्ववृत्तित्वादतिव्याप्तिं शंकते—ननु तन्तुरूपमिति॥ उत्तरयति--नेत्यादिना॥ अनन्यथेति। अन्यथासिद्धिशून्यत्वे सति कार्यताऽवच्छेदकसम्बन्धेन कार्याऽधिकरणे कार्याऽव्यवहितप्राक्क्षणाऽवच्छेदेन विद्यमानाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं कारणत्वमिति–समुदितलक्षणार्थः॥ निरुक्तलक्षणज्ञानम् अनन्यथासिद्धत्वज्ञानं विना न संभवति, अनन्यथासिद्धत्वज्ञानं चाऽन्यथासिद्धिज्ञानं विना न संभवतीत्यतः प्रथमम् अन्यथासिद्धीर्दर्शयति—अन्यथासिद्धिरिति॥ येन सहैवेति। येन=तन्तुना सहैव यस्य=तन्तुरूपस्य तन्तु-

---

(१) केचित्तु साहित्यं एकज्ञानविषयत्वरूपमिति। यथा 'अयं शुक्लतन्तुः पटपूर्ववृत्ति'रिति सविकल्पके प्रत्यक्षज्ञाने प्रकारस्य तन्तुत्वस्य तन्तुरूपस्य च भानं जायते, यतः–रूपस्य चाक्षुपप्रत्यक्षजनकत्वेन तन्तुत्वस्य सविकल्पकत्वसम्पादकत्वेन च तन्तावावश्यकत्वात्। 'अयं शुक्लतन्तुः पटपूर्ववृत्ति'रितिसविकल्पकप्रत्यक्षज्ञानीयविषयता तन्तौ तन्तुरूपे तन्तुत्वे च वर्तते तत्र तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञानेऽनतिप्रसक्ततन्तुरूपत्वेनैव विषयता वाच्या नत्वतिरिक्तरूपत्वमात्रेण, तथा च तन्तुरूपमन्यथासिद्धम्॥ एवं तन्तुत्वस्य पूर्ववृत्तित्वज्ञानं तन्तुत्वविशिष्टतन्तुविषयकमेवेति तन्तुत्वमप्यन्यथासिद्धम्। अत्र यथाश्रुते–'येन सहैव यस्येति' पदेन तन्तुत्वेन तन्तुरूपेण सहैव यस्य तन्तोः पूर्ववृत्तित्वमवगम्यतेऽतः तन्तोरन्यथासिद्धत्वापत्तिः। एवं–तन्तुना सहैव तन्तुसंयोगस्य पूर्ववृत्तित्वमवगम्यतेऽतस्तन्तुसंयोगस्याप्यन्यथासिद्धत्वापत्तिः, विनिगमनाविरहात् मूलाऽसंगतिश्च, तद्वारणाय–'येने'त्यस्य—'स्वतन्त्रान्वयव्यतिरेकशालिने'ति यस्ये' त्यस्य च स्वतन्त्रान्वयव्यतिरेकशून्यस्येति विशेषणं बोध्यम्। तेन न तन्तुत्वेन तन्तुरूपेण ,च तन्तोरन्यथासिद्धिः, न वा तन्तुसंयोगस्य तन्तुनाऽन्यथासिद्धिरिति भावः। 'यत्–स्वातन्त्र्येण तत्कार्यनिरूपिताऽन्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणानवच्छिन्नरवन्निष्ठतत्कार्यनिरूपितनियत-

यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम्, यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। अन्यं प्रति पूर्ववृत्तित्वे ज्ञाते एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्, यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रति आकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धम्, यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवं च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्।

---

त्वस्य च यं=पटं प्रति पूर्ववृत्तित्वमवगम्यते तं=पटं प्रति तत्=तन्तुरूपं तन्तुत्वं च तेन =तन्तुना कारणेन, अन्यथासिद्धमित्यर्थः ॥ अत्र पटं प्रति तन्तुना तन्तुरूपस्य तन्तुत्वस्य च साहित्यं कीदृशमिति चेत्! उच्यते,—स्वोपस्थितिजनकोपस्थितिविषयत्वरूपं, एकक्रियाऽन्वयित्वरूपं वा तत्। स्वं=शुक्लतन्त्वादिः, तदुपस्थितिजनकोपस्थितिः=शुक्लत्वतन्तुत्वाद्युपस्थितिः, तद्विषयत्वं तन्तुत्वादावित्ति ॥ द्वितीयामन्यथासिद्धिं दर्शयति—अन्यं प्रतीति। आकाशत्वं हि शब्दसमवायिकारणत्वं, तथा च अन्यं—शब्दं प्रति गगनस्य पूर्ववृत्तित्वे= कारणत्वे ज्ञाते सत्येव यस्य=आकाशस्य यं=घटादिकं प्रति पूर्ववृत्तित्वं=कारणत्वम् अवगम्यते तं=घटादिकं प्रति तत्=शब्दकारणमाकाशं अन्यथासिद्धमित्यर्थः। शब्दकारणत्वमगृहीत्वाऽऽकाशस्याऽऽकाशत्वेन घटपूर्ववृत्तित्वं गृहीतुमशक्यमित्याकाशोऽन्यथासिद्ध इति भावः। एवम्—'अन्यं=कुलालं प्रति कुलालपितुः पूर्ववृत्तित्वे ज्ञाते सत्येव यस्य= कुलालपितुः यं=घटं प्रति पूर्ववृत्तित्वमवगम्यते तं=घटं प्रति स कुलालपिता अन्यथासिद्ध इत्यपि बोध्यम् ॥ तृतीयामन्यथासिद्धिं दर्शयति—अन्यत्रेति। अयं भावः—पाकजस्थले घटादावुत्पत्स्यमानगन्धरूपयोः प्रागभावौ गन्धरूपयोः परस्परं पूर्ववर्तिनावेव, किन्त्वपाकजस्थले जलादौ गन्ध एव नोत्पद्यते, रूपं तु जायते, तत्र तयोः प्रागभावावसहभूतौ, अतो गन्धं प्रति गन्धप्रागभावः कारणं, रूपप्रागभावोऽन्यथासिद्धः। लक्षणसमन्वयस्तु—पृथिव्यामवश्यक्लृप्तनियतपूर्ववर्तिनो गन्धप्रागभावत कार्यस्य—गन्धस्य सम्भवे सति पाकजस्थले पृथिव्यां तत्सहभूतः गन्धप्रागभावसहभूतः, अन्यत्र=अपाकजस्थले जलादौ च असहभूतः रूपप्रागभावोऽन्यथासिद्ध इति। एवं घटजातीयं प्रति अवश्यक्लृप्तनियतपूर्ववर्तिनो दण्डादितो घटकार्यसम्भवे दण्डसहभूतः कश्चिद्रासभादिः अन्यघटेऽसहभूतोऽत एव घटजातीयं प्रति अन्यथासिद्ध

---

पूर्ववृत्तित्वग्रहविशेष्यताकं तत् तत्कार्यं प्रत्यन्यथासिद्धमिति समुदितार्थः ॥ कारणान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालि यत् तदन्यथासिद्धमिति संक्षेपार्थः। 'दण्डसत्त्वे घटसत्त्वं' 'दण्डाभावे घटाभाव' इत्यन्वयव्यतिरेकप्रयुक्त एव 'दण्डरूप—दण्डत्वसत्त्वे घटसत्त्वं दण्डरूपदण्डत्वाभावे घटाभाव' इत्यन्वयव्यतिरेकौ भवतः, न तु 'रूपसत्त्वे घटसत्त्वं रूपाऽभावे घटाभाव'इति, रूपस्य जलेऽपि सत्त्वात् तत्र घटोत्पत्तिविरहात्। एवं 'दण्डत्वसत्त्वे घटसत्त्वं दण्डत्वाभावे घटाभाव'— इत्यपि न भवति, दण्डं विहाय दण्डत्वस्य घटाऽयोग्यवनिदण्डेऽपि सत्त्वादिति भावः ॥

इति ॥ वस्तुतस्तु—लघनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्येकमेव लक्षणम्। लघुत्वं शरीरकृतं [illegible] त [illegible]द्रव्यसमवेतत्वाऽपेक्षया महत्त्वे, उपस्थितिकृतं—गन्धं प्रति रूपप्रागभावाऽपेक्षया गन्धप्रा[illegible] [illegible]न्वयकृतं—दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ ॥ इत्येतावतैव निर्वाहे त्रिधा पञ्चधेति प्रप[illegible] [illegible]बुद्धिवैशद्यायेति मन्तव्यम् ॥

## कार्यं प्रागभावप्रतियोगि ॥

(न्या०) कार्यं लक्षयति—कार्यमिति। प्रागभावप्रतियोगित्वं-कार्यस्य लक्षणम्। कार्योत्पत्तेः पूर्वम् इह घटो भविष्यति' इति प्रतीतिर्जायते, एतत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः, तत्प्रतियोगी—घटादिरूपं कार्यम् ॥

(प०) प्रागभावेति। (१) कालादिवारणाय—प्रागिति। (२) असम्भववारणाय—प्रतियोगीति ॥

(दी०) कार्यलक्षणमाह— कार्यमिति ॥

---

(कि०) मूले—कार्यमिति। प्रागभावप्रतियोगित्वं लक्षणम्। कार्यस्योत्पत्तिपूर्वं 'इह घटो भविष्यती'ति प्रतीतिर्भवति, तद्विषयीभूतो योऽभावस्तत्प्रतियोगि घटादिरूपं कार्यम्। लक्षणे 'प्राक्' पदानुपादानेऽन्योन्याभावप्रतियोगित्वस्य सर्वत्र सत्त्वात् नित्यानामपि कार्यत्वाऽऽपत्तिः स्यात्, तद्वारणाय—प्रागभावेति ॥ असंभववारणाय—प्रतियोगीति। भावकार्ये त्रिविधं कारणमपेक्षितम्, अभावकार्ये त्वेकं निमित्तकारणमिति बोध्यम् ॥

## कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् ॥

(न्या०) कारणं विभजते—कारणमिति। समवायिकारणम्, असमवायिकारणं, निमित्तकारणं चेति ॥

(दी०) कारणं विभजते—कारणमिति।

---

(कि०) मूले—समवायीति। समवायिकारणम् असमवायिकारणं निमित्तकारणं चेति-भेदादित्यर्थः ॥ दीपिकायां—कारणं विभजते इति। कारणत्वनिष्ठव्यापकतानिरूपितव्याप्यतावन्मिथोविरुद्धधर्मावच्छिन्नप्रतिपादनाऽनुकूलव्यापारवान् ग्रन्थकार इति बोधः ॥

(१) अन्योन्याभावप्रतियोगित्वेन सर्वेषां नित्यानामपि कार्यत्वापत्तिः स्यात् तद्वारणाय—प्रागिति ॥ (२) असंभवेति। 'प्रागभावत्व'—मात्रस्य कार्यलक्षणत्वे कुत्राऽपि प्रागभावत्वं नास्तीत्यसंभवः। यदि च कार्ये प्रागभावे तत् वर्तते तदाऽव्याप्तिरूपं दूषणं बोध्यम् ॥

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः ॥**

( न्या० ) समवायिकारणं लक्षयति—**यत्समवेतमिति** । यस्मिन्समवेतं सत् = समवायेन सम्बद्धं सत्,—कार्यमुत्पद्यते तत्–समवायिकारणमित्यर्थः । उदाहरणम्—**यथा तन्तव इति** । येषु तन्तुषु समवायेन सम्बद्धं सत् पटात्मकं कार्यमुत्पद्यते तत = तन्तव समवायिकारणमित्यर्थः । सामान्यलक्षणं तु—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं' —समवायिकारणत्वमिति, समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात्, समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्न–कार्यतानिरूपित–तादात्म्यसम्बन्धावच्छिन्नकपालत्वावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्य–गुण–कर्मसु त्रिषु द्रव्यमेव समवायिकारणम् । द्रव्ये तु द्रव्यावयवाः समवायिकारणम् ! अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह—**पटश्च स्वगतरूपादेरिति** । समवायिकारणमित्यनुषज्यते ॥

( प० ) **यदिति** । यस्मिन्समवायसम्बन्धेन वर्तमानं तदित्यर्थः । चक्रादिवारणाय—**समवेतमिति** ॥

(दी०) समवायिकारणलक्षणमाह–**यत्समवेतमिति** । यस्मिन् समवेतमित्यर्थः।

---

( कि०) **यत्समवेतमिति** । यस्मिन् समवेतं सत्=समवायसम्बन्धेन सम्बद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः। यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेन उत्पद्यते तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणमिति परमार्थः ॥ **यथा–तन्तवः पटस्येति** । पटत्वावच्छिन्नं कार्यं पटः तन्तुत्वावच्छिन्नेषु तन्तुषु समवायसम्बन्धेन उत्पद्यतेऽतः पटत्वावच्छिन्नं प्रति तन्तुत्वावच्छिन्नं समवायिकारणम् ॥ द्वितीयं दृष्टान्तं–**पटश्च स्वगतरूपादेः**। पटः पटरूपं प्रति समवायिकारणमित्यर्थः । रूपत्वावच्छिन्नं कार्यं पटत्वावच्छिन्ने उत्पद्यतेऽतः पटत्वावच्छिन्नं पटरूपत्वावच्छिन्नं प्रति समवायिकारणमित्यर्थः । संयोगेन चक्रादिवारणाय—समवायेनेति । प्रमेयत्वेन घटादेः कपालस्य वा कार्यकारणभावनिरासाय–यद्धर्मेति सर्वत्र । 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमिति तु सामान्यलक्षणम् । कार्यकारणभाव एकाधिकरणे भवति, यथा–घटः समवायेन कपाले वर्तते, कपाले कपालं च तादात्म्येन वर्तते,

अतः कपालनिष्ठा कारणता तादात्म्यसम्बन्धावच्छिन्ना, घटनिष्ठा कार्यता समवायसम्बन्धावच्छिन्ना, तादृशकार्यतानिरूपितकारणताशालित्वं कपाले समन्वितं भवतीति ॥ तथा यावत्कार्यं प्रति द्रव्यं समवायिकारणं भवति, द्रव्यगुणकर्मसु जन्यभावेषु द्रव्यं समवायिकारणं जन्यद्रव्ये तु तद्द्रव्यावयवाः समवायिकारणरूपा भवन्तीति न्यायसिद्धान्तः ॥

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटरूपस्य ॥**

( न्या० ) असमवायिकरणं लक्षयति—कार्येणेति । असमवायिकारणं द्विविधम्—"कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत्-असमवायिकारणमित्येकम्, "कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तदपरमसमवायिकारणमित्यन्वयः । अत्र 'कारणेने'त्यस्य-स्वकार्यसमवायिकारणेनेत्यर्थः । जन्यद्रव्यमात्रे अवयवसंयोगस्यैवाऽसमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवाऽसमवायिकारणत्वमिति दर्शयति—**यथा तन्तुसंयोग पटस्येति** । यथा तन्तुसंयोगः पटात्मककार्येण सहैकस्मिन्नर्थे = तन्तौ समवायसम्बन्धेन वर्तमानत्वे सति कारणत्वात् पटात्मककार्यम्प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः । द्वितीयमसमवायिकारणं 'कारेणेन सहे'त्यादिना पूर्वोक्तं तदुदाहरति—तन्तुरूपमिति । कारणेन सह = पटरूपसमवायिकारणीभूतपटेन सह, एकस्मिन्नर्थे = तन्तुरूपेऽर्थे (१) समवेतं सत् = समवायसम्बन्धेन वर्तमानं सत् तन्तुरूपं पटगतरूपं प्रति कारणं भवति, अतोऽसमवायिकारणं तन्तुरूपं पटगतरूपस्य । सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति । द्रव्याऽसमवायिकारणीभूताऽवयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते । एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्व-

(१) अत्र "समवायसम्बन्धेन वर्तमानत्वे सति कारणत्वात् तन्तुरूपं पटगतरूपस्याऽसमवायिकारणमित्यर्थः" इति पाठाऽन्तरम् ॥

द्रवत्वे असमवायिकारणे भवतः। आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात्। (१) अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसम्बन्धेनैव कारणत्वात्, तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते। अवयवगुणकपालतन्तुरूपादेः स्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालतन्तुसमवेतत्वसम्बन्धेन घटपटादौ सत्त्वात्॥

( प० ) कार्येणेति। कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति आत्मविशेषगुणभिन्नत्वे सति यत् कारणं तदसमवायिकारणम्। तन्तुसंयोगादावव्याप्तिवारणाय–कार्येणेति। तन्तुरूपादावव्याप्तिवारणाय–कारणेनेति। २ आत्मविशेषगुणेऽतिव्याप्तिवारणाय—आत्मविशेषगुणभिन्नत्वे सतीति। ३) विशेषवारणाय– कारणमिति॥

(दी०) असमवायिकारणलक्षणमाह—कार्येणेति। कार्येणेत्येतदुदाहरति—तन्तुसंयोग इति। कार्येण पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुसंयोगः

---

(कि०) कार्येण कारणेन वेति। तथा च लक्षणद्वयम्। एकं–कार्येणं सहैकस्मिन्नर्थे समवेतत्वे सति यत्कारणं तदसमवायिकारणम्, तस्य दृष्टान्तं=यथा तन्तुसंयोगः पटस्येति। तथा हि–पटः समवायेन तन्तुषु वर्तते, तन्तुषु च समवायेन तन्तूनां संयोगोऽपि वर्ततेऽतः कार्येण=पटेन सहैकस्मिन्नर्थे=अभिन्नेऽधिकरणे तन्त्वात्मके समवायसम्बन्धेन वर्तमानत्वे सति यत् कारणं=तन्तुद्वयसंयोगः, स पटं प्रत्यसमवायिकारणम्॥ अत्र तन्तुषु पटः संयोगश्चसमवायेन वर्तते॥ द्वितीयं लक्षणम्–कारणेन सहैकस्मिन्नित्यादि पूर्ववत्। उदाहरणं–तन्तुरूपं पटरूपस्येति। तथाहि–कार्यं पटरूपं समवायेन पटे वर्तते, कारणं पटः समवायेन तन्तुषु वर्तते

---

(१) अवयविगुणभूतघटपटरूपादौ त्ववयवगुणीभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसम्बन्धेनैव कारणत्वात्, तत्सम्बन्धावच्छिन्नकारणताश्रयत्वं अवयवगुणभूतकपालतन्तुरूपादौ वर्तते' इति पाठान्तरम्॥

(२) 'कार्येण सह एकस्मिन्नर्थे समवेतत्वे सति कारणमि'ति लक्षणस्यैवात्मविशेषगुणेऽतिव्याप्तिर्बोध्या, न तु 'कारणेन सहे'त्यादिलक्षणस्य, आत्मनो नित्यस्य कारणस्याऽप्रसिद्धेः। इच्छां प्रति ज्ञानं निमित्तकारणं भवति, अतः–इच्छात्मकेन कार्येण सह एकस्मिन्नधिकरणे आत्मनि समवायेन वर्तमानस्य निमित्तकारणात्मकज्ञानस्य इच्छां प्रति असमवायिकारणत्वाऽऽपत्तिः, तद्वारणाय तदुपादानमिति भावः॥

(३) कार्येण द्वयणुकादिना सह एकस्मिन् परमाणौ समवेतस्य विशेषस्यापि कारणत्वाऽऽपत्तिः, तद्वारणाय–कारणमिति, तथा च विशेषाणां कुत्राऽपि कारणत्वेन नास्तीति नातिव्याप्तिः॥

पटस्याऽसमवायिकारणमित्यर्थः । कारणेन सहेत्येतदुदाहरति—तन्तुरूपमिति । कारणेन पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः ।

---

तत्र तन्तुषु समवायेन तन्तूनां रूपं वर्तते, तथा च 'कारणेन=पटरूपस्य कारणेन पटेन सह एकस्मिन्नर्थे=अभिन्नेऽधिकरणे तन्त्वात्मके समवायेन वर्तमानं सत् कारणं=तन्तुरूपम् असमवायिकारणमिति । सामान्यलक्षणं तु—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता—या समवाय-स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धावच्छिन्ना कारणता तच्छालित्वम्' । तन्तुसंयोगादावव्याप्तिवारणाय—समवायेति । तन्तुरूपादावव्याप्तिवारणाय—स्वसमवायिसमवेतत्वेति । नित्यद्रव्यवृत्तिविशेषाणां कुत्रापि कारणत्वं नास्ति, अतो विशेषाणां वारणाय—कारणताशालित्वमिति । आत्मविशेषगुणानां ज्ञानादीनां कुत्राऽप्यसमवायिकारणत्वं नास्तीति—'आत्मविशेषगुणभिन्नत्वे सती'ति सामान्यलक्षणे निवेशनीयम् ॥

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ॥**

( न्या० ) निमित्तकारणं लक्षयति—तदुभयभिन्नमिति । समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः ॥

( प० ) तदुभयभिन्नं कारणं निमित्तकारणमिति । समवाय्यसमवायिकारणवारणाय—तदुभयभिन्नमिति । विशेषादावतिव्याप्तिवारणाय-कारणमिति॥

(दी०) निमित्तकारणं लक्षयति—तदुभयेति । समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः ।

---

(कि०) दीपिकायां—समवाय्यसमवायिभिन्नकारणमिति । समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वमित्यर्थः । समवायिकारणवारणाय—प्रथमं सत्यन्तम् । असमवायिकारणवारणाय—द्वितीयं सत्यन्तम् । विशेषादावतिव्याप्तिवारणाय—कारणत्वमिति ॥

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

( न्या० ) तदेतदिति । यदसाधारणमिति । 'व्यापारवत्त्वे सती'-त्यपि पूरणीयम् । अन्यथा तन्तु-कपालसंयोगयोरतिव्याप्तिः, तन्तु-कपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नम्प्रति कारणत्वादसाधारणत्वमस्त्येवेत्यतस्तत्र कारणत्ववारणाय 'व्यापारवत्त्वे सती'ति करणलक्षणे विशेषणं देयम् । व्यापारत्वं च—तज्जन्यत्वे सति तज्जन्यजनकत्वम् ,भवतिहि

दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद् भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोग-तन्तुसंयोगादेरपि कपाल-तन्तुव्यापारत्वं कपालतन्तुजन्यत्वे सति कपाल-तन्तुजन्यघटपटजनकत्वात् । करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वस्य सत्त्वात्, तत्रातिव्याप्तिवारणाय—असाधारणेति विशेषणम् ॥

( प० ) तदेतदिति । यस्मात्कारणात्करणत्वघटकं कारणमुपदर्शितं तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणमितिभावः । इति करणपञ्चः ॥

( दी० ) करणलक्षणमुपसंहरति—तदेतदिति ।

( कि० ) मूले-यदसाधारणमिति । व्यापारवत्त्वे सतीति पूरणीयम् । अन्यथा तन्तुसंयोगस्य कपालसंयोगस्य च पटं घटं च प्रत्यसाधारणकारणत्वादतिव्याप्तिः स्यात् । व्यापारवत्त्वकथने तु तन्तुसंयोगः कपालसंयोगश्च स्वमेव व्यापारः, न तु व्यापारवान्, व्यापारवत्त्वं तु तन्तोरेव कपालस्यैव चेति हृदयम् । प्रत्यक्षज्ञानकरणं प्रत्यक्षमिति । प्रमात्मकप्रत्यक्षज्ञानस्य करणं प्रत्यक्षं=इन्द्रियाणीत्यर्थः । अत्र 'प्रत्यक्षज्ञान'पर्यन्तानुपादाने दण्डादावतिव्याप्तिः । प्रत्यक्षपदानुपादाने-अनुमानादावतिव्याप्तिः ॥

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

( न्या० ) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति । प्रमाभूतप्रत्यक्षादिषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवदसाधारणं कारणमिन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् । आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायरूपत्वेनान्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे त्वात्म-मनःसंयोगस्यैव सा बोध्या ॥

( प० ) तत्रेति । प्रमाणचतुष्टयमध्ये इत्यर्थः । (१) दण्डादिवारणाय—ज्ञानेति । अनुमानादिवारणाय-प्रत्यक्षेति ॥

( दी० ) प्रत्यक्षलक्षणमाह तत्रेति । प्रमाणचतुष्टयमध्य इत्यर्थः ।

( कि० ) मूले-तत्रेति । अस्य प्रत्यक्षप्रमात्मकज्ञानस्य करणं इन्द्रियमित्यर्थः । लक्षणे 'ज्ञान'पदं प्रत्यक्षपदस्य प्रमितिपरत्वस्फुटीकरणायेति बोध्यम् ॥

(१) ज्ञानपदानुपादाने 'प्रत्यक्षविषयत्वे सति करणत्वस्य' दण्डादावतिव्याप्तिः, ज्ञानपदोपादाने तु प्रत्यक्षज्ञानस्य करणमिति विग्रहान्न तत्राऽतिव्याप्तिः, तस्य प्रत्यक्षज्ञानाकरणत्वादिति भावः

**इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् (१ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्)। तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति ॥**

(न्या०) प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—इन्द्रियार्थसन्निकर्षेति। जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम्। ईश्वरप्रत्यक्षसाधारणं तु—'ज्ञानाऽकरणकं ज्ञानं प्रत्यक्षमिति। क्षेपकं लक्षणमिदम्। ज्ञानं = व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं च करणं येषां तानि ज्ञानकरणकानि,—अनुमित्युपमितिशाब्दानि। ज्ञानकरणकं न भवतीति ज्ञानाकरणकम्। (तत्त्वम्) प्रत्यक्षलक्षणमित्यर्थः। ईश्वरप्रत्यक्षस्याजन्यत्वात्, जन्यप्रत्यक्षे च इन्द्रियाणामेव करणत्वं न तु ज्ञानस्येति तयोरुभयोः संग्रहः। प्रत्यक्षं विभजते—निर्विकल्पकमिति ॥

(प०) इन्द्रियार्थेति। इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः तयोः संनिकर्षः = संयोगादिस्तज्जन्यं ज्ञानं प्रत्यक्षमित्यर्थः। संनिकर्षध्वंसवारणाय ज्ञानमिति। अनुमित्यादिवारणाय—इन्द्रियार्थसंनिकर्षेति। ननु सोपनेत्रचक्षुषा कथं पदार्थग्रहणं चक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन सह संनिकर्षाभावात्, कथं वा स्वच्छजाह्नवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणमिति चेन्न। स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्तश्चक्षुःप्रवेशसम्भवात्। न चेश्वरप्रत्यक्षेऽव्याप्तिरिति वाच्यम्। अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात् ॥

(दी०) प्रत्यक्षज्ञानस्य लक्षणमाह—इन्द्रियेति। इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः, तयोः सन्निकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः। तद्विभजते—तद्द्विविधमिति।

**तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥**

(न्या०) तल्लक्षयति—तत्र निष्प्रकारकमिति। प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी (१) विषयता स्वी-

(१) 'घटवद्भूतल'मिति सविकल्पके ज्ञाने घटनिष्ठप्रकारताऽऽख्यविषयतानिरूपकत्वं, संयोगनिष्ठसंसर्गताऽऽख्यविषयतानिरूपकत्वं, भूतलनिष्ठविशेष्यताऽऽख्यविषयतानिरूपकत्वं च वर्तते, घट-भूतले'इति निर्विकल्पकज्ञाने विशेषणविशेष्यभावनिरूपकत्वविरहात् न त्रिविधविषयतानिरूपकत्वम्, किन्तु निर्विषयकस्य ज्ञानत्वमेवाऽसम्भवि, अतः—त्रिविधविषयता—भिन्ना या विषयनिष्ठा ज्ञानीयविषयता सा चतुर्थी, तन्निरूपकज्ञानत्वं निर्विकल्पकत्वं बोध्यम्। ननु तथापि चतुर्थीविषयता—विषययोर्धर्मधर्मिभावावगाहित्वात् निर्विकल्पकत्वहानिरिति चेन्न। स्वनिरूपित-

क्रियते। न तु त्रिविधविषयतामध्ये कापि तत्रास्ति अतो विशेष्यताशून्यज्ञानत्वं संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं सम्भवति ॥

( प० ) तत्र निष्प्रकारकमिति । सविकल्पकेऽतिव्याप्तिवारणाय निष्प्रकारकमिति । (१)प्रकारवारणाय-ज्ञानमिति ॥

( दी० ) निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकमिति । विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानमित्यर्थः । ननु निर्विकल्पके किं प्रमाणमिति चेत्! न, "गौ"रिति विशिष्टज्ञानं, विशेषणज्ञानजन्यं—विशिष्टज्ञानत्वात्—दण्डीति ज्ञानवत्" इत्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गात् निर्विकल्पकत्वसिद्धिः

---

( कि० ) दीपकायां निष्प्रकारकमितीति । सविकल्पकज्ञाने 'घटवद्भूतल'मित्याकारके घटे प्रकारताख्यविषयता, भूतले विशेष्यताख्यविषयता, संयोगे संसर्गताख्यविषयता—वर्तते तादृशविषयतात्रयनिरूपकं सविकल्पकं ज्ञानं भवति। निर्विकल्पकज्ञाने तत् त्रयमपि नास्ति किन्तु केवलविषयावगाहित्वम् , अतस्तत्त्रयभिन्ना चतुर्थी विषयता तत्राङ्गीक्रियते । लक्षणं तु त्रिधाऽपि भवतीत्याह—विशेषणविशेष्यसम्बन्धानवगाहीति । विशेषणाऽनवगाहि ज्ञानम्=निरूपकत्वसम्बन्धेन विशेषणता(प्रकारता)ख्यविषयताशून्यज्ञानमित्यर्थः । अथवा—'विशेष्याऽनवगाहिज्ञानम्' निरूपकतासम्बन्धेन विशेष्यताख्यविषयताशून्यज्ञानमित्यर्थः । अथवा—सम्बन्धानवगाहि ज्ञानम्=निरूपकतासम्बन्धेन संसर्गताख्यविषयताशून्यज्ञानमिति ॥ मूलोक्तलक्षणे निष्प्रकारकोपादानेन सविकल्पकस्य वारणम् 'अयं घटः' इत्यादिज्ञाने घटत्वस्य स्वरूपतो भानात् तादृशघटत्वरूपप्रकारवारणाय—ज्ञानमिति । निर्विकल्पकज्ञानस्य—प्रत्यक्षाऽसंभवात्तत्रानुमानं प्रमाणयति—गौरिति । 'गौ'रितिविशिष्टज्ञानं पक्षः । विशेषणज्ञानजन्यत्वं स्वरूपसम्बन्धेन साध्यम् । विशिष्टज्ञानत्वादिति हेतुः । न च विशिष्टज्ञानत्वं विशेषणज्ञानजन्यत्वव्यभिचारि न वेत्याशङ्कनीयम् । विशिष्टज्ञानत्वं यदि विशेषणज्ञानजन्यत्वव्यभिचारि स्यात् तर्हि विशेषणज्ञानजन्यतावच्छेदकं न स्यादित्याकारकतर्केण तादृशव्यभिचारशंकाया विघटनसम्भवात् । तथा च—विशेषणज्ञानजन्यतावच्छेदकरूपेणाऽप्याद्याभावेन विशेषणज्ञानजन्यत्वव्यभिचाराभावस्य=आपादकाभावरूपस्य सिद्धया तादृशी शंका निरस्तेतिभावः । ननु तर्हि विशेषणज्ञानमपि विशिष्टज्ञानमस्त्वित्याशङ्क्य समाधत्ते-विशेषणज्ञानस्यापीति । विशेषणज्ञानमपि यदि सविकल्पकं तदा तत्रापि विशेषणज्ञानमपेक्षितं

---

विषयतायाः स्वस्मिन् विषयत्वेनाऽभानात् न क्षतिरिति मन्तव्यम् । यद्वा तादृशविषयताविषययोः—सविकल्पकत्वेऽपि घटभूतलयोर्निर्विकल्पके बाधकाभावात्। निर्विकल्पकत्वस्य तत्तद्विषयावच्छेदेनाऽव्याप्यवृत्तित्वादिति ध्येयम् ॥

( १ ) यत्र प्रकारस्य स्वरूपतो भानं न तु प्रकारान्तरावच्छिन्नस्य तस्य, यथा—'पटः' इत्यत्र टत्वस्य, तत्र अतिव्याप्तिरिति भावः ॥

तस्यापि च सविकल्पकत्वे तत्रापि पुनर्विशेषणज्ञानाऽपेक्षेत्यनवस्थाभयाद् विशिष्टज्ञानकारणीभूतं विशेषणज्ञानं निर्विकल्पकम् स्वीकार्यम्, तथाहि–घटेन सह चक्षुःसंयोगानन्तरं प्रागेव यज्ज्ञानं घटत्वविषयकं जायते, तन्न विशिष्टज्ञानं, विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वात्, विशेषणं यद् घटत्वं तज्ज्ञानस्य तत्पूर्वमभावात्। अतः 'घटघटत्वे' इति समूहालम्बनं प्रकारविशेष्यानवगाहि तद् बोध्यम्। तच्च न प्रत्यक्षम्, 'घटमहं जानामी'ति घटत्वादिविशिष्टघटविषयकसविकल्पकज्ञानस्यैव प्रत्यक्षत्वात्–तत्राऽऽत्मनि समवायेन ज्ञानं प्रकारः, ज्ञाने विषयितासम्बन्धेन घटः प्रकारः, घटे समवायेन घटत्वं प्रकारः, विशेषणे यद् विशेषणं तद् विशेषणतावच्छेदकम्, विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्, प्रकृते च निर्विकल्पके घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं नास्त्यतोऽप्रत्यक्षं तस्येत्यपि बोध्यम्।

**सप्रकारकं ज्ञानं सविकल्पकम्, यथा 'डित्थोऽयं' 'ब्राह्मणोऽयं' 'श्यामोऽय'मिति॥**

[ न्या० ] सविकल्पकं लक्षयति—**सप्रकारकमिति**। विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपणकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वमित्यपि लक्षणं सम्भवति। उदाहरणम्—**यथेति**। इदन्त्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं इदन्त्वावच्छिन्नविशेष्यतानिरूपितब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः।

( प० ) **सप्रकारकमिति**। घटादिवारणाय–ज्ञानमिति। निर्विकल्पक-वारणाय-सप्रकारकमिति।

( दी० ) सविकल्पकं लक्षयति–सप्रकारकमिति। नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहि ज्ञानमित्यर्थः। सविकल्पकमुदाहरति—यथेति।

---

( कि० ) नामजात्यादीति। नाम=अभिधानं, तच्च वाच्यत्वसम्बन्धेन घटे वर्तते, घटत्वं जातिः समवायेन घटे वर्तते, अतो 'नामजात्यादिकं यद्विशेषणं तन्निष्ठा विशेषणताख्यविषयता तादृशविषयताशालिज्ञानत्वमित्येकं लक्षणम्। विशेष्यताख्यविषयताशालिज्ञानत्वं द्वितीयं लक्षणम्। संसर्गताख्यविषयताशालिज्ञानत्वं तृतीयं लक्षणम् पर्यवसितम्॥

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः–संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति॥**

( न्या० ) चाक्षुषादिषडविधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—संयोग इत्यादिना[1]। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयोगः कारणम्[2]। द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम्। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नम्प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम्। द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि घ्राण-रसन-श्रवणानि गुणग्राहकाणि। अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति त्वक्संयोगस्य हेतुता। एवं द्रव्यसमवेतत्वाचप्रत्यक्षत्वावच्छिन्नम्प्रति त्वक्संयुक्तसमवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्व-शीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्म-मानसप्रत्यक्षे मनःसंयोगस्य हेतुता। आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता। आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसन-घ्राणयोस्तु रस-गन्धतद्गतजातिग्राहकत्वेन द्वितीय-तृतीययोः सन्निकर्षयोरेव तत्र हेतुता वाच्या। श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः सन्निकर्षः। शब्दवृत्तिशब्दत्व-कत्व-खत्वादिजातिविषयकश्रवणप्रत्यक्षे समवेतसमवायस्य हेतुता। अभावप्रत्यक्ष-इति। विशेषण-विशेष्यभावो नाम-विशेषणतासन्निकर्षः, (१)पञ्चविधसन्निकर्षाणामुपरि विशेषणता योजनीया। तथा हि—द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता[=]। द्रव्यसमवेताधिकरणकाभाव-

(१) अत्रेदं पाठान्तरम्—"पञ्चविधसन्निकर्षेषु मध्ये संयोगस्थाने संयुक्तपदं समवायस्थाने समवेतपदं च घटयित्वा अभावस्थले निर्वाह्यम्, तथा हि द्रव्याऽधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता, द्रव्यसमवेताऽधिकरणकाऽभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता, द्रव्यसमवेतसमवेताऽधिकरणकाऽभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता च सन्निकर्षः। तत्र घटे पटत्वाभावः संयुक्तविशेषणतया गृह्यते। घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते। घटसमवेतसमवेतरूपत्वादौ नीलत्वाभावश्च संयुक्तसमवेतसमवेतविशेषणतया गृह्यते इति संक्षेपः"

प्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता। द्रव्यसमवेतसमवेताऽधिकरणका-ऽभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता। संयोगस्थाने संयुक्त-पदं घटयित्वा समवायस्थाने समवेतपदं घटयित्वा अभावप्रत्यक्षस्थल निर्वाह्यम। तथा घटद्रव्यसमवेतं घटत्वं पृथ्वीत्वादिकं रूपादिकं च। तत्र नीलादौ पीतत्वाभावः घटत्वादिजातौ पटत्वाभावश्च वर्तते, स चाभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते। एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते, घटसमवेतं नीलं तत्समवेतं नीलत्वं तद्विशेषणता पीतत्वाभावे वर्तते इति संक्षेपः॥

❀ इति न्यायबोधिन्यां प्रत्यक्षपरिच्छेदः ❀

—( ०० )—

(प०) प्रत्यक्षेति। तच्च प्रत्यक्षं षड्विधं घ्राणज-रासन-चाक्षुष-श्रौत्र-त्वाच-मानसभेदात्। ननु (१) प्रत्यक्षकारणीभूतः—इन्द्रियनिष्ठप्रत्यक्षसामानाधिकरण्यघटकः सन्निकर्षः कः? इत्यपेक्षायां तं विभज्य दर्शयति-प्रत्यक्षेति। लौकिकप्रत्यक्षेत्यर्थः॥

(दी०) इन्द्रियार्थसन्निकर्षं विभजते—प्रत्यक्षेति।

---

(कि०) मूले-प्रत्यक्षज्ञानेति। प्रमात्मकप्रत्यक्षज्ञानेत्यर्थः। इन्द्रियस्य घटाद्यात्मकाऽर्थस्य च सम्बन्धः षड्विध इति यावत्। चक्षुस्त्वङ्मनांसि द्रव्यादिग्राहकाणि। घ्राणरसनश्रवणानि गुणादि-ग्राहकाणि॥

**चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः।**

(प०) संयोगमुदाहरति—चक्षुषेति। तथा च द्रव्यचाक्षुष-त्वाच-मानसेषु संयोग एव सन्निकर्ष इति भावः।

(दी०) संयोगसन्निकर्षमुदाहरति—चक्षुषेति। द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते।

---

(कि०) दीपिकायां-सर्वत्र संयोग इति। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वा-वच्छिन्नं प्रति चक्षुःसंयोगः कारणम्, तादृशसम्बन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगः

---

(१) प्रत्यक्षज्ञानस्य कारणीभूतःइन्द्रियनिष्ठस्य लौकिकप्रत्यक्षप्रमानिरूपितस्य सामानाधिकर-ण्यस्य घटकः सन्निकर्षः कः? इत्यर्थः। यथा—घटप्रत्यक्षं घटे लौकिक—विषयतासम्बन्धेन वर्तते, तत्र घटे चक्षुः संयोगसम्बन्धेन वर्तते, चक्षुपि प्रत्यक्षप्रमासामानाधिकरण्यं नाम—प्रत्यक्षप्रमाधिकरण-वृत्तित्वम्, तादृशवृत्तिताऽवच्छेदकः—सम्बन्धः संयोगादिः षड्विधः इति भावः॥

कारणम्, इति भावः ॥ 'आत्मा मनसा संयुज्यते'इत्यनेन—आत्ममनःसंयोगमात्रमात्मप्रत्यक्षे हेतुरिति दर्शितम् ॥ अर्थेन—घटादिविषयेणेत्यर्थः ॥

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः ।—चक्षुःसंयुक्ते घटे रूपस्य समवायात् ॥**

( प० ) घटरूपेति । चक्षुषा इत्यनुषज्यते । तथा च द्रव्यसमवेतचाक्षुष-त्वाच-मानस-रासन-घ्राणजेषु संयुक्तसमवाय एव सन्निकर्ष इत्यर्थः ॥

(दी०) संयुक्तसमवायमुदाहरति—घटरूपेति । तत्र युक्तिमाह—चक्षुःसंयुक्त इति

---

(कि०) चक्षुःसंयुक्त-इतीति । द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम्, तादृशसम्बन्धेन स्पार्शनप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयुक्त-समवायस्य च हेतुत्वमिति बोध्यम् ॥ आत्मसमवेतसुखादिप्रत्यक्षे मनःसंयुक्तसमवायो हेतुः ॥

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात् ॥**

( प० ) रूपत्वेति । रूपत्वात्मकं यत्सामान्यं तत्प्रत्यक्ष इत्यर्थः । अत्रापि चक्षुषा इत्यनुषज्यते । तथा च द्रव्यसमवेतसमवेतचाक्षुष-रासन-घ्राणज-स्पार्शन-मानसेषु संयुक्तसमवेतसमवाय एव सन्निकर्ष इति भावः । अथ द्रव्य-तत्समवेत-प्रत्यक्षेऽपि (१) संयुक्तसमवेतसमवाय एव सन्निकर्षोऽस्त्विति चेन्नैतत् । ईश्वरात्मादे( आत्मसुखादे )रनध्यक्षत्वप्रसङ्गात् ॥

(दी०) संयुक्तसमवेतसमवायमुदाहरति—रूपत्वेति ।

---

(कि०)रूपत्वेतीति । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य कारणत्वम्, तादृशसम्बन्धेन स्पार्शनप्रत्यक्षत्वावच्छिन्नं प्रति

(१) घटप्रत्यक्षे=चक्षुःसंयुक्ता कपालिका, तत्र समवेतं कपालम्, तत्र समवेतो घटः,—इत्येवं कृत्वा, अथ च घटरूपप्रत्यक्षे=चक्षुःसंयुक्तं कपालं, तत्र समवेतो घटः, तत्र समवेतं रूपमिति कृत्वा समन्वयः कार्यः, तथा च घटादिप्रत्यक्षे घटादिरूपप्रत्यक्षे च चक्षुःसंयुक्तसमवेतसमवायेनैव निर्वाहे-'संयोगः'-'संयुक्तसमवाय'श्चेत्युभौ नाङ्गीकार्यौ, इत्याशंकितुरभिप्रायः । किन्तु—आत्मनः अवयवसमवेतत्वाऽभावेन मनःसंयुक्तः कपालिकास्थानाऽऽपन्नः कपालस्थानाऽऽपन्नश्च कश्चिदवयव-एव नास्ति, अतो मनसः आत्मना सह संयुक्तसमवायविरहात् सुतरां संयुक्तसमवेतसमवायाऽ-प्रसिद्धिः, तथा च सति आत्मतद्गुणादेरप्रत्यक्षत्वं स्यादित्यतः—तावपि स्वीकार्यौ, इति भावः ॥

त्वक्संयुक्तसमवेतसमवायस्य च कारणत्वमिति बोध्यम्। आत्मसमवेतसमवेतसुखत्वादिप्रत्यक्षे मनःसंयुक्तसमवेतसमवायो हेतुरिति ॥

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात्, शब्दस्याऽऽकाशगुणत्वात्, गुणगुणिनोश्च समवायात् ॥**

(दी०) समवायमुदाहरति—श्रोत्रेणेति। तदुपपादयति—कर्णेति। ननु दूरस्थशब्दस्य कथं श्रोत्रेण सम्बन्ध इति चेत्! न, वीचीतरंगन्यायेन कदम्ब—मुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रसम्बन्धात् प्रत्यक्षत्वसम्भवात्।

---

(कि०) 'वीचीतरङ्ग'न्यायेनेति। जलमध्ये पाषाणादिनिक्षेपात् एको वीचीतरङ्गस्ततो द्वितीयस्ततस्तृतीय इत्येवं शब्दा अपि परित उत्पद्यन्ते इति भावः ॥ कदम्बमुकुलेति। कदम्बमुकुले प्रथमं परितो दलानामेकं चक्रं ततो द्वितीयं ततस्तृतीयं क्रमशो जायते, तद्वत् प्रथमं भेरीदण्डसंयोगेनैकः शब्दस्ततोऽन्ये शब्दास्ततो दशसु दिक्षु शब्दा उत्पद्यन्ते इति भावः ॥

**शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥**

(प०) समवायसंनिकर्षमुदाहरति— श्रोत्रेणेति। जननीय इति शेषः। ननु श्रोत्र-शब्दयोः कथं समवाय इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—कर्णेति। अथ समवायस्य नित्यत्वेन शब्दप्रत्यक्षे का व्यापार इति चेत्! शब्दः श्रोत्रमनःसंयोगो वेति गृहाण। शब्दत्वेति। श्रोत्रेण (१) जननीये इत्यनुकर्षशेषौ ॥

(दी०) समवेतसमवायमुदाहरति—शब्दत्वेति।

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। 'घटाभाववद्भूतल'मित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥**

(प०) विशेषणेति। विशेषणभावो विशेष्यभावश्चेति बोध्यम्। इन्द्रियसम्बद्धविशेषणत्वमिन्द्रियसम्बद्धविशेष्यत्वमिति यावत्। विशेषणभावसंनिकर्षमुपपाद्य दर्शयति—घटाभाववदिति। इह भूतले घटो नास्तीत्यादौ विशेष्यतासंनिकर्षोऽवसेयः। ससम्यन्तस्य विशेषणत्वात् ॥

---

(१) 'श्रोत्रेणे'त्यस्यानुवर्तनं-अनुकर्षः, 'जननीये'-इति तु शेषः ॥

(दी०) विशेषणविशेष्यभावमुदाहरति—अभावेति । तदुपपादयति—घटाभाववदिति । भूतलं विशेष्यम् । घटाभावो विशेषणम् । 'भूतले घटो नास्ति' इत्यत्र घटाऽभावस्य विशेष्यत्वं द्रष्टव्यम् । एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम् । 'यद्यत्र घटोऽभविष्यत् तदा भूतलमिवाद्रक्ष्यत् दर्शनाभावान्नास्ति' इति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धेः सहकृतेनेन्द्रियेणैव अभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणाऽ-

---

(कि०) विशेषणमिति । अत्र भूतले घटाभावः स्वरूपसम्बन्धेन विशेषणम्, परन्तु सन्निकर्षेषु विशेषणता बहुविधा भवति यथा—द्रव्यवृत्त्यभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता, द्रव्यसमवेतरूपादिवृत्तेर्घटाभावस्य प्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता, द्रव्यसमवेतसमवेतरूपत्वादिवृत्तेर्घटाभावस्य प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता, शब्दे रूपाभावप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतविशेषणता, शब्दवृत्तिर्यो रूपाभावस्तत्र यः क्रियाऽभावः तत्प्रत्यक्षे श्रोत्रसमवेतविशेषणविशेषणता, इत्येवं अर्थादिभेदेनेन्द्रियादिभेदेनाऽपि=बहवः सन्निकर्षा भवन्तीति बोध्यम् ॥ विशेष्यत्वमिति । 'भूतले घटो नास्ती'त्यस्य—'भूतले घटाऽभाव'इत्यर्थः । तत्र वृत्तित्वसम्बन्धेन भूतलं घटाभावे विशेषणं, घटाभावस्तु विशेष्यः, तत्रैव विशेष्यतासन्निकर्षो बोध्यः ॥ अत्यन्ताभावप्रत्यक्षे योग्यप्रतियोगिकत्वं कारणं, तेन न परमाणूनामत्यन्ताभावस्य प्रत्यक्षम्, अन्योन्याभावप्रत्यक्षेऽधिकरणप्रत्यक्षं कारणम्, अत एव पिशाचस्या-योग्यत्वेऽपि स्तम्भे पिशाचभेदश्चक्षुषा गृह्यते एवं ॥ एतेनेति । अभावप्रत्यक्षप्रमाया विशेषणविशेष्यभावसन्निकर्षजन्यत्वेनेत्यर्थः, भाट्टा वेदान्तिनश्च घटाद्यभावप्रमायां घटाद्यनुपलब्धिः प्रत्यक्षाऽतिरिक्तं प्रमाणं वदन्ति, तन् खण्डितमित्यर्थः । नन्वनुपलब्धिं विना नैयायिकमतेऽपि अभावप्रत्यक्षाऽजननात् तस्याः प्रमाणान्तरत्वं अवश्यमङ्गीकर्तव्यमित्यतस्तर्कमाह—यद्यत्रेति । अत्र=चक्षुःसंयुक्ते अधिकरणे भूतलादावित्यर्थः । 'घटोऽभविष्यदि'ति आपादकं दलं—'घटः स्यादि'त्यर्थकम् । 'तदाऽद्रक्ष्य'दिति आपाद्यं दलं,—'घटवत्तया ज्ञानविषयीभूतं स्यादि' त्यर्थकम् भूतलमिवे'ति दृष्टान्तं—'घटवद्भूतलमिवे' त्यर्थकम् ॥ आपाद्याभावेन आपादकाऽभावसिद्धिं दर्शयति—दर्शनेति । 'दर्शनाऽभावात्'=घटवत्तया ज्ञानविषयीभूतत्वाभावात् आपाद्याभावात्मकात्, 'नास्ति'=आपादकाऽभावात्मक—घटाधिकरणत्वाऽभाववत्, सिद्ध्यतीत्यर्थः ॥ तत्तदधिकरणे चक्षुःसंयोगे सत्येव तत्र घटाभावप्रत्यक्षं घटाऽनुपलब्धिसहकृतेन चक्षुषैव भवतीति घटाद्यनुपलब्धेर्नाऽतिरिक्तप्रमाणत्वमित्याह—तर्कितेति । तर्कितं=आपादितं यत् प्रतियोगिसत्त्वं तस्य विरोधिनी या घटानुपलब्धिः, तस्याः सहकृतेन=सहकारितया उपकृतेन मुख्येन कारणेनेन्द्रियादिना अभावप्रत्यक्षोपपत्तौ सत्यां अनुपलब्धिर्न प्रमाणान्तरमिति समुदितार्थः ॥ नन्वभावप्रत्यक्षे इन्द्रियादेर्योग्याऽनुपलब्धिसहकृतस्य करणत्वाऽपेक्षया लाघवेन योग्याऽनुपलब्धेरेव कारणत्वमस्तु-इत्याशङ्कां निरस्यति—अधिकरणेति । भवन्मते अनुपलब्धेरभावमात्रग्राहकत्वात् अभावाऽधिकरणभूतलादिप्रत्यक्षे इन्द्रियस्याऽवश्याऽपेक्षणीयतया क्लृप्तेनैवेन्द्रियेणाऽभावप्रत्यक्षोपपत्तौ अनुपलब्धेर्विजातीयप्रमिति-

न्तरत्वासम्भवात् । अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वस्यायुक्तत्वात् । विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव नातिरिक्तः सम्बन्धः ।

---

करणत्वकल्पनं निर्युक्तिकमिति भावः ॥ ननु समवायसंयोगादेरेव न्यायशास्त्रे सम्बन्धत्वेन प्रसिद्धिः, ततोऽधिकविशेषणताऽख्यसम्बन्धकल्पने गौरवम्, किंच—नैयायिकानाम् अभाव-प्रत्यक्षार्थमतिरिक्तसम्बन्धकल्पनमप्यधिकं गौरवमिति मीमांसकाऽऽशंकां निरस्यति-**विशेषणेति** विशेषणविशेष्यभावः=विशेषणतात्मको विशेष्यतात्मको वेत्यर्थः ॥ विशेषणता—विशेषणात्मिका, विशेष्यता—विशेष्यात्मिका, नत्वतिरिक्तेत्यतो न गौरवमिति भावः ॥

**एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम्, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥ प्रत्यक्षं व्याख्यातम् ॥**

( प० ) प्रत्यक्षप्रमामुपसंहरति-**एवमिति** उप्रदर्शितक्रमेणेत्यर्थः । ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसन्निकर्षः किं न स्यादिति चेत् ? नेत्याह—**तत्करणमिति** । प्रत्यक्षप्रमाणं निगमयति-**तस्मादिति** । प्रत्यक्षप्रमाकरणत्वादित्यर्थः । **सिद्धमिति** । न्यायसिद्धान्ते सिद्धमित्यर्थः ॥

* इति पदकृत्यके प्रत्यक्षपरिच्छेदः *

( दी० ) प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह—**एवमिति** । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्यक्षमुपसंहरति—**तस्मादिति** ।

* इति दीपिकायां प्रत्यक्षपरिच्छेदः *

---

( कि० ) मूले-**एवमिति** । इदमत्राऽवधेयम्-प्रत्यक्षं द्विविधम्—लौकिकम्, अलौकिकं च, लौकिकन्तु षोढासन्निकर्षजन्यं वर्णितम् । अलौकिकं तु त्रिविधाऽलौकिकसन्निकर्षजन्यं भवति । अलौकिकसन्निकर्षः—सामान्यलक्षणः, ज्ञानलक्षणः, योगजश्चेति । यत्रैकधूमे ज्ञाते यादृशधूमत्वरूप-सन्निकर्षेण सकलधूमानां ज्ञानं भवति तादृशधूमत्वरूपसन्निकर्षः—'सामान्यलक्षणः'—सामान्यं=जातिः—धूमादिव्यक्तिश्च लक्षणं=स्वरूपं यस्य सः । यत्र 'सुरभि चन्दन'मिति चाक्षुषे यादृशसौरभस्मरणेन सौरभस्याऽपि भानं भवति, तादृशस्मरणात्मकसन्निकर्षः='ज्ञानलक्षणः'—ज्ञानमेव लक्षणं=स्वरूपं यस्य सः ॥ देशान्तरीयकालान्तरीयवस्तुज्ञानं योगाभ्यासजनित-यादृशविलक्षणधर्मात् भवति तादृशयोगजो धर्मः=योगसन्निकर्षः' योगाभ्यासजनितधर्मविशेषः श्रुतिस्मृत्यादिप्रतिपाद्य इति ॥

* इति तर्कदीपिकाकिरणावल्यां प्रत्यक्षपरिच्छेदः *

# ❀ अथाऽनुमानपरिच्छेदः ❀

## अनुमितिकरणम्—अनुमानम् ॥

( न्या० ) अनुमानं लक्षयति—अनुमितीति । अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः, अनुमितिः फलम्,—कार्यमित्यर्थः । परामर्शस्य व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम् ॥

( प० ) प्रत्यक्षानुमानयोः कार्यकारणभावसङ्गतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति—अनुमित्यात । अनुमितेः करणमनुमानमित्यर्थः । तच्च लिङ्गपरामर्श एवेति निवेदयिष्यते । कुठारादावतिव्याप्तिवारणाय-अनुमितीति । प्रत्यक्षादावतिव्याप्तिवारणाय—अन्विति ॥

( दी० ) अनुमानं लक्षयति—अनुमितिकरणमिति ।

---

(कि०) अनुमानं लक्षयतीति । प्रत्यक्षोपजीवकत्वसङ्गत्याऽनुमानं निरूपयतीत्यर्थः । उपजीवकत्वं—कार्यत्वम् । उपजीव्यत्वं—कारणत्वम् । प्रत्यक्षकार्यमेवानुमानं भवतीत्यतः प्रत्यक्षकार्यत्वसङ्गत्याऽनुमाननिरूपणमिति भावः ॥ 'पर्वतो—वह्निमान—धूमा'दिति सिद्धेतुस्थले 'पर्वतो वह्निमानि'त्यनुमितिः कार्यम्, तज्जनकः परामर्शो व्यापारः, तज्जनकम् अनुमानं=व्याप्तिज्ञानं—'साध्याभाववदवृत्तित्वादिविषयकं तदेवानुमानप्रमाणम् । तथा हि—साध्यं=वह्निः, तदभाववान्=जलह्रदादिः, तदवृत्तित्वं धूमे । क्वचिद्व्याप्तिः—'यत्र यत्र धूमस्तत्र तत्र वह्नि'रितिशब्दैर्व्यवह्रियते ॥ सा च—'प्रतियोग्यसमानाधिकरणोऽथ च हेतुसमानाधिकरणो योऽभावस्तत्प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं हेतुनिष्ठतदवच्छिन्नसाध्यसामानाधिकरण्यरूपा' इयं सिद्धान्तव्याप्तिः ॥

## परामर्शजन्यं ज्ञानम्—अनुमितिः ॥

( न्या० ) परामर्शजन्यमिति । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् । अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय 'परामर्शजन्यत्वे सती'ति विशेषणोपादानम् । परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय-ज्ञानत्वोपादानम् ॥

( प० ) नन्वनुमितेरेव दुर्निरूपत्वात्तद्घटितानुमानमपि दुर्निरूपमित्यत

**आह—परामर्शेति । प्रत्यक्षादावतिव्याप्तिवारणाय—परामर्शजन्यमिति । परामर्श-ध्वंसवारणाय—ज्ञानमिति । परामर्शप्रत्यक्षवारणाय(१)हेत्वविषयकमित्यपि बोध्यम्॥**

(दी०) अनुमितेर्लक्षणमाह- -परामर्शेति । ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः ॥ स्थाणुपुरुषसंशयानन्तरं 'पुरुषत्वव्याप्यकरादिमानयम्' इति परामर्शे सति 'पुरुष एव' इति प्रत्यक्षजननात् । न च तत्राऽनुमितिरेवेति वाच्यम् । 'पुरुषं साक्षात्करोमि'

---

(कि०) 'परामर्शजन्यत्वे सति ज्ञानत्वम्'—अनुमितेर्लक्षणम् । प्रत्यक्षादावति-व्याप्तिवारणाय—परामर्शजन्यत्वे सतीति । परामर्शध्वंसवारणाय—ज्ञानत्वमिति ॥ ननु तथापि परामर्शजन्ये परामर्शप्रत्यक्षेऽतिव्याप्तिः, तथा हि—'वह्निव्याप्यधूमवान् पर्वत' इतिपरामर्शस्य यत्—'वह्निव्याप्यधूमवान् पर्वत—इत्याकारकज्ञानवानह'मित्याकारकमनुव्यवसायात्मकं द्वितीयं ज्ञानविषयकं प्रत्यक्षं ज्ञानं, तत्र विषयविधया परामर्शस्य कारणत्वादिति चेन्न । 'हेत्व—विषयकत्वे सति परामर्शजन्यत्वे च सति ज्ञानत्वमि'ति लक्षणकरणात्, उक्तानुव्यवसायस्य परामर्शजन्यत्वेऽपि हेत्वविषयकत्वाभावात् न तत्रातिव्याप्तिः, तादृशेऽनुव्यवसाये धूमस्य विषयतया प्रविष्टत्वादिति भावः ॥ ननु तथापि संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, तथा हि—एकधर्मिकविरोधि कोटिद्वयप्रकारकं ज्ञानं'—संशयः, उभयसाधारणधर्मज्ञानं संशयकारणम्, यथा—पुरोवर्तिनि वस्तुनि—उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वा ततः 'स्थाणुत्वस्थाणुत्वाभाव—पुरुषत्वपुरुष-त्वाभावरूपविरोधिकोटिद्वयप्रकारकः 'स्थाणुर्वा पुरुषो वे'ति संशयो भवति । ततः— यत्किं-चित्पुरुषसम्बन्धिकरचरणादिविशेषदर्शने— 'पुरुषत्वव्याप्यकरचरणादिमानय'मित्याकारकपरामर्शा-त्मकज्ञाने सति 'अयं पुरुष'इतिप्रत्यक्षनिश्चयो भवति, तत्राऽतिव्याप्तिः, परामर्शजन्यज्ञानत्वस्य तत्र सत्त्वादित्याशंकते—दीपिकायां—स्थाणुपुरुषसंशयाऽनन्तरमिति । स्थाणुत्वस्थाणुत्वाभाव—पुरुषत्वपुरुषत्वाभावकोटिकसंशयानन्तरमित्यर्थः ॥ शङ्कते—न चेति ॥ तत्र=संशयोत्तर-प्रत्यक्षे ॥ उत्तरयति—पुरुषमिति ॥ पूर्वं ज्ञानं व्यवसायः, स च प्रत्यक्षं वाऽनुमितिर्वे-त्यादिनिर्णयस्तूत्तरकालीनानुव्यवसायेन सम्पाद्यः, अनुव्यवसायः=ज्ञानस्य ज्ञानम्, यथा= 'पुरुषोऽय'मिति प्रथमं प्रत्यक्षम्, ततः 'पुरुषं साक्षात्करोमि'—'पुरुषप्रत्यक्षज्ञानवानह'मिति यज्ज्ञानं तदनुव्यवसायः स एवाऽत्राऽस्ति । यदि'पुरुषोऽय'मितिप्रत्यक्षोत्तरं 'पुरुषमनुमिनोमी'—त्यनुव्यवसायः स्यात्, तदा'पुरुषोऽय'मितिज्ञानम्—अनुमितिर्भवितुमर्हति । तादृशानुव्यवसायविरहा—

(१) 'वह्निव्याप्यधूमवान् पर्वत' इति परामर्शात्मकज्ञानम्, तादृशपरामर्शविषयकं प्रत्यक्षं—"वह्निव्याप्यधूमवान् पर्वत'—इतिपरामर्शं जानामी" त्याकारकम् अनुव्यवसायात्मकम्, तत्र परामर्शो विषयतया कारणं भवति, अतः परामर्शजन्यज्ञानत्वं परामर्शविषयकाऽनुव्यवसायरूपप्रत्यक्षेऽति-व्याप्तम्, तद्वारणाय—'हेत्वविषयक'मिति । परामर्शप्रत्यक्षं तु पर्वतत्ववह्निधूमादिविषयकमेव भवति, न तु हेत्वविषयकम्, हेत्वविषयकं तु—'पर्वतो वह्निमान्' इत्यनुमित्यात्मकज्ञानमेवेति नातिव्याप्तिरिति भावः ॥

इत्यनुव्यवसायविरोधादिति चेत् ? न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्षता । साध्यसिद्धिरनुमितिप्रतिबन्धिका, सिद्धिसत्त्वेऽपि 'अनुमिनुयाम्' इतीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका ।

---

दुक्तज्ञानं प्रत्यक्षमेवेति, तत्र परामर्शजन्यज्ञानत्वमतिव्याप्तमिति भावः ॥ 'नन्वित्यादिपूर्वपक्षस्योत्तरमाह–नेति ॥ **पक्षतेति** । अयं भावः–न केवलं 'परामर्शजन्यं ज्ञानमनुमिति'रिति लक्षणम्, किन्तु–'पक्षतासहकृतपरामर्शजन्यं ज्ञानमेवानुमितिः । सर्वत्रानुमितौ पक्षतासहकृतपरामर्शस्यैव कारणत्वात्, यथा–पर्वतो–वह्निमान्–धूमादि'त्यत्र 'वह्निव्याप्यधूमवान् पर्वत'इति परामर्शः कारणं भवति, परामर्शस्य लक्षणं–'व्याप्तिविशिष्टपक्षधर्मताज्ञानम्' । वह्निव्याप्तिविशिष्टं=वह्निव्याप्तिप्रकारकमित्यर्थः । व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं स परामर्श इति सारार्थः ॥ पक्षताया लक्षणं–'सिषाधयिषाविरहविशिष्टसिद्ध्यभावः' सिषाधयिषा–'पर्वते वह्न्यनुमितिर्जायता'मिति–वह्निमनुमिनुयामि'ति वेच्छा । सिद्धिस्तु–'पर्वतो वह्निमान्'–इत्याकारकनिर्णयः, निर्णये सति अनुमितिर्निरर्थिका सती नोत्पद्यत एव । पर्वते सिषाधयिषा यदि नास्ति, सिद्धिश्च वर्तते, तदा सिषाधयिषाविरहविशिष्टा सिद्धिः अनुमितिप्रतिबन्धिका भवति, प्रतिबन्धकस्याऽभावः=सिषाधयिषाविरहविशिष्टसिद्ध्यभावः, स एव पक्षता, तादृशपक्षतासहितपरामर्श एवाऽनुमितिलक्षणघटकः ॥ प्रकृते 'पुरुषोऽय'मितिप्रत्यक्षकारणीभूतो यः 'पुरुषत्वव्याप्यकरादिमानय'मित्याकारकः परामर्शनिर्णयः, तस्य तादृशपक्षतासहितत्वेऽपि न निरुक्तप्रत्यक्षे कारणत्वं, अनुमितावेव पक्षताया हेतुत्वात् अन्यथा ( प्रत्यक्षेऽपि पक्षताया हेतुत्वे ) धारावाहिकप्रत्यक्षस्यानुदयप्रसंगः स्यात्, तत्र सिषाधयिषाविरहविशिष्टप्रत्यक्षात्मकसिद्धेःसत्त्वात्, तथा च पक्षतासहकृतपरामर्शजन्यज्ञानत्वं–'पुरुषोऽयमितिप्रत्यक्षे'नास्तीति नाऽतिव्याप्तिरिति भावः । अक्षरार्थस्तु–सिषाधयिषायाः=पक्षे साध्यानुमितीच्छायाः, समवायेन योऽभावः, स्वरूपसमवायेतदुभयघटितसामानाधिकरण्यसम्बन्धेन तद्विशिष्टायाः सिद्धेः समवायेन अभाव इति ॥ साध्यसिद्धिः=पक्षे साध्यनिर्णयः=‘पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाही'–निर्णयः 'पर्वतो वह्निमा'नित्याकारकः । अनुमितिप्रतिबन्धकः=‘पर्वतो वह्निमानि'-त्याद्यनुमितिप्रतिबन्धकः ॥ सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणोपादानप्रयोजनं दर्शयति–**सिद्धिसत्त्वेऽपीति** । अयं भावः–सिद्धिसत्त्वेऽपि यत्र सिषाधयिषा जायते तत्र सिषाधयिषाबलाद् अनुमितिर्भवति, यथा–'पर्वतो वह्निमानि'तिसिद्धिसत्त्वेऽपि 'पर्वते वह्न्यनुमितिर्जायता'-मितीच्छया 'पर्वतो वह्निमानि'त्यनुमितिर्जायते, अतः केवलायाः सिद्धेर्न प्रतिबन्धकत्वं, सिषाधयिषाकाले केवलायाः सिद्धेरभावाऽसत्त्वात्, सिषाधयिषाविरहरूपविशेषणाभावस्य सिषाधयिषास्वरूपस्य विशिष्टाऽभावप्रयोजकत्वात् । यत्र परामर्शोऽस्ति सिषाधयिषा च वर्तते सिद्धिर्नास्ति तत्राऽपि सिद्धिरूपविशेष्याभावात् सिषाधयिषाविरहविशिष्टायाः सिद्धेरभावस्य सत्त्वेन पक्षतासहकृतपरामर्शसत्त्वादनुमितिनिर्वाहः । यत्र परामर्शसत्त्वेऽपि सिषाधयिषा नास्ति सिद्धिश्चास्ति तत्र सिषाधयिषा-

ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत्, सिषाधयिषाविरहसहकृतसिद्ध्यभावस्यापि अनुमितिकारणत्वम् ।

---

विरहविशिष्टसिद्धेः सत्त्वेन तदभावात्मकपक्षताविरहेण पक्षतासहकृतपरामर्शविरहादनुमितिर्न भवत्येव । यत्र परामर्शसत्त्वे सिषाधयिषा सिद्धिश्च न स्तः तत्र उभयाभावात् 'सिषाधयिषाविरहविशिष्टसिद्ध्यभाव'रूपपक्षतायाः सत्त्वेन पक्षतासहकृतपरामर्शसत्त्वादनुमितिर्भवत्येव । अतः सिषाधयिषा भवत्युत्तेजिका । उत्तेजकत्वं='प्रतिबन्धकतावच्छेदकीभूताऽभावप्रतियोगित्वम्' अनुमितिं प्रति प्रतिबन्धिका--सिषाधयिषाविरहविशिष्टा सिद्धिः, तन्निष्ठप्रतिबन्धकतावच्छेदको-विशेषणीभूतोऽभावः=सिषाधयिषाविरहः, तत्प्रतियोगित्वं सिषाधयिषायाम्, इति ॥ दाहकारणत्ववदिति । यथा वह्निसत्त्वेऽपि चन्द्रकान्तमणिसत्त्वे दाहो न भवति, अतश्चन्द्रकान्तो दाहप्रतिबन्धकः, चन्द्रकान्तसूर्यकान्तोभयसत्त्वे तु दाह उत्पद्यतेऽतः सूर्यकान्त उत्तेजकः, उत्तेजकाभावविशिष्टचन्द्रकान्ताभावो दाहं प्रति कारणम्, उत्तेजकाभावविशिष्टचन्द्रकान्तस्तु दाहप्रतिबन्धकः, तन्निष्ठप्रतिबन्धकतावच्छेदकीभूतः सूर्यकान्ताभावः, तत्प्रतियोगित्वं सूर्यकान्तेऽतः सूर्यकान्त उत्तेजकस्तथाऽत्रापीति बोध्यम् ।

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा 'वह्निव्याप्य-धूमवानयं पर्वत' इति ज्ञानं परामर्शः । तज्जन्यं-'पर्वतो वह्निमानि'-ति ज्ञानमनुमितिः ॥**

( न्या० ) अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—व्याप्तिविशिष्टेति । व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारये—विशिष्टपदस्य=प्रकारतानिरूपकत्वात् 'पक्षधर्मतायाः—ज्ञाने'त्यत्र षष्ठ्या विषयत्वबोधनात्, धर्मतापदस्य सम्बन्धार्थकत्वाच्च, कर्मधारयसमास समस्यमानपदार्थयोरभेदसंसर्गलाभेन च 'व्याप्तिप्रकारकाभिन्नं यत्पक्ष-सम्बन्धविषयकं ज्ञानं' तत्परामर्श इति लभ्यते । एवं सति 'धूमो वह्निव्याप्यः आलोकवान्पर्वतः'= इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्श-लक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय 'पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालि ज्ञानं' परामर्श इति निष्कर्षः= एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम् । अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्—'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित-संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्न-

विधेयताकानुमितित्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपित-व्याप्तित्वावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता तन्निरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कारणम्। वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्चाऽभेदाऽनङ्गीकर्तृमते वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणं वक्तव्यम्, स च निर्णयः वह्निव्याप्य-धूमवान्पर्वतः' इत्याकारको बोध्यः ॥

( प० ) व्याप्तिविशिष्टेति। विषयितासंबन्धेन व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्श इत्यर्थः (१) घटादिज्ञानवारणाय–पक्षधर्मतेति। 'धूमवान्पर्वत' इत्यादि-ज्ञानवारणाय–व्याप्तिविशिष्टेति। तदिति। परामर्शजन्यमित्यर्थः।

[ प० ] परामर्शं लक्षयति–व्याप्तीति। व्याप्तिविषयकं यत् पक्षधर्मताज्ञानं स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति–यथेति। अनुमितिमभिनीय दर्शयति–तज्जन्यमिति परमर्शजन्यमित्यर्थः।

---

(कि०) मूले–व्याप्तिविशिष्टेति। यथा––'वह्निव्याप्यधूमवान्पर्वत' इति परामर्शे––'वह्निव्याप्यत्वं=नाम=वह्निव्याप्तिविशिष्टत्वम्' वह्नेर्व्याप्तिः=वह्न्यभाववदवृत्तित्वम्, तच्च धूमे वर्तते, एवं धूमे पक्षधर्मत्वं पर्वतवृत्तित्वमपि भासते, इति तस्य तादृशलक्षणलक्ष्यत्वेन-परामर्शत्वं बोध्यम् ॥ अत्र लक्षणे व्याप्तिविशिष्टे ( हेतौ ) पक्षधर्मता तज्ज्ञानमिति–सप्तमीतत्पुरुषे सति व्यभिचारिहेतौ व्याप्तिभ्रमेण यत्र पक्षे भ्रमात्मिकाऽनुमितिर्जाता तत्राऽव्याप्तिर्भवेत्, तद्वारणाय– 'व्याप्तिविषयक'मिति–कर्मधारयमङ्गीकरोति–व्याप्तिविषयकमिति। भ्रमप्रमासाधारण-व्याप्तित्वावच्छिन्नविषयतानिरूपकमित्यर्थः ॥ व्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदका-वच्छिन्नप्रकारतानिरूपित––पक्षतावच्छेदकावच्छिन्नविशेष्यताशालि निश्चयः'––परामर्श इति निष्कर्षः। अभिनीयेति। अभिप्रेतशब्दमुच्चार्येत्यर्थः ॥

---

( १ ) 'इदं–कपालम्,––घटात्' इत्यत्र कपालत्वनिरूपित––'कपालत्वाभाववदवृत्तित्व-विशिष्ट'घट'इत्याकारकं यत् व्याप्तिविशिष्टघटज्ञानं तत्राऽतिव्याप्तिः, आदिपदेन 'वह्निव्याप्यआलोक' इति ज्ञानेऽपि अतिव्याप्तिर्बोध्या। पक्षधर्मतापदोपादाने तु तादृशज्ञानस्य पक्षधर्मत्वाऽनवगाहितया वारणमिति भावः ॥ व्याप्तिवैशिष्ट्य' पक्षधर्मतायां सामानाधिकरण्येन बोध्यम्। द्वयोरधिकरणं धूमो बोध्यः। सामानाधिकरण्यघटकवृत्तित्वम् अधिकरणत्वञ्च–स्वरूपादिसम्बन्धेनेति बोध्यम् ॥

**'यत्र यत्र धूमस्तत्र तत्राग्निरिति, साहचर्यनियमो व्याप्तिः ॥**

( न्या० ) यत्र यत्रेति । 'यत्र' पदवीप्सावशाद्धूमाधिकरणे यावति वह्निमत्त्वलाभात्—यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम् । तदेव स्पष्टयति—साहचर्यनियम इति । एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति । नियतत्वं व्यापकत्वम् ॥ साहचर्यं नाम सामानाधिकरण्यम् । तथा च धूमनिष्ठवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः । अत्र वह्नेर्धूमव्यापकत्वं नाम—धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथा हि—धूमाधिकरणे पर्वत—चत्वर—महानसादौ वर्तमानो योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः, न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः, कुतः ? पर्वतादौ वह्नेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वत—चत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वह्नित्वं, वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते । इयमन्वयव्याप्तिः सिद्धान्तानुसारेण । पूर्वपक्षव्याप्तिस्तु—साध्याभाववदवृत्तित्वम्:— ( १ ) साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाव इति निष्कर्षः । तच्च केवलान्वयिन्यव्याप्तमिति सिद्धान्तानुसरणम् ॥

---

( १ ) 'पर्वतो—वह्निमान्—धूमादि'त्यत्र—येन संयोगसम्बन्धेन साध्यम् , सः संयोगः साध्यतावच्छेदकः सम्बन्धः, तादृशसाध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकः=अथ च साध्यतावच्छेदकवह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताको यः,=( अत्र संयोगेन वह्नित्वावच्छिन्न-वह्निनिष्ठा प्रतियोगिता वह्न्यभावनिरूपिता बोध्या, अतो वह्निः प्रतियोगी भवति, प्रतियोगितावच्छेदकसम्बन्धः संयोगः अतः ) तादृशप्रतियोगितावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदक—वह्नित्वावच्छिन्नवह्नेः यः प्रतियोगिव्यधिकरणः,—प्रतियोग्यनधिकरणजलह्रदवृत्तिः,= अभावः—'वह्निर्नास्ती'त्याकारको वह्न्यभावः, तद्वान् ह्रदः. तन्निरूपितायाः ( धूमस्य हेतोः पर्वते संयोगः, स हेतुतावच्छेदकः सम्बन्धः, तेन सम्बन्धेन मीनशैवालादिनिष्ठा वृत्तिता तादृशवृत्तित्वत्वावच्छिन्नायाः ) वृत्तितायाः ( तादृशवृत्तिताप्रतियोगिताकः ) अभावो धूमे वर्तते इति कृत्वा समन्वयो बोध्यः ॥ किन्तु—'सर्वं—वाच्यम्-प्रमेयत्वा'दिति केवलान्वयिस्थले साध्याभावाऽप्रसिद्ध्याऽव्याप्तिर्भवतीति द्रष्टव्यम् ॥

( प० ) यत्र यत्रेति । 'यत्र यत्र धूमस्तत्र तत्राग्नि'रिति व्याप्तेरभिनयः। यत्र-साहचर्यनियम-इति लक्षणम् । सह चरतीति सहचरस्तस्य भावः = साहचर्यं, सामानाधिकरण्यमिति यावत् । तस्य नियमो = व्याप्तिरित्यर्थः, स चाव्यभिचरितत्वम् । तच्च व्यभिचाराभावः । व्यभिचारश्च = साध्याभाववद्वृत्तित्वम् । तथा च—'साध्याभाववदवृत्तित्वं' व्याप्तिरिति पर्यवसन्नम्! 'महानसं-वह्निमत्, धूमादि' त्यादौ साध्ये वह्निः, तदभाववान् जलह्रदादिः, तद्वृत्तित्वं नौकादौ, अवृत्तित्वं प्रकृते हेतुभूते धूमे, इति कृत्वा लक्षणसमन्वयः । 'धूमवान्–वह्नेरित्यादौ साध्यो धूमस्तदभाववदयोगोलकं, तद्वृत्तित्वमेव वह्न्यादाविति नातिव्याप्तिः ॥

( दी० ) व्याप्तेर्लक्षणमाह–यत्रेति । 'यत्र धूमः तत्राग्नि'इति व्याप्तेरभिनयः । 'साहचर्यनियमः' इति लक्षणम् । साहचर्यं सामानाधिकरण्यम्, तस्य नियमः हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ।

---

(कि०) मूले—यत्रेति । 'यत्र यत्र धूमस्तत्र तत्र वह्निरिति 'यत्'पदवीप्सया वह्निधूमयोः सर्वत्र व्याप्यव्यापकभाव उपपद्यते ॥ अभिनयः=अभिप्रेतशब्दोच्चारणम् ॥ 'साहचर्यनियम'-इत्यस्य 'नियतसाहचर्य'मर्थः । धूमनियतवह्निसाहचर्यं-धूमे-इति परमार्थः । नियतत्वं= व्यापकत्वं=तत्समानाधिकरणात्यन्ताभावाऽप्रतियोगित्वमिति यावत् । साहचर्यम्='सहचरती'ति सहचरस्तस्य भावः साहचर्यम्–सामानाधिकरण्यमिति यावत् ॥ व्याप्तिस्वरूपमाह— हेतुसमानाधीति । 'पर्वतो–वह्निमान्—धूमादि'ति सद्धेतुस्थले–हेतुर्धूमः, तत्समानाधिकरणोऽभावः=धूमाधिकरणपर्वतवृत्तियों घटाभावः, तस्य प्रतियोगी घटः, अप्रतियोगी वह्निः साध्यम्, तत्सामानाधिकरण्यं धूमहेताविति लक्षणसमन्वयः। अन्यत्र सर्वत्र सद्धेतुविशेषे उक्तरीत्या लक्षणं सङ्गमनीयम्। असद्धेतौ तु न सङ्गच्छते यथा—'पर्वतो–धूमवान्—वह्ने'रितिव्यभिचारिस्थले हेतुः=वह्निः, तदधिकरणाऽयोगोलकवृत्त्यत्यन्ताभावो धूमाभावः, तत्प्रतियोगी धूमः, तदप्रतियोगी धूमो न भवतीति न वह्नौ व्याप्तिलक्षणस्य समन्वयः । यद्यपि 'पर्वतो वह्निमान्–धूमादि'त्यत्र हेत्वधिकरणे पर्वतादौ तत्तन्महानसीयादिवह्न्यभावस्य सत्त्वेन तत्प्रतियोग्येव सकलवह्निः, तदप्रतियोगित्वं न कस्यापि वह्नेरित्यव्याप्तिर्व्याप्तिलक्षणस्य । तथापि 'अप्रतियोगिसाध्ये'त्यस्य—"प्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणसाध्यतावच्छेदकावच्छिन्ने"त्यर्थकत्वान्न दोषः, तथा हि— धूमाधिकरणे पर्वतादौ तत्तन्महानसीयादिवह्न्यभावप्रतियोगी तत्तन्महानसीयादिवह्निः, तदवच्छेदकत्वं तत्तद्वह्नित्वे–तदनधिकरणत्वं शुद्धवह्नित्वे, तदवच्छिन्नसाध्यं वह्निः तत्सामानाधिकरण्यं धूमे–इति लक्षणसमन्वयः ॥ अत्र अभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। हेत्वधिकरणमपि–हेतुतावच्छेदकधर्मावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नस्याधिकरणं ग्राह्यम्। ननु तथापि 'कपिसंयोगी–एतद्वृक्षत्वा'दित्यत्राऽव्याप्तिः, हेत्वधिकरणवृक्षवृत्तियों मूलावच्छेदेन-साध्यतावच्छेदकसमवायसम्बन्धावच्छिन्नप्रतियोगिताकः 'कपिसंयोगो नास्ती'त्यभावस्तत्प्रतियोगिता

वच्छेदकमेव कपिसंयोगत्वमित्यव्याप्तिरिति चेन्न । प्रतियोगिव्यधिकरणत्वस्य हेतुसमानाधिकरणाऽभावविशेषणत्वान्नाऽव्याप्तिः, कपिसंयोगाभावस्य प्रतियोगी कपिसंयोगस्तत्समानाधिकरण एव कपिसंयोगाभावो न तु तद्व्यधिकरणः, प्रतियोगिव्यधिकरणस्तु वृक्षे घटाभावस्तत्प्रतियोगिताया अवच्छेदकं घटत्वं तदनवच्छेदकं कपिसंयोगत्वं तदवच्छिन्नसाध्यसामानाधिकरण्यस्यैतद्वृक्षत्वे सत्त्वाल्लक्षणसमन्वयः. विस्तरस्त्वन्यत्रानुसन्धेयः ॥

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥**

( प० ) ननु ज्ञातेयं व्याप्तिः, पक्षधर्मताज्ञानमित्यत्र का नाम पक्षधर्मता ? इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति--व्याप्यस्येति । व्याप्यो नाम–व्याप्त्याश्रयः । स च धूमादिरेव, तस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्यर्थः ॥

( दी० ) पक्षधर्मतास्वरूपमाह—व्याप्यस्येति ।

---

(कि०) व्याप्यस्येति । व्याप्यो नाम=व्याप्त्याश्रयो धूमादिः, तस्य पर्वतादिरूपपक्षवृत्तित्वं=पक्षधर्मतेत्यर्थः ॥

**अनुमानं द्विविधम् स्वार्थं परार्थञ्च ।**

( न्या० ) अनुमानं विभजते—स्वार्थमिति ।

(प०) अथ कथमनुमानमनुमितिकरणं ? कथं वा तस्मादनुमितेर्जनिरिति ? जिज्ञासमानं प्रति लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते—अनुमानमिति । द्वैविध्यं दर्शयति—स्वार्थं परार्थं चेति ॥

[ दी० ] अनुमानं विभजते—अनुमानमिति । तद्द्वैविध्यं दर्शयति—स्वार्थमिति ।

---

( कि० ) स्वार्थम्=स्वार्थोऽनुमानम् । न्यायाऽप्रयोज्याऽनुमानत्वं=स्वार्थोऽनुमानत्वम् । परार्थाऽनुमानत्वं च=न्यायप्रयोज्याऽनुमानत्वम् । प्रयोज्यत्वं=साक्षात्परम्परया वा जन्यत्वम् ॥

**स्वार्थं स्वानुमितिहेतुः । तथा हि—स्वयमेव भूयो दर्शनेन 'यत्र यत्र धूमस्तत्र तत्राग्निरि'ति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति,—'यत्र यत्र धूमस्तत्र तत्राग्निः, इति, तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् 'पर्वतो वह्निमानि'ति ज्ञानमनुमितिरुत्पद्यते तदेतत् स्वार्थानुमानम् ॥**

(न्या०) स्वार्थानुमानं नाम (१) न्यायाप्रयोज्यानुमानम् ॥

(प०) स्वस्यार्थः प्रयोजनं यस्मात् तत्स्वार्थमिति समासः । स्वप्रयोजनं च-स्वस्यानुमेयप्रतिपत्तिः-न एव परार्थमित्यस्यापि । अयमिति । व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गम् तच्च धूमादि । तस्य परामर्शो-ज्ञानविशेष इत्यर्थः । तस्मादिति । लिङ्गपरामर्शादित्यर्थः । स्वार्थानुमानमुपसंहरति—तदेतदिति । यस्मादिद स्वप्रतिपत्तिहेतुस्तस्मादेतत्स्वार्थानुमानमित्यर्थः ॥

(दी०) तत्रेति । उभयोर्मध्ये इत्यर्थः । स्वार्थानुमितिं दर्शयति—स्वयमेवेति । भूयोदर्शनेनेति । ननु पार्थिवत्वलौहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि मण्यादौ व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेत् न, व्यभिचारज्ञानविरह-सहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् । व्यभिचारज्ञानं द्विविधम्—निश्चयः,

---

(कि०) दीपिकायां—स्वार्थाऽनुमितिं दर्शयतीति । 'स्वस्य=अनुमातुः, अर्थः=प्रयोजनं साध्यसंशयनिवृत्तिरूपं यस्याः'—इति—व्युत्पत्तेः=अनुमातृसाध्यसन्देहप्रतिबन्धिकाऽनुमितिमित्यर्थः ॥ ननु पार्थिवत्वेति । पार्थिवत्वं=पार्थिवपदार्थधर्मः साधनम्, लौहलेख्यत्वं=तैजसपदार्थधर्मः साध्यम्, तथा च—'इयं—लौहलेख्या—पार्थिवत्वा'दित्यादौ द्वयोर्भूयःसहचारदर्शनं घटपटादौ विशेषेण भवति, किन्तु तयोर्धर्मयोर्व्याप्तिर्न भवति, हीरकादौ हेतोर्व्यभिचारग्रहात् । तथा च कारणे=भूयःसहचारदर्शनात्मके सत्यपि कार्यस्य=व्याप्तिग्रहात्मकस्याऽभावात् अन्वयव्यभिचारः; अतः सहचारदर्शनं न व्याप्तिग्रहजनकमिति भावः ॥ उत्तरयति—नेति । व्यभिचारज्ञानाऽभाव-सहितं यत् साध्यसाधनयोः सहचारदर्शनं तदेव व्याप्तिज्ञानजनकं, न तु केवलं सहचारज्ञानम् । व्याप्तिः= 'हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यस-मानाऽधिकरणहेतुतावच्छेदक'रूपा । अत्र 'साध्यतावच्छेदके—हेतुसमानाधिकरणाऽभावप्रतियोगिता-नवच्छेदकत्व'ग्रहे—साध्यतावच्छेदके हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकत्व—रूपव्यभि-चारग्रहाऽभावः प्रतिबन्धकाऽभावविधया कारणम् । अथ सामानाधिकरण्य ( सहचार ) ज्ञानं च विशेषणज्ञानविधया कारणम्, इत्येवंप्रकारेण व्यभिचारज्ञानाऽभाव—सहचारग्रहयोर्व्याप्तिज्ञानं प्रति कारणत्वं भवतीति भावः ।' 'पार्थिवत्वे—लौहलेख्यत्वाऽधिकरणहीरकादिवृत्त्यभावप्रतियोगितावच्छे-दकत्व'रूपव्यभिचारनिश्चयसत्त्वात् व्यभिचारज्ञानाऽभावसहकृतसहचारनिश्चयाऽऽत्मककारणविर-हान्न तत्र व्याप्तिग्रह इति परमार्थः । निश्चयशंकोभयसाधारणव्यभिचारज्ञानत्वेन व्याप्तिग्रहप्रति-बन्धकत्वमिति सूचनाय व्यभिचारज्ञानस्य द्वैविध्यं दर्शयति—निश्चयः शंका चेति ॥ तद्विरहः=शंकाविरहः ॥ क्वचिदिति । यादृशस्थले कालान्तरीयदेशान्तरीयधूमादौ वह्निव्यभि-

---

( १ ) 'प्रतिज्ञादिपञ्चावयववाक्यसमुदायात्मकेन न्यायेन परम्परया जन्यते यत् अनुमानं तत् परार्थानुमानम्, तच्च अग्रे प्रदर्शयिष्यते । तादृशपञ्चावयववाक्यप्रयोगं विनाऽपि उत्पद्यते यद् अनुमानं तत् स्वार्थानुमानम्, तच्च स्वस्याऽनुमितिहेतुरिति भावः ॥

शङ्का च ॥ तद्विरहः क्वचित्तर्कात् । क्वचित् स्वतः सिद्ध एव । धूमाग्न्योर्व्याप्तिग्रहे-कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः । ननु सकलवह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति चेत् ! न, वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्निधूमज्ञानसम्भवात् । तस्मादिति । लिङ्गपरामर्शादित्यर्थः ।

---

चारग्रहस्तादृशस्थले ॥ **तर्कादिति** ॥ 'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादि'त्यादि-तर्कादित्यर्थः ॥ नन्वेवं आपादके आपाद्यव्यभिचारशंकाया यदि तर्कान्तरेण निवृत्तिस्तदाऽनवस्था ? इत्यत आह—**क्वचिदिति** । यादृशस्थले यादृशतर्कमूलीभूतव्याप्तिग्रहप्रतिबन्धिका व्यभिचार-शंका–तर्काऽभावाऽतिरिक्तकारणाऽभावादेव निवर्तते, तादृशस्थले तर्कं विनैव व्याप्तिग्रहसम्भवान्ना-ऽनवस्थेत्याह—**स्वतः–इति** । तर्काऽतिरिक्तकारणप्रतियोगिकाऽभाववत इत्यर्थः । एवकारेण—तर्कस्य शंकाऽनुत्पादप्रयोजकत्वव्यवच्छेदः ॥ तर्कस्य व्यभिचारशंकाविरहप्रयोजकत्वं दर्शयति—**धूमाऽग्न्योरिति** । 'पर्वतो–वह्निमान्–धूमादि'तिस्थले 'पर्वतो—वह्निमानि'त्यनुमितिं प्रति वह्निधूमयोर्व्याप्तिज्ञानं कारणम्, व्याप्तिज्ञानविरोधिनी शंका—'धूमो वह्निव्यभिचारी न वे'ति, तद्विघटकस्तर्कः—'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्या'दिति । तत्र 'प्रथमं दलं—वह्निव्यभिचारित्वं—आपादकम् द्वितीयं दलं—'वह्निजन्यत्वाऽभावः'—आपाद्यः । वह्निजन्यत्वाऽभावाऽभावेन वह्निजन्यत्वेन आपाद्याभावेन वह्निव्यभिचारा-ऽभावस्य=आपादकाऽभावस्य सिद्धिर्भवति । तादृशसिद्धिद्वारा शंकाऽनुत्पादः । वह्निजन्य-त्वनिश्चयस्तु प्रत्यक्षतोऽन्वयव्यतिरेकसहचारादिना जायत इति । इदं सुवर्णस्य तैजसत्व-साधनप्रकरणे निरूपितं ततोऽवगन्तव्यम् ॥ **अक्षरार्थस्तु**—वह्निधूमयोर्व्याप्तिज्ञाने व्यभिचार-शंकाविघटको धूमवह्नयोः कार्यकारणभावः, तस्य भङ्गः=धूमे वह्निजन्यत्वाऽभावः, तस्य प्रसङ्गः=आपत्तिः–'वह्निजन्यो न स्यादि'त्याकारिका लक्षणं=स्वरूपं यस्य सः, तादृशस्तर्कः प्रयोजक इत्यवगन्तव्यम् ॥ ननु महानसीयवह्निधूमयोः सन्निकृष्टत्वेन सहचारग्रहेऽप्यपरेषां वह्निधूमानामसन्निकर्षेण सहचारप्रत्यक्षाऽसंभवात्सकलधूमेषु वह्निव्याप्तिप्रत्यक्षं न संभवति, एवं च पर्वतीयधूमदर्शनेन व्याप्तिस्मरणाऽसंभवात्परामर्शाऽनुपपत्तिरित्याशङ्कते—**ननु सकलेति**। निखिलवह्निधूमेषु लौकिकसन्निकर्षविरहेऽपि सामान्यलक्षणात्मकाऽलौकिकसन्निकर्षसत्त्वात् वह्नित्वेन निखिलवह्नीनां धूमत्वेन निखिलधूमानां तयोः सामानाधिकरण्यत्वेन च निखिल-वह्निधूमसहचाराणां प्रत्यक्षसंभवात् निखिलधूमेषु व्याप्तिग्रहः संभवति, एवं च पर्वतीयधूमे व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसंभवान्न परामर्शाऽनुपपत्तिरिति समाधत्ते—**वह्नित्व-धूमत्वेति** । इदं तु बोध्यम्–यत्रेन्द्रियसन्निकृष्टो धूमादिः, तद्विशेष्यक'धूम'इतिज्ञानं जातं, तत्र ज्ञाने धूमत्वं प्रकारः, तत्र धूमत्वेन सन्निकर्षेण 'धूमा' इत्येवं रूपं सकलधूमविषयकं ज्ञानं जायते। यदि सामान्यलक्षणासन्निकर्षो नाङ्गीक्रियेत, तदा धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत् ! तदर्थं सामान्यलक्षणाऽङ्गीक्रियते–इति ॥

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा-पर्वतो वह्निमान्-१ । धूमवत्त्वात्-२ । यो यो धूमवान् स स वह्निमान्, यथा महानसम्-३ । तथा चायम्-४। तस्मात्तथा-५ इति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते॥

(न्या०) न्यायप्रयोज्यानुमानं—परार्थानुमानम् । न्यायत्वं च—प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम् । अवयवत्वं च (१) प्रतिज्ञाद्यन्यतमत्वम् ॥

(प०) क्रमप्राप्तं परार्थानुमानमाह—यत्त्विति । यत्पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानमिति सम्बन्धः । पञ्चावयवेति । अथ—अवयवत्वं नाम द्रव्यसमवायिकारणत्वम्, प्रतिज्ञादिषु तदसंभवात्कथमेतेऽवयवाः स्युरिति चेत् ! अनुमानवाक्यैकदेशत्वात्त अवयवा इत्युपचर्यन्त इति गृहाण । नन्वेवमपि पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसह, तस्य लिङ्गपरामर्शत्वाभावादिति चेत् ! मैवम् । लिङ्गपरामर्शप्रयोजकलिङ्गप्रतिपादकत्वेनानुमानमित्युपचारमात्रत्वात । तदुदाहरति—यथेति । तथा चायमिति । अयं च पर्वतस्तथा=वह्निव्याप्यधूमवानित्यर्थः । तस्मात्तथेति । वह्निव्याप्यधूमवत्त्वाद्वह्निमानित्यर्थः । अनेनेति अनेन पञ्चावयववाक्येनेत्यर्थः ॥

(दी०) परार्थानुमानमाह—यत्त्विति । यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः । पञ्चावयववाक्यमुदाहरति—यथेति ।

---

( कि० ) मूले-यत्तु स्वयमिति । स्वयम्=अनुमाता । परप्रतिपत्त्यर्थम्=परस्यानुमेयप्रतिपत्त्यर्थम् ॥ परार्थानुमानशब्दस्य परसमवेतानुमाने=लिङ्गपरामर्शे शक्तिः, तथाप्युपचारात् परार्थानुमानं यस्मात् - परार्थानुमानप्रयोजकपञ्चावयववाक्यात्—इत्यर्थाङ्गीकारेण परार्थानुमानशब्दस्य पञ्चावयववाक्यपरत्वं मनसिकृत्य मूलमवतारयन्ति—परार्थानुमानमाहेति ॥ पञ्चावयववाक्यमिति । 'पञ्च अवयवा अस्य वाक्यस्येति'—व्युत्पत्त्या—'उचितानुपूर्वीकप्रतिज्ञादिपञ्चसमुदायत्वं न्यायलक्षणं बोध्यम । उचितानुपूर्वी च=प्रतिज्ञोत्तरहेतूत्तरो-

(१) प्रतिज्ञाद्यन्यतमत्वं नाम=प्रतिज्ञादिभिन्नभिन्नत्वम्, तच्च=प्रतिज्ञादिप्रत्येकप्रतियोगिकभेदपञ्चकावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, 'प्रतिज्ञा न' 'हेतुर्न' 'उदाहरणं न' 'उपनयो न' 'निगमनं न'इत्याकारकभेदपञ्चकवत् न प्रतिज्ञादिकम्, तत्र प्रत्येकं भेदचतुष्टयसत्त्वेऽपि स्वभेदाऽभावेन तादृशभेदपञ्चकाऽभावात्, किन्तु पञ्चावयववाक्यभिन्नो यावत्संसारः, तद्भिन्नत्वस्य प्रतिज्ञादिपञ्चसु सत्त्वात् समन्वयो बोध्यः ॥

दाहरणोत्तरोपनयोत्तरनिगमनत्वरूपा ॥ अवयवत्वं च 'न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् ॥ **मूले—तथा चायमिति**। अयं च=पर्वतः, तथा=वह्निव्याप्यधूमवानित्यर्थः ॥ **तस्मात् तथेति**। वह्निव्याप्यधूमवत्त्वाद्वह्निमानित्यर्थः ॥ अनेन=पञ्चावयववाक्येन प्रतिपादिताल्लिङ्गात्= लिङ्गपरामर्शादित्यर्थः ॥ तद्यथा—न्यायप्रयोगेन मध्यस्थस्य वाक्यपञ्चकज्ञानात् शाब्दबोधः, तेन मध्यस्थस्य लिङ्गपरामर्शो भवति, स चानुमितेश्चरमकारणम्, न्यायः शाब्दबोधद्वारा परामर्शजनक—इति। 'पर्वतो—वह्निमान्'—'धूमात्'—'यो यो धूमवान् स स वह्निमान्'— 'तथा चाऽयम्'—'तस्मात् तथे'तिवाक्यपञ्चकज्ञानेन—'पर्वतो वह्निमान्—हेतुत्वं धूमीयम्— महानसं धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्च—वह्निव्याप्यधूमवान् पर्वतः—साध्यव्याप्य- धूमज्ञानज्ञाप्याऽबाधिताऽसत्प्रतिपक्षितवह्निमान्'इत्याकारकमहावाक्यार्थविषयकबोधो भवतीति तत्र प्रतिज्ञया—'पर्वतो वह्निमानि'ति। हेतुना—'हेतुत्वं धूमीय'मिति । उदाहरणेन—'महानसं धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्चे'ति । उपनयेन—'वह्निव्याप्यधूमवान्पर्वत'इति। निगमनेन —'साध्यव्याप्यधूमज्ञानज्ञाप्याऽबाधिताऽसत्प्रतिपक्षितवह्निमानि'ति च बोधोऽनुसन्धेयः॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। 'पर्वतो वह्निमानि,ति-प्रतिज्ञा। 'धूमवत्त्वादि,ति हेतुः। 'यो यो धूमवान्- स स वह्निमानि'त्युदाहरणम्। 'तथा चायमि'त्युपनयः। 'तस्मा- त्तथे'ति निगमनम्॥**

(प०) ननु पञ्चावयववाक्यमित्यत्र के ते पञ्चावयवाः? अतस्तान्दर्शयति— **प्रतिज्ञेति**। प्रतिज्ञाद्यन्यतमत्वमवयवत्वम्। साध्यविशिष्टपक्षबोधकवचनं-प्रतिज्ञा। पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं-हेतुः। व्याप्तिप्रतिपादकदृष्टान्तवचनमुदा- हरणम्। उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयः। पक्षे साध्यस्याऽबाधितत्वप्रतिपादकवचनं-निगमनम्। इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन्निर्दिश्य दर्शयति-**पर्वतो वह्निमानित्यादिना**॥

(दी०) अवयवस्वरूपमाह—**प्रतिज्ञेति**। उदाहृतवाक्येषु प्रतिज्ञादिविभागमाह- **पर्वतो वह्निमानिति**। साध्यवत्तया पक्षवचनं—प्रतिज्ञा। पञ्चम्यन्तं लिङ्गप्रतिपादकं

---

(कि०) **साध्यवत्तयेति**। साध्यविशिष्टत्वेन पक्षबोधकं वाक्यमित्यर्थः, साध्यतावच्छेदकमा- त्रावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनकवाक्यमिति फलितार्थः। यो यो धूमवानि'त्याद्युदाहरणवाक्यस्य पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोध- जनकवाक्यत्वाभावान्नातिव्याप्तिः। 'तथा चाय'मित्युपनयवाक्यजन्यं 'इदन्त्वावच्छिन्नो वह्नि- व्याप्यधूमवानि'ति ज्ञानं न पर्वतत्वावच्छिन्ने साध्यतावच्छेदकाऽवच्छिन्नप्रकारकम्, अतस्तस्य वारणम् ॥ वाक्यपदस्य—न्यायावयववाक्यपरत्वात् न्यायबहिर्भूते 'पर्वतो वह्निमानि'त्यादि-

वचनं–हेतुः। व्याप्तिप्रतिपादकं वचनमुदाहरणम्। व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः। हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्। पक्षज्ञानं प्रतिज्ञा-प्रयोजनम्। लिङ्गज्ञानं हेतुप्रयोजनम्। व्याप्तिज्ञानमुदाहरणप्रयोजनम्। पक्षधर्म-ज्ञानमुपनयप्रयोजनम्। अबाधितत्वादिकं निगमनप्रयोजनम्।

---

वाक्ये नातिव्याप्तिः ॥ हेतुलक्षणमाह–'पञ्चम्यन्तं लिङ्गप्रतिपादकं वचन'मिति। अत्र 'पञ्चम्यन्तं हेतु'रितिमात्रलक्षणे सति–'इदं–न दण्डाज्जातम्,—दण्डसंयोगाजन्यद्रव्यत्वादि' त्यत्र प्रतिज्ञायां पञ्चम्यन्तत्वसत्त्वादतिव्याप्तिस्तद्वारणाय—लिङ्गप्रतिपादकमिति। ('पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकवचन'मितिलक्षणार्थो बोध्यः, तेन तृतीयान्तत्वेन वक्तव्ये हेतौ नाऽव्याप्तिः) वस्तुतस्तु पञ्चम्यन्तमित्यस्योपलक्षणत्वेन प्रकृतपक्षविशेषणताऽऽपन्नसाध्याऽन्वित-हेतुज्ञानज्ञाप्यत्वबोधकत्वे सति हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयिताभिन्नविषयिता-शून्यबोधजनकवाक्यं–हेतु'रिति लक्षणार्थः ॥ व्याप्तिप्रतिपादकमिति। प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यमित्यर्थः। "यो यो हेतुमान् स स साध्यवान्" इत्यत्र साध्यपदस्य हेतुव्यापकत्वविशिष्टसाध्ये निरूढा लक्षणा, द्विरुक्त'यत्'पदं तात्पर्यग्राहकम्, तेन उदाहरणस्य व्यापकत्वबोधकता। अथवा—लक्षणाया अनङ्गीकारपक्षेऽपि 'प्रथमं–'यत्'–पदार्थे महानसे द्वितीय–'यत्'पदार्थे च महानसान्ये प्रकृतहेतुमत्त्वस्य, प्रथम–'तत्'पदार्थे महानसे द्वितीय–'तत्'पदार्थे महानसान्ये साध्यवत्त्वस्य च, शाब्दबोधे जाते सति तदनन्तरं व्यापकताबोधो भवति, स तु मानस एव, न तु शाब्दबोधात्मकः, तद्बोधक-शब्दाभावात्। तथा च व्यापकत्वघटितव्याप्तिबोधकत्वम् उदाहरणस्योपपद्यते इति। तेन–'प्रकृतहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणे प्रकृतहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्य-भावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वबोधजनकवाक्यत्वमुदाहरणत्वमिति–फलितार्थः ॥ व्याप्तिविशिष्टेति। पक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकार-कबोधजनकवाक्यमित्यर्थः। 'तथा चायमि'त्यस्य–'अयं च पर्वतो वह्निव्याप्यधूमवा'नित्यर्थः, तत्र पर्वतो विशेष्यः, वह्निव्याप्यो धूमः प्रकारः, तेन तादृशलक्षणं तत्र सङ्गच्छते इति भावः ॥ हेतुसाध्येति। हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवद्विषयकबोधजनकवाक्यमित्यर्थः। 'तस्मात्तथे'त्यत्र–'तस्मादि'त्यस्य साध्यव्याप्यहेतुज्ञानजन्यज्ञानविषयत्वमर्थः, 'तथे'त्यस्य च अबाधिताऽसत्प्रतिप-क्षितसाध्यपरत्वम्, तथा च प्रकृतपक्षविशेष्यकसाध्यव्याप्यहेतुज्ञानजन्यज्ञानविषयीभूताऽबाधिता-ऽसत्प्रतिपक्षितसाध्यप्रकारकबोधजनकवाक्यमिति फलितार्थः ॥ 'तस्मात्तथे'ति निगमनवाक्याधीन–प्रकृतसाध्यव्याप्यधूमज्ञानज्ञाप्यसाध्यबोधानन्तरं–प्रकृतसाध्ये अबाधितत्वादिबोधो मानस इति—केचित्। अपरे तु–निरुक्तसाध्यपदमेव लक्षणया अबाधिताऽसत्प्रतिपक्षितसाध्यबोधकमित्याहुः।

**स्वार्थाऽनुमिति-परार्थाऽनुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

(प०) लिङ्गेति। ज्ञायमानं लिङ्गमनुमितिकरणमिति वृद्धोक्तं न युक्तम्, 'इयं यज्ञशाला वह्निमती—अतीतधूमादित्यादौ लिङ्गाभावेऽप्यनुमितिदर्शनादित्यभिप्रायवान्–लिङ्गपरामर्श एव कारणमित्याचष्टे—लिङ्गपरामर्श एवेति। अनुमानमुपसंहरति–तस्मादिति। अनुमितिकरणत्वादित्यर्थः। अयमेव तृतीयज्ञानमित्युच्यते। तथा हि—महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम्, पक्षे यद्धूमज्ञानं तद्द्वितीयम्। अत्रैव वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम्। इदमेव लिङ्गपरामर्श इत्युच्यते। अनुमानमिति। व्यापारवत्कारणं करणमिति मते व्याप्तिज्ञानमेवानुमानम्, लिंगपरामर्शो व्यापार, इत्यवसेयम्॥

(दी०) अनुमितिकरणमाह-स्वार्थेति। ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेत्! न, 'वह्निव्याप्यधूयवानयम्'

---

(कि०) नैयायिकाः–'अनुमितिस्थले प्रथमं 'पर्वतो धूमवानि'तिप्रत्यक्षम्। ततः—'यत्र यत्र धूमस्तत्र तत्र वह्निरि'तिव्याप्तिस्मरणम्। ततो 'वह्निव्याप्यधूमवानयं पर्वत' इति परामर्शो विशिष्टवैशिष्ट्यावगाहिज्ञानात्मकः, ततः 'पर्वतो वह्निमानि'त्यनुमितिरितिप्रक्रियां—मन्यन्ते॥ मीमांसकाः (प्राभाकराः)–प्रथमं 'पर्वतो धूमवानि'तिप्रत्यक्षम्। ततो 'यत्र यत्र धूमस्तत्र तत्र वह्नि'रितिव्याप्तिस्मरणम्। ततः 'पर्वतो वह्निमानि'त्यनुमितिरिति—मन्यन्ते, ते च विशिष्टपरामर्शं नाङ्गीकुर्वन्ति, यतस्तादृशज्ञानद्वयादेवानुमितेर्दर्शनात् लाघवाज्ज्ञानद्वयमेव कारणम्, तत्र परामर्शरूपविशिष्टवैशिष्ट्यज्ञानकल्पने गौरवादित्याशङ्कते—नन्विति॥ व्याप्तिस्मृतिः=यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिस्मरणम्। पक्षधर्मताज्ञानम्='पर्वतो धूमवानि'तिप्रत्यक्षम्। ताभ्यामेव'पर्वतो वह्निमानि'त्यनुमितौ सत्यां तदर्थं विशिष्टपरामर्शः—'वह्निव्याप्यधूमवान्पर्वत'इत्याकारको नाङ्गीकरणीय इति भावः। तथा च विशिष्टवैशिष्ट्यावगाहिज्ञानत्वं नाऽनुमितिकारणतावच्छेदकम्, किन्तु–'व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वमेव, तस्योभयवादिसिद्धनियतपूर्ववर्तितावच्छेदकत्वात्, तथा च ज्ञानद्वये अनन्यथासिद्धत्वमात्रं मीमांसकैः कल्पनीयमिति लाघवम्॥ नैयायिकैस्तु-विशिष्टवैशिष्ट्यावगाहिज्ञानत्वस्य उभयवादिसिद्धनियतपूर्ववर्तितावच्छेदकत्वविरहात् विशिष्टवैशिष्ट्यज्ञाने नियतपूर्ववर्तित्वम् अनन्यथासिद्धत्वं चेत्युभयं कल्पनीयमिति, गौरवम् बोध्यम्॥

उत्तरयति—नेति॥ व्यतिरेकव्यभिचारं दर्शयति—वह्निव्याप्येत्यादिना तथा हि–'वह्निव्याप्यधूमवानय'मित्यात्मकशब्दजन्यवह्न्याद्युपस्थित्यधीनविशिष्टवैशिष्ट्यावगाहि—'वह्निव्याप्यधूमवानय'मिति शाब्दादिपरामर्शस्थले तज्ज्ञानद्वयं विनाऽपि नैयायिकैरिव मीमांसकैरप्यनुमितिस्वीकारात्, तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वस्याऽऽनुमितिकारणतावच्छेदकत्वकल्पने उभयमतसिद्धेऽकारणे तादृशविशिष्टज्ञानत्वावच्छिन्ने मीमांसकैरनन्यथासिद्धत्वं नियतपूर्ववर्तित्वं चेत्युभयं कल्पनीयं तद् गौरवम्॥ किञ्च–ज्ञानद्वयस्य कारणतावादिना प्राभाकरेण

इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात्। लिङ्गं न करणम्। अतीतानागतादौ व्यभिचारात्। 'व्यापारवत्कारणं करणम्' इति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। अनुमानमुपसंहरति—तस्मादिति ॥

---

'धूमो वह्निव्याप्यः—आलोकवान् पर्वत' इतिज्ञानादनुमित्यापत्तेर्वारणाय 'तद्धर्मा (धूमत्वा) वच्छिन्न-विशेष्यकव्याप्तिप्रकारकनिश्चयविशिष्टतद्धर्मा(धूमत्वा)वच्छिन्नप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्य-कनिश्चयत्वं कारणतावच्छेदकं ज्ञानद्वयसाधारणं मन्तव्यम्' तदपेक्षया नैयायिकैः—व्याप्तिप्रकारता-निरूपितहेतुप्रकारतानिरूपितपक्षविषयताशालि (व्याप्तिविशिष्टवैशिष्ट्यावगाहि) निश्चयत्वं' कारणता-वच्छेदकं मन्यते, तद्ह्रस्वशरीरतया परं लाघवमिति बोध्यम् ॥ प्राचीनास्तु—व्याप्यत्वेव ज्ञायमानं लिङ्गमनुमितिकरणमिति—वदन्ति, तद्दूषयति—लिङ्गं न करणमिति ॥ अतीताऽ-नागतादाविति। तादृशे लिङ्गे व्यतिरेकव्यभिचारादिति भावः। 'इयं यज्ञशाला—वह्निमत्या-सीत्,—अतीतधूमात्। एवम्—'", यज्ञशाला—वह्निमती भविष्यति,—भाविधूमात्' इत्यत्रानुमिते-रनुभवसिद्धत्वेन तत्र तदव्यवहितपूर्वं भूतभविष्यद्धूमादेरसत्त्वात् तादृशानुमितिरेव न भवितुमर्हतीतिभावः ॥ व्यापारवदिति। करणव्याख्या द्विविधा—व्यापारवत्कारणं करणम्, फलायोगव्यवच्छिन्नं कारणं करणमिति च। तत्र प्रथममते परामर्शात्मकव्यापारवत्कारणं व्याप्ति-ज्ञानं=करणम्,। व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितेर्जनकत्वात् परामर्शो व्यापारः, स्वसामानाधिकरण्यसम्बन्धेन व्यापारवद् व्याप्तिज्ञानमिति ध्येयम्। द्वितीयमते तु परामर्श एव करणमिति ॥ 'तज्जन्यत्वे सती' त्यनुपादाने व्याप्तिज्ञानजन्यानुमितिजनकत्वं व्याप्तिज्ञानेऽपि वर्तते तेन स्वस्य स्वव्यापारत्वापत्तिः स्यादिति—तद्वारणाय—तज्जन्यत्वोपादानम्, तथा च स्वजन्यत्वं स्वस्मिन्नास्तीति नाऽतिव्याप्तिः। स्वजन्यजनकत्वानुपादाने—स्वजन्यत्वमनुमितावप्यस्तीत्यनुमितेर्व्या-प्तिज्ञानव्यापारत्वापत्तिः स्यात् तद्वारणाय-तज्जन्यजनकत्वमिति, तथा चानुमितेर्न व्याप्तिज्ञानजन्यजन-कत्वमतस्तद्वारणम् ॥

लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि, केवलान्वयि, केवल-व्यतिरेकि, चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यति-रेकि, यथा—वह्नौ साध्ये धूमवत्त्वम्। 'यत्र धूमस्तत्राग्निर्यथा—महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा-महाह्रद इति व्यतिरेकव्याप्तिः ॥

(न्या०) अन्वयेनेति। व्यापकसामानाधिकरण्यरूपव्याप्तिमानि-

त्यर्थः। व्यतिरेकेणेति। व्यतिरेको नाम—अभावः। तथा च(१)साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयं च व्याप्तिः—'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव' इति। 'यत्र'-पदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवञ्च (२) वह्न्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन [ धूमवत्त्वम् ] व्यतिरेकित्वेन, धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गीयते। व्यतिरेकपरामर्शस्तु—'वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत' इत्याकारकः॥

(५०) अन्वयव्यतिरेकिणो लक्षणमाह—अन्वयेति। तृतीयायाः प्रयोज्यत्वमर्थः। साध्यसाधनयोः साहचर्यमन्वयः। तदभावयोः साहचर्यं व्यतिरेकः। तथा चान्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः। केवलव्यतिरेकिण्यतिव्याप्तिवारणाय—अन्वयेनेति। केवलान्वयिनि व्यभिचारवारणाय—व्यतिरेकेणेति। तथा चान्वयव्याप्तिरुपदर्शितैव। व्यतिरेकव्याप्तिश्च—'साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति, तदुक्तम्—"व्याप्यव्यापकभावो (३) हि भावयोर्यादृगिष्यते। तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥ अन्वये साधनं व्याप्यं, साध्यं व्यापकमिष्यते। साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः" ॥इति॥

---

(१) 'साध्याभावहेत्वभावयोर्व्याप्तिः व्यतिरेकव्याप्ति'रित्यस्य साध्यनिरूपिता हेतुनिष्ठा साध्याभावहेत्वभावघटिता व्याप्तिः—व्यतिरेकव्याप्तिरित्यर्थः। यथाश्रुते तु—साध्याभावहेत्वभावयोः व्याप्तिः—जलह्रदे—'धूमाभावनिरूपिता धूमाभावाभाववदवृत्तिर्वह्न्यभाव' इत्याकारिकाऽन्वयव्याप्तिरेव स्यात्, व्यतिरेकव्याप्तिस्तु विलुप्येतेति ध्येयम्॥

(२) 'वह्न्यभावनिष्ठव्याप्ते'रित्यादिग्रन्थः प्रामादिकः, यतः—व्यतिरेके धूमाभावो व्यापकः—वह्न्यभावनिष्ठा व्याप्तिस्तु—साध्याभाववदवृत्तित्वरूपा='धूमाभावाभाववदवृत्तिर्वह्न्यभाव' इत्याकारिका—अन्वयव्याप्तिरेव, न तु व्यतिरेकव्याप्तिः, तादृशाऽन्वयव्याप्तेः—स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठत्वे तु धूमस्याऽन्वयित्वमेव भवेत्, न तु व्यतिरेकित्वमिति॥ वस्तुतः—वह्निनिरूपिता वह्न्यभावधूमाभावघटिता धूमनिष्ठा वह्न्यभावव्यापकीभूताभावप्रतियोगित्वरूपा—साक्षात् व्याप्तिः धूमे बोध्येति सूक्ष्ममीक्षणीयम्॥

(३) भावयोः=वह्निधूमयोः, व्याप्यव्यापकभावः=धूमे व्याप्यत्वं वह्नौ च व्यापकत्वं, या दृगिष्यते, तयोः=वह्निधूमयोः, अभावयोः व्याप्यव्यापकभावः, तस्मात्=भावयोर्व्याप्यव्यापकभावात्, विपरीतः=वह्न्यभावः=व्याप्यः, धूमाभावः=व्यापकः, इति प्रतीयते इत्यर्थः॥ तदेव

(दी०) लिङ्गं विभजते–लिङ्गमिति । अन्वयव्यतिरेकि लक्षयति–अन्वयेनेति । हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः ॥

---

(कि०) मूले–लिङ्गं त्रिविधमिति । अन्वयेनेति–तृतीयार्थः प्रयोज्यत्वम्, अन्वयो नाम=साध्यसाधनयोः–सहचारः, तदभावयोः सहचारो=व्यतिरेकः । तथा चाऽन्वयसहचार-प्रयोज्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारप्रयोज्यव्याप्तिमत्–अन्वयव्यतिरेकि । केवलव्यतिरेकि-ण्यतिव्याप्तिवारणाय—अन्वयेनेति । केवलान्वयिन्यतिव्याप्तिवारणाय-–व्यतिरेकेणेति ॥ अन्वयव्याप्तिरिति । हेतुव्यापकसाध्यसामानाधिकरण्यरूपा पूर्वं दर्शिता ॥ व्यतिरेक-व्याप्तिरिति । 'साध्याभाव–व्यापकीभूताभावप्रतीयोगी हेतु'रित्याकारा, यथा 'यत्र जलह्रदे वह्निर्नास्ति तत्र धूमोऽपि नास्ती'त्यत्र वह्न्यभावस्य व्यापकीभूतो धूमाभावस्तत्प्र-तियोगित्वं धूमे–इति । धूमे वह्निनिरूपिता व्याप्तिः=वह्न्यभावधूमाभावघटिता या वह्निधू-मयोर्व्याप्तिः सा व्यतिरेकव्याप्तिः, नतु धूमाभाववह्न्यभावयोर्व्याप्तिः, सा तु धूमाभावाऽभाव (साध्या-ऽभाव) वद्वृत्तिवह्न्यभावरूपाऽन्वयव्याप्तिरेव भवति । एतेन -"वह्न्यभावनिष्ठा व्यतिरेकव्याप्तिः स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमे वर्तते",–इति=मतं निरस्तम्, तस्याः साक्षाद्धूमे वर्तमानत्वात्, अन्वयव्याप्तिरपि साक्षाद्वर्तते, इत्युभयव्याप्तिविशिष्टत्वाद्धूम ऽन्वय-व्यतिरेकीति ॥ सर्वत्र हेतुर्व्याप्यः, साध्यं व्यापकम्, व्यतिरेके तु साध्याभावो व्याप्यः, हेत्वभावो व्यापकः । व्यतिरेकव्याप्तिज्ञानजन्यः परामर्शः="वह्न्यभावव्यापकीभूताऽभावप्रतियोगिधूमवान् पर्वत"इत्याकारक इति बोध्यम् ॥

**अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा 'घटोऽभिधेयः—प्रमेयत्वात्,–पटवत्' । अत्र प्रमेयत्वाऽभिधेयत्वयोर्व्यतिरेकव्याप्ति-र्नास्ति, सर्वस्याऽपि प्रमेयत्वादभिधेयत्वाच्च ॥**

( न्या० ) केवलान्वयिनो लक्षणमाह अन्वयेति । व्यतिरेक-व्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । अथवा केवला-न्वयिसाध्यकत्वं हेतोः केवलान्वयित्वम्, साध्ये केवलान्वयित्वं चात्यन्ता-भावाप्रतियोगित्वम् । तथा च अभावाप्रतियोगिसाध्यकत्वं केवलान्वयि-हेतोर्लक्षणम् ।/ एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि संगच्छते । साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्व-यीति मूलकारोक्तं लक्षणमुपपन्नम् । अत्यन्ताभावाऽप्रतियोगित्वं केवला-

---

श्लोकान्तरेण दर्शयति–अन्वये इति । द्वयोरन्वयव्याप्तिग्रहे-इत्यर्थः ॥ अन्यथा=साध्याभावसाध-नाभावयोर्व्यतिरेकव्याप्तिग्रहे । साधनस्याऽत्ययः=अभावः व्यापकः, साध्याभावस्तु व्याप्य इति ॥

न्वयित्वम्। न चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम्। (१) स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात्। एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति नव्याः।

(प०) केवलान्वयिनो लक्षणमाह—अन्वयेति। अन्वयेनैव व्याप्तिर्यस्मिन् स तथा। प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति— अत्रेति। अभिधेयत्वसाध्यकानुमान इत्यर्थः। कुतस्तन्निषेधोऽतस्तत्र हेतुमाह—सर्वस्येति। पदार्थमात्रस्येत्यर्थः। तथा च सकलपदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः॥

(दी०) केवलान्वयिनां लक्षणमाह—अन्वयेति। केवलान्वयिसाध्यकं लिङ्ग

---

(कि०) ननु—'अन्वयमात्रव्याप्तिकमि'ति—मूले—'मात्र'पदस्य व्यतिरेकव्याप्तिव्यवच्छेद एव प्रयोजनम्, तेन 'अन्वयव्याप्तीतराऽविशिष्टं सत् अन्वयव्याप्तिविशिष्टं' अन्वयमात्रव्याप्तिकमित्यर्थः, तथा च—'वाच्यं-ज्ञेयत्वा'दित्यत्र यथाश्रुतं केवलान्वयिलक्षणं ज्ञेयत्वहेतौ अव्याप्तम्, तत्र व्यतिरेकव्याप्त्यप्रसिद्ध्या तद्व्यवच्छेदस्य वक्तुमशक्यत्वादित्यत आह—केवलान्वयिसाध्यकमिति। केवलान्वयिसाध्यकव्यतिरेकिहेतुरपि केवलान्वयीति बोधनाय साध्ये केवलाऽन्वयित्वनिवेशः॥ अत्यन्ताभावेति। व्याप्यवृत्त्यत्यन्ताऽभावाऽप्रतियोगित्वं'—

(१) अवृत्तिपदार्थस्य गगनस्याऽभावः सर्वत्राऽस्ति, अतः सः केवलान्वयी, एवं संयोगस्याऽव्याप्यवृत्तिपदार्थस्याऽभावः सर्वत्राऽस्तीति सोऽपि केवलान्वयीति सिद्धान्तः। अथ गगनाभावस्य गगनात्मक-गगनाभावाभावप्रतियोगित्वेन, संयोगाभावस्य संयोगात्मक संयोगाभावाभावप्रतियोगित्वेन अत्यन्ताभावाऽप्रतियोगित्वं गगनाभावे संयोगाभावे चाऽव्याप्तम्, तद्वारणाय—अत्यन्ताभावः स्वविरोधित्वेन, वृत्तिमत्त्वेन, च विशेषितः, गगनात्मक-गगनाभावाभावो न वृत्तिमान्, एवं संयोगात्मक-संयोगाभावाभावो न संयोगाभावविरोधी, अतस्तौ न अत्यन्ताभावपदग्राह्यौ, किन्तु—'घटः'—स्वं=पदार्थः, तस्य विरोधी वृत्तिमांश्च घटाभावः तस्य प्रतियोगी घटः ( स च न केवलान्वयी)अप्रतियोगी न गगनाभावः संयोगाभावश्च केवलान्वयीति भावः॥ एकजातीयेति। एकेनैव सम्बन्धेनेत्युच्यमाने—प्रमेयत्वस्य केवलान्वयित्वं न स्यात्, ईश्वरप्रमाविषयत्वस्य विषयनिष्ठाऽनुयोगितात्मकस्वरूपसम्बन्धस्य भिन्नत्वात्, अत एकजातीयत्वमुक्तम्, तच्च केवलान्वयिताघटकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वम् बोध्यम्॥ नवीनमते ईश-प्रमाविषयतायाः स्वरूपसम्बन्धस्य अनुयोगिभेदान्नानात्वेऽपि तस्यैकजातीयत्वात् न क्षतिरिति ध्येयम्॥

केवलान्वयि । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । केवलान्वयि उदाहरति —घटोऽभिधेयः—प्रमेयत्वादिति । ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः ।

---

केवलान्वयित्वमित्यर्थः । संयोगाऽभावाऽभावो न व्याप्यवृत्तिः, संयोगात्मकस्य तस्य अव्याप्यवृत्तित्वात्, तत्प्रतियोगित्वेऽपि संयोगाऽभावे नाऽव्याप्तिः, तस्य व्याप्यवृत्त्यत्यन्ताऽभावाऽप्रतियोगित्वात् न वा संयोगेऽतिव्याप्तिः, संयोगाऽभावस्य व्याप्यवृत्तित्वेन संयोगस्य तत्प्रतियोगित्वात् ॥ एवं गगनाऽभावाभावस्य गगनस्वरूपस्य वृत्तित्वाऽप्रसिद्धया सुतरां व्याप्यवृत्तित्वाऽप्रसिद्धिः, तथा च गगनाभावस्य गगनस्वरूप-गगनाभावाभावप्रतियोगित्वेऽपि व्याप्यवृत्त्यत्यन्ताभावाऽप्रतियोगित्वात् केवलान्वयित्वमुपपन्नम् । गगने च-गगनाभावात्मको यो व्याप्यवृत्त्यत्यन्ताभावस्तत्प्रतियोगित्वान्नाऽतिव्याप्तिरिति ध्येयम् । ईश्वरप्रमेति । 'प्रमेयत्वा'दित्यस्य ईश्वरप्रमाविषयत्वस्वरूपत्वादित्यर्थः । ईश्वरस्य सर्वज्ञस्य नित्यज्ञानं प्रमा, तद्विषयत्वं सर्वत्राऽस्ति न त्वस्मदादिप्रमाविषयत्वमिति भावः ॥ 'अभिधेय'इत्यस्य सर्व-पदाऽभिधेयत्वमर्थः, सकलपदाऽभिधेयत्वं, शब्दशक्यत्वमिति यावत् । तयोः सर्वत्र सत्त्वात् तयोर्व्यतिरेकः=अभावः कुत्रचिदपि न मिलतीति भावः ॥

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा-'पृथिवी इतरेभ्यो भिद्यते-गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम्, न चेयं तथा; तस्मान्न तथेति, अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ॥

(न्या०) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं पक्षः । पृथ्वीतरजलाद्यष्टभेदः साध्यः । गन्धवत्त्वं हेतुः ।—अत्र—'यद्गन्धवत्तदितरभेदवदि'त्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात् । किन्तु 'यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो' यथा—जलादिकमिति व्यतिरेकिदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय "यदितरेभ्यो न भिद्यते न तद्गन्धवत्' यथा—जलमिति"—ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवंप्रकारेण—व्यतिरेकव्याप्तिग्रहानन्तरम् इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती

पृथिवी'त्याकारकव्यतिरेकिपरामर्शात् 'पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका—'पृथिवी—इतरभेदवती'त्याकारकानुमितिर्जायत इति तत्त्वम् । यथाश्रुतमूलार्थस्तु—यथा जलमिति । यत् = जलं, इतरेभ्यो न भिद्यते = इतरभेदाभाववत्, न तत् गन्धवत् = जलं = इतरभेदाभावव्यापकगन्धाभाववत् । इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता = इतरभेदाभावे गृह्यत इत्यर्थः । न चेयं तथेति । इयं = पृथिवी, न तथा = इतरभेदाभावव्यापकगन्धाभाववती न, किन्तु तदभावात्मकगन्धवती । तस्मान्न तथेति । तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन 'तस्मादि'ति पञ्चम्यन्ताद् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः । न तथा इतरभेदाभाववती न, किन्तु इतरभेदाभावाभाववती,—इतरभेदवतीत्यर्थः ॥

( प० ) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय—मात्रेति । न चेयं तथेति । इयं = पृथिवी, न तथा=न गन्धाभाववतीत्यर्थः । तस्मान्न तथेति । गन्धाभाववत्त्वाभावादितरभेदाभाववती नेत्यर्थः । नन्वत्र किमिति नान्वयव्याप्तिरित्याशंक्य परिहरति—अत्रेति । इतरभेदसाधकानुमान इत्यर्थः । इदमुपलक्षणम् । 'जीवच्छरीरं—सात्मकं—प्राणादिमत्त्वात्, यन्नैवम् तन्नैवम् यथा घटः ।' 'प्रत्यक्षादिकं—प्रमाणमिति व्यवहर्तव्यं —प्रमाकरणत्वात्, यन्नैवम् तन्नैवम् । यथा (१) प्रत्यक्षाद्याभासः । 'विवादास्पदम्—आकाशमिति व्यवहर्तव्यं शब्दवत्त्वात्, यन्नैवं तन्नैवं यथा घटः, इत्यादिकमपि केवलव्यतिरेकीति द्रष्टव्यम् ॥

(दी० केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । केवलव्यतिरेकि उदाहरति—पृथिवीति । नन्वितरभेदः प्रसिद्धो ? न वा ? आद्ये—यत्र प्रसिद्धस्तत्र

---

( कि० ) 'व्यतिरेकमात्रव्याप्तिकमि'ति-मूलम् ॥ लक्षणया निश्चितव्यतिरेकव्याप्तिकत्वे सति निश्चिताऽन्वयव्याप्तिशून्यत्वमित्यर्थकम्,- तेन-'पृथिवी-इतरेभ्यो भिद्यते-गन्धवत्त्वा'दित्यत्राऽनिश्चिताऽन्वयव्याप्तेः सत्त्वेऽपि न व्यतिरेकिलक्षणाऽव्याप्तिरिति ॥ दीपिकायां नन्वितरभेद-इति । पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदः, स च कुत्राऽपि घटादिपृथिव्यां यदि प्रसिद्धः= किञ्चिद्विशेष्यकनिश्चयविषयीभूतः, तदा तत्रैव हेतुसत्त्वे अन्वयसहचारग्रहप्रयोज्यव्याप्तिमत्त्वेन

---

(१)प्रत्यक्षाऽऽभासः=भ्रमजनकं कृत्रिमं काचादिदूषितचक्षुरादिकम् । आदिना 'अनुमानाऽऽभासः =दुष्टहेतुः, घटादौ गवादिसादृश्यज्ञानम्, निराकांक्षः शब्दश्चे'ति व्यतिरेकिदृष्टान्ततया बोध्याः ॥

हेतुसत्त्वे अन्वयित्वम्, असत्त्वे असाधारण्यम् । द्वितीये–साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः ! विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात् । प्रतियोगिज्ञानाभावाद्-व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेत् ! न, जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते । त्रयोदशत्वावच्छिन्नसाध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये । प्रत्येकाधिकरणप्रसिद्ध्या साध्यविशिष्टानुमितिः । साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्यतिरेकव्याप्तिनिरूपणंच–यदितरेति ॥

---

अन्वयव्यतिरेकित्वाऽऽपत्तिरिति हृदयम् । यत्र प्रसिद्धिस्तत्र हेतोरसत्त्वे निश्चितसाध्यवत्सपक्षाऽवृत्तित्वेन सपक्षव्यावृत्तत्वरूपमसाधारण्यं दोषः ॥ द्वितीये-इति । इतरभेदस्याऽसिद्धत्वस्वीकारपक्षे-इत्यर्थः । कुत्राऽपि घटादिपृथिव्याम् इतरभेदात्मकसाध्यस्याऽप्रसिद्ध्या साध्यज्ञानाऽसंभवेन साध्यात्मकविशेषणविशिष्टपक्षविशेष्यकाऽनुमितिः–'पृथिवी–इतरभिन्ने'त्याकारिका न स्यात्, विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वादिति भावः ॥ दूषणान्तरमाह–व्यतिरेकेति । प्रतियोगिनः 'इतरभेदस्य' प्रमितिं विना पृथिवीतरभेदाऽभावज्ञानविरहात् 'साध्याऽभावव्यापकीभूताऽभावप्रतियोगित्व' रूपा व्यतिरेकव्याप्तिरपि न भवेदिति भावः। उत्तरयति-नेत्यादिना । जलादित्रयोदशेति। जलादीन्यष्टौ–गुणादयश्च पञ्च पदार्थाः, प्राभाकरेण अभावस्याऽधिकरणात्मकत्वाऽङ्गीकारात् तं प्रत्येतदनुमानप्रयोगे चतुर्दश नोक्ता इति भावः, तथा च पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदो न साध्यते पृथिव्यां किन्तु जलादीनां त्रयोदशानां ये त्रयोदशाऽन्योन्याभावाः त्रयोदशसु प्रत्येकं प्रसिद्धाः यथा–जलं तेजो न, तेजो वायुर्न, वायुराकाशं न, आकाशं कालो न, कालो दिशा न, दिशा आत्मा न, आत्मा मनो न, मनो गुणो न, गुणः कर्म न, कर्म सामान्यं न, सामान्यं विशेषो न, विशेषः समवायो न, समवायो जलं न, इतित्रयोदशभेदाः, अथवा—"जलं तेजो न, तेजो जलं न," "वायुराकाशं न, आकाशं वायुर्न" इत्येवं त्रयोदशभेदास्तेषां मेलनं=समुदायः,–जलादीनां तावद्भेदकूट इति यावत् ॥ पृथिव्यां साध्यते इति । तथा च जलादिकमेव प्रत्येकं परस्परत्रयोदशभेदाऽधिकरणं प्रसिद्धं न तु घटादिपृथिवीति ॥ नन्वेवम् अन्वयित्वाऽसाधारण्यवारणं कथं भवतीत्याकांक्षायामाह—त्रयोदशत्वावच्छिन्नसाध्यस्येति । जलादित्रयोदशप्रतियोगिका भेदा अपि त्रयोदश, भेदेषु त्रयोदशत्वं न संख्यात्मकम्, गुणे गुणाऽनङ्गीकारात्, किन्तु अपेक्षाबुद्धिविषयत्वम्, पर्याप्तिसम्बन्धेन तादृशत्रयोदशत्वाऽधिकरणीभूतस्य जलादित्रयोदशभेदात्मकसाध्यस्य पृथिव्यामनिश्चितत्वान्न गन्धहेतोरन्वयित्वम् ( नाऽन्वयव्यतिरेकित्वाऽऽपत्तिः ) ॥ न वा असाधारण्यदोषदुष्टत्वम्, पृथिवीमात्रस्य पक्षत्वेन पृथिवीभिन्ने च कुत्राऽप्येकस्मिन्नधिकरणे तादृशत्रयोदशभेदानां वर्तमानताया अनिश्चयात् निश्चितसाध्यवतः सपक्षस्याऽप्रसिद्ध्या सपक्षव्यावृत्तत्वाऽप्रसिद्धेरिति भावः ॥ प्रत्येकेति । प्रत्येकस्य तत्तद्भेदस्य,–अधिकरणे =प्रत्येकजलादौ, प्रसिद्ध्या=ज्ञानेन । तथा च तादृशविशेषणतावच्छेदकप्रकारकनिश्चयस्य तत्र

सद्भावात् साध्यविशिष्टाऽनुमितिः=साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिनी-'पृथिवी-इतरभेद-वती'त्यनुमितिः, अथ च 'इतरभेदाऽभावव्यापकीभूताऽभावप्रतियोगी गन्ध' इतिव्यतिरेक-व्याप्तिज्ञानं च सम्पद्यते इति संक्षेपः॥ मूले--यदितरेभ्य इति। यथा जलमिति-व्यतिरेकि-दृष्टान्तम्। यत्=जलादिकम्, इतरेभ्यः=पृथिवीतरजलादिभ्यो न भिद्यते तत्=जलादिकं न गन्धवदिति॥ न चेयं तथेति। इयं=पृथिवी, न तथा=न गन्धाऽभाववतीत्यर्थः, न इतरभेदाऽभावव्यापकगन्धाभाववतीति यावत्, किन्तु गन्धवती॥ तस्मान्न तथेति। तस्मात् =पृथिवीतरभेदाभावव्यापकाऽभावप्रतियोगिगन्धात्। न तथा=नेतरभेदाऽभाववती अपि तु इतरभेदवतीत्येव॥

## सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः॥

(न्या०) पक्षलक्षणमाह—सन्दिग्धेति। साध्यप्रकारकसंदेह-विशेष्यत्वं पक्षत्वम्। सन्देहश्च—'पर्वतो वह्निमान्नवे'त्याकारकः। इदं च लक्षणमनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रायेण प्राचीनैः कृतम्। गगनविशेष्यकमेघप्रकारक-'गगनं-मेघवन्नवे'ति-सन्देहाभावदशा-यामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघवदि'-त्याकारि-काया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनु-मितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम्॥

(प०) अथ पृथिवीमात्रस्य पक्षत्वादित्यत्र किं नाम पक्षतेत्यपेक्षायां तां निर्वक्ति—सन्दिग्धेति। सपक्षवारणाय—सन्दिग्धेति॥ साध्यवारणाय-साध्यवानिति॥

(दी०) पक्षलक्षणमाह—सन्दिग्धेति। ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात्। किञ्च—प्रत्यक्षेऽपि वह्नौ यत्रेच्छयानुमितिः, तत्राव्याप्तिरिति चेत्! न, उक्तपक्षताश्रयत्वस्य पक्ष-लक्षणत्वात्॥

---

(कि०) मूले-सन्दिग्धसाध्यवानिति। 'पर्वतो वह्निमान्न वे'ति संशयात्मकज्ञाने वह्निः प्रकारः, पर्वतो विशेष्यः, अतः प्रकारताख्यविषयतासम्बन्धेन संशयात्मकज्ञानं वह्नौ वर्तते, विशेष्यताख्यविषयतासम्बन्धेन तु पर्वते वर्तते, तथा च—विशेष्यताऽऽख्यविषयतासम्बन्धेन साध्यप्रकारकसंशयविशिष्टत्वं'—पक्षत्वमिति पर्यवसन्नम्। दीपिकायां—नन्विति। धर्मज्ञान-वैराग्यभक्तिसम्पन्नो ब्रह्मजिज्ञासुः शुश्रूषया गुरुमासाद्य गुरूपदिष्ट 'यतो वा इमानि भूतानि

जायन्ते' 'स ऐक्षत' 'द्यावाभूमी जनयन् देव एकः'इत्यादिवेदवाक्यकृतश्रवणस्ततः स्वयमेव सयुक्तिकमनुमिनोति–"क्षित्यंकुरादिकं–सकर्तृकं–कार्यत्वात्,–घटवदि'ति । तथा च वेदवाक्येनैव परमात्मनि क्षित्यंकुरादिकर्तृत्वनिश्चयात् 'क्षित्यंकुरादिकं सकर्तृकं नवे'तिसन्देहाऽभावात् पक्षता-लक्षणं तत्राऽव्याप्तं, सुतरां जायमानाऽनुमित्यनुपपत्तिश्च ॥ किञ्च–'प्रत्यक्षपरिकलितमप्यर्थमनु-मानेन बुभुत्सन्ते तर्करसिका'इतिवाचस्पतिवचनात् चाक्षुषप्रत्यक्षेऽपि महानसीयादिवह्नौ 'महानसे वह्निमनुमिनुयामि'तिसिषाधयिषया 'महानसं–वह्निमत्–धूमादि'त्यनुमितिः सम्पाद्यते, तत्राऽपि प्रत्यक्षेण महानसे वह्नेर्निश्चितत्वेन पक्षे महानसे पक्षतालक्षणस्याऽव्याप्तिश्चेत्याशंक्य–उत्तरयति–उक्तपक्षतेति । सिषाधयिषाविरहविशिष्टसिद्ध्यभाव'रूपपक्षताश्रयत्वस्य पक्षतालक्षणत्वादित्यर्थः । तथा च 'महानसे वह्निमनुमिनुयामि'त्याकारकसिषाधयिषाविरहविशिष्टा या ( देशान्तरीयकाला-न्तरीया ) सिद्धिस्तदभावस्य तत्र सत्त्वात् पक्षतासत्त्वेनाऽनुमितिर्भवतीति । एवं–'क्षित्यंकुरादिकं–सकर्तृकं' इत्यत्राऽपि सिषाधयिषाविरहविशिष्टसिद्ध्यभावसत्त्वेन भवत्यनुमितिरिति बोध्यम् ॥

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ॥**

( न्या० ) सपक्षलक्षणमाह––निश्चितेति । साध्यप्रकारकनिश्चय-विशेष्यत्वं सपक्षत्वम्, निश्चयश्च–'महानसं वह्निमदि'त्याकारकः ।

( प० ) निश्चितेति । पक्षेऽतिव्याप्तिवारणाय–निश्चितेति । साध्यवारणाय–साध्यवानिति ॥ तत्रैवेति । धूमवत्त्वे हेतावेवेत्यर्थः ।

(दी०) सपक्षलक्षणमाह––निश्चितेति ॥

(कि०) मूले निश्चितसाध्यवान् सपक्ष इति । 'महानसं वह्निमदि'तिनिश्चयात्मकज्ञाने वह्निः प्रकारः, पर्वतो विशेष्यः, तथा च–'विशेष्यताख्यविषयतासम्बन्धेन साध्यप्रकारकनिश्चय-विशिष्टः–सपक्षः–इति लक्षणार्थः ॥ लक्ष्यं दर्शयति–यथा तत्रैवेति । तत्र=धूमवत्त्वेहेतौ महान-सम्=धूमात्मकहेत्वधिकरणीभूतं महानसमेव सपक्ष इत्यर्थः ॥ तेन हेतोः पक्षसत्त्वमाविष्कृतम् ॥

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ॥**

( न्या० ) विपक्षलक्षणमाह––निश्चितसाध्याभावेति । साध्या-भावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम्, निश्चयश्च––'ह्रदो वह्न्यभाव-वानि'त्याकारकः ।

( प० ) निश्चितेति । (१) सपक्षेऽतिव्याप्तिवारणाय–साध्येति । पक्षेऽति-व्याप्तिवारणाय–निश्चितेति । सपक्षेऽतिव्याप्तिवारणाय–अभावेति ॥ तत्रैव ॥ धूमवत्त्वे एव ॥

(१) 'साध्य'पदानुपादाने निश्चिताऽभावपदेन वह्न्यात्मक–वह्न्यभावाभावमादाय घटाभावमादाय

(दी०) विपक्षलक्षणमाह—निश्चितेति ॥

(कि०) मूले-निश्चितेति । निश्चितो यः साध्याभावस्तद्वान्='विशेष्यताख्यविषयता-सम्बन्धेन साध्याभावप्रकारकनिश्चयविशिष्टो विपक्ष' इति लक्षणार्थः फलितः । तत्र=धूमवत्त्वे हेतौ । धूमात्मकहेत्वनधिकरणीभूतो जलह्रदो विपक्ष इति ॥ तेन हेतोर्विपक्षाऽसत्त्वमाविष्कृतम् ॥

**सव्यभिचार-विरुद्ध-सत्प्रतिपक्षा—ऽसिद्ध-बाधिताः पञ्च हेत्वाभासाः ॥**

(न्या०) एवं सद्धेतुन्निरूप्य हेत्वाभासान्निरूपयति—सव्य-भिचारेति। हेतुवदाभासन्त इति हेत्वाभासाः, दुष्टहेतव इत्यर्थः। दोषाश्च—व्यभिचार—विरोध—सत्प्रतिपक्षा—ऽसिद्धि—बाधाः । एकज्ञान-विषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः। (१) यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिवन्धकत्वं-तत्त्वं दोषसामान्यस्य लक्षणम्। हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा। अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः। सव्यभिचारं विभज्य दर्शयति—साधारणेति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्य-लक्षणम्। साधारणत्वं च साध्याभाववद्वृत्तित्वम्। पर्वतो—वह्निमान्, प्रमेयत्वादि'त्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

---

च महानसेऽतिव्याप्तिर्बोध्या ॥ पक्षेऽतिव्याप्तीति । 'निश्चित'पदानुपादाने 'साध्याभाव'पदेन 'वह्निमान्नवे'तिसन्देहान्तर्गतवह्न्यभावकोटिमादाय तद्वत्त्वस्य पक्षे सत्त्वात् पक्षेऽतिव्याप्तिर्बोध्या

(१)यत्पदेन दोषा ग्राह्याः, दोषविषयकत्वेन दोषज्ञानस्य अनुमितिं-प्रति तत्कारणपरामर्शं प्रति च प्रतिबन्धकत्वं भवति, तत्त्वम्=दोषत्वमिति ॥ दोषविषयके ज्ञाने दोषविषयकत्वधर्मो वर्तते 'ज्ञानस्ये'त्यत्र षष्ठ्यर्थस्य वृत्तित्वस्य दोषविषयकत्वेऽन्वयः। ज्ञानं च अनाहार्याऽप्रामाण्यज्ञानाऽ-नास्कन्दितनिश्चयात्मकं ग्राह्यम्, 'यद्विषयकत्वेने'ति तृतीयाया अवच्छिन्नत्वमर्थः, स च प्रतिबन्ध-कतायामन्वेति। तथा च—अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्तियद्विषयकत्वावच्छिन्ना प्रकृताऽनुमिति—तत्कारणान्यतरप्रतिबन्धकता तत्त्वं दोषसामान्यलक्षणमिति—निष्कृष्टोऽर्थः ॥ स्वविरोधिधर्म—धर्मितावच्छेदकक—स्वप्रकारकं, बाधकालीनेच्छाजन्यं,—वा ज्ञानं आहार्यम्, यथा—'घटाभाववद्भूतलं घटवत्' इति ज्ञानम्, 'वन्ह्यभाववान् पर्वतो वन्हिमान्, वन्ह्यभाववद्ध्रदो

( प० ) हेतुन्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—सव्यभिचारेति । अत्रेदं बोध्यम् –अन्वयव्यतिरेकिलिङ्गं तु पञ्चरूपोपपन्नं सत् स्वसाध्यं साधयितुं क्षमते, तानि कानीति चेच्छ्रूयताम् । पक्षधर्मत्वं, सपक्षसत्त्वं, विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम् । एवं यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षइत्युच्यते, स नास्ति यस्य सोऽसत्प्रतिपक्षः, तस्य भावस्तत्त्वमिति बोध्यम् । केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते, तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् । केवलव्यतिरेक्यपि तथा, तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययादिति । उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात् हेतुवदाभासन्ते इति हेत्वाभासाः, तत्त्वं (१)चानुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् बाधस्थले –'वह्निरनुष्ण' इत्यनुमितिप्रतिबन्धकं । यज्ज्ञानम्—उष्णत्ववद्वह्नावनुष्णत्वसाधकं द्रव्यत्वमि'त्याकारकं तद्विषयत्वस्य स्वरूपसम्बन्धेन द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः । सद्धेतुवारणाय ( २ ) यथार्थेति । घटादिवारणाय—अनुमितित्करणान्यतरप्रतिबन्धकेति । व्यभिचारिणि अव्याप्तिवारणाय—तत्करणान्यतरेति ।

(दी०) एवं सद्धेतून् निरूप्य असद्धेतून् निरूपयितुं विभजते—सव्यभिचारेति

---

( कि० ) एवं सद्धेतुन्निरूप्येति । सद्धेतुनिरूपणानन्तरमसद्धेतोः स्मरणात् तन्निरूपणे 'स्मृतस्योपेक्षाऽनर्हत्व'रूपा प्रसङ्गसङ्गतिर्दर्शिता, स्व (हेतु) निष्ठव्याप्तिपक्षधर्मताविरहवत्त्वसम्बन्धेन

---

वह्निमान्' इत्यादिकम् "ह्रदो वह्न्यभाववान्-इति ज्ञानं अप्रमा"—इत्यप्रामाण्यनिश्चयाऽऽस्कन्दितं-'ह्रदो वह्न्यभाववानि'ति ज्ञानम्, तच्च कस्यापि न प्रतिबन्धकम् भवतीत्यतः–अनाहार्यं अप्रामाण्यज्ञानाऽनास्कन्दितं च ज्ञानमुक्तमिति ॥ 'वायुः–गन्धवान्–स्नेहात्' इत्यत्र पञ्चदोषाणां वर्तमानत्वात्, तत्स्थलाभिप्रायेण समान्यलक्षणमुक्तमिति ॥ समन्वयप्रकारस्तु विस्तरेण किरणावल्यां द्रष्टव्यः ॥

( १ ) दीपिकाकिरणावल्यामस्य व्याख्याऽवगन्तव्या ॥

( २ ) 'पर्वतो–वह्निमान्–धूमादि'त्यत्र धूमे वह्न्यभाववद्वृत्तित्वप्रकारकभ्रमकाले व्याप्तिज्ञानानुत्पादात् तादृशभ्रमविषयत्वस्य च सत्त्वेन तत्राऽतिव्याप्तिः स्यात्, तद्वारणाय–यथार्थेति ॥ 'अयं घट' इतिज्ञानविषयत्वस्य घटे सत्त्वात् घटेऽपि दोषलक्षणस्याऽतिव्याप्तिः ॥ 'पर्वतो-धूमवान्–वह्ने'रित्यत्र 'धूमाभाववद्वृत्तिर्वह्नि'रितिव्यभिचारदोषज्ञानस्य 'धूमाभाववद्वृत्तिर्वह्नि'रित्याकारकव्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वात्, नत्वनुमितिं प्रत्यपि, तत्र व्यभिचारे 'अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्याऽव्याप्तिः स्यात् इति भावः ॥

अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम् ॥

---

दुष्टहेतोः स्मरणं बोध्यम्, 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमि'तिनियमात् ॥ सद्धेतवः= व्याप्त्यादिविशिष्टहेतवः । ते च केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन निरूपिताः ॥ तत्राऽन्वयव्यतिरेकिहेतुः पञ्चरूपोपपन्नः सन् स्वसाध्यं साधयितुं क्षमः । पञ्चरूपाणि-'पक्षसत्त्व-सपक्षसत्त्व-विपक्षाऽसत्त्वा-ऽबाधितत्वा ऽसत्प्रतिपक्षितत्वात्मकानि । तानि धूमे विद्यन्ते । केवला-न्वयिहेतुस्तु चतूरूपोपपन्न एव स्वसाध्यं साधयति, तस्य विपक्षाऽप्रसिद्धेः, विपक्षाऽसत्त्वमप्य-प्रसिद्धमिति 'घटो-ऽभिधेयः-प्रमेयत्वा'दित्यत्र 'प्रमेयत्व'हेतोर्विपक्षविरहात् विपक्षाऽसत्त्वमप्रसिद्ध-मिति । केवलव्यतिरेकिहेतुरपि चतूरूपोपपन्न एव स्वसाध्यं साधयति, तस्य सपक्षाऽप्रसिद्धेः सपक्षसत्त्वमप्यप्रसिद्धमिति । एतत्पञ्चरूपाणां मध्यत-एकेन द्वाभ्यां त्रिभिर्वोपपन्नत्वेन ये हेतुव-दाभासन्ते ते हेत्वाभासा इति कथ्यन्ते । ते च-सव्यभिचारो विरुद्धः सत्प्रतिपक्षितोऽसिद्धो बाधितश्चेति पञ्च । दोषा अपि 'व्यभिचार-विरोध-सत्प्रतिपक्षा ऽसिद्धि-बाधाः पञ्च । तैर्दोषैर्विशिष्टा दुष्टा हेतवः । दोषाणां सामान्यलक्षणेऽभिहिते सति 'दोषवत्त्व'रूप-दुष्टलक्षणस्य सुतरां लाभ-इत्याशयेन दोषाणां सामान्यलक्षणं दर्शयति-'अनुमितीति । हेत्वाभासत्वमित्यस्य-हेतोराभासा हेत्वाभासाः-हेतुनिष्ठा दोषाः, तेषां भाव इत्यर्थः ॥ लक्षणसमन्वयो यथा-"पर्वतो-वह्निमान्-धूमात्,-पर्वतो-वह्न्यभाववान्-जलादि'ति सत्प्रतिपक्षस्थले-'साध्याभावव्याप्यवान् पक्ष'इति-दोषज्ञानेन 'साध्यवान् पक्ष'इत्याकारकानुमितिप्रतिबन्धो भवति, अतस्तादृश्यानुमितिप्रतिबन्धकं यथार्थज्ञानं 'साध्याभावव्याप्यवान् पक्ष'इत्याकारकं, तद्विषयत्वं-'साध्याभावव्याप्यवान् पक्ष' इत्याकारके दोषे-इति लक्षणसमन्वयः । स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तादृशदोषवत्त्वेन दुष्टत्वं जलादेः' । तथाहि-'स्वं सत्प्रतिपक्षो दोषः-साध्याऽभावव्याप्यवान् पक्ष-इत्याकारकस्तद्विषयकं ज्ञानमपि-'साध्याभावव्याप्यवान् पक्ष'-इत्याकारकं तद्विषयप्रकृतहेतु-तावच्छेदकवत्त्वं-वह्न्यभावव्याप्ये जले, तस्य वह्न्यभावाभाव( वह्नि )व्याप्ये धूमे सत्त्वेऽपि धूमस्य न दुष्टत्वम्, यावत्कालं दोषज्ञानं तावत्कालम् परस्परानुमितिप्रतिबन्ध-इति फलम् ॥ एवं 'ह्रदो-वह्निमान्-धूमादि'ति बाधस्थले 'ह्रदो वह्न्यभाववान्' इति दोषज्ञानेन 'ह्रदो वह्निमान्' इत्यनुमितिप्रतिबन्धो भवति, अतस्तादृशानुमितिप्रतिबन्धकं यथार्थज्ञानं-'वह्न्यभाववान् ह्रद' इत्याकारकं तद्विषयत्वं 'वह्न्यभाववद्ध्रद'इत्याकारके दोषे, स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छे-दकवत्त्वसम्बन्धेन तादृशदोषवत्त्वं हेतौ दुष्टत्वम् । स्वं-'वह्न्यभाववान् ह्रद' इतिदोषः, तद्विषयकं ज्ञानम्/'वह्न्यभाववान् ह्रदो धूमश्चे'तिसमूहालम्बनं ज्ञानं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं धूमे-इति कृत्वा धूमस्य दुष्टत्वम्, ( यत्र दोषशरीरे हेतुर्न भासते तत्र दोषविषयकं ज्ञानं-हेतुमन्तर्भाव्य समूहालम्बनं ग्राह्यं, तथाकरणेनैव हेतौ दोषवत्तासम्पादनमिति ध्येयम् ) ॥ ननु सव्यभिचारदोषो व्याप्तिज्ञानप्रतिबन्धको न-त्वनुमितिप्रतिबन्धकः, एवं विरोधदोषः परामर्श-प्रतिबन्धकः, असिद्धिरपि परामर्शप्रतिबन्धिका, न त्वनुमितेः, तत्रैतल्लक्षणस्याऽव्याप्तिः 'स्यादिति चेन्न,—तद्वारणाय—'अनुमिति'पदमजहत्स्वार्थलक्षणया—'अनुमितितत्कारणान्यतर'परम्' तेन 'अनुमिति-तत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्व'मिति लक्षणमास्थेयम् । समन्वयस्तु-

त्रिविधसव्यभिचारमध्ये **'साधारण'व्यभिचारस्थले** 'पर्वतो-वह्निमान्-प्रमेयत्वा'दित्यत्र 'साध्याभाववद्वृत्तिर्हेतु'रिति दोषः, तादृशदोषविषयकं यद्'वह्न्यभाववद्वृत्ति प्रमेयत्व'मित्याकारकं ज्ञानं, तद्-'वह्न्यभाववद्वृत्तिप्रमेयत्ववान् पक्ष' इत्याकारकपरामर्शप्रतिबन्धकं भवति, अतः-अनुमितिकारणस्य विरोधियथार्थज्ञानं-तादृशदोषज्ञानं तद्विषयत्वं 'वह्न्यभाववद्वृत्ति प्रमेयत्व'-मित्याकारके दोषे, दोषत्वं-स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन प्रमेयत्वे वर्तते, स्वं-वह्न्यभाववद्वृत्तिप्रमेयत्व'मिति दोषः, तद्विषयकं ज्ञानमपि-'वह्न्यभाववद्वृत्तिप्रमेयत्व' मित्याकारकं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं प्रमेयत्वे-इति प्रमेयत्वं-साधारणव्यभिचारि ॥ **असाधारणव्यभिचारस्थले** 'शब्दः-नित्यः शब्दत्वा'दित्यत्र 'साध्याऽसमानाधिकरणो हेतु'रिति दोषः, तद्विषयकं ज्ञानं 'नित्यत्वाऽसमानाधिकरणशब्दत्व'मित्याकारकम्, तत्-नित्यत्व-समानाधिकरणशब्दत्व'विषयकपरामर्शं प्रतिबध्नाति, अतः--अनुमितिकारणपरामर्श-प्रतिबन्धकं यद्दोषज्ञानं 'साध्याऽसमानाधिकरणो हेतु'रिति, तद्विषयत्वं 'साध्याऽसमानाधिकरणो हेतु'रिति दोषे । दोषवत्त्वं पूर्वोक्तसम्बन्धेन-शब्दत्वे । स्वं='साध्याऽसमानाधिकरणो हेतु'रितिदोषः, तद्विषयकं ज्ञानमपि 'साध्यासमानाधिकरणो हेतु'रित्याकारकं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं शब्दत्वे-इति ॥ **अनुपसंहारिस्थले**-'सर्वं-अभिधेयं-प्रमेयत्वा'दित्यत्र 'अत्यन्ताभावाऽप्रति-योगिसाध्यकादि'रितिदोषः । आदिपदेन पक्षो हेतुश्च ग्राह्यः । तादृशदोषविषयकं-'अत्यन्ताभावाऽ-प्रतियोगिसाध्यम्' इतिज्ञानं तत्, साध्याभावव्यापकीभूताभावप्रतियोगिहेतुमान् पक्ष' इति व्यतिरेकपरामर्शज्ञानं प्रतिबध्नाति, अतोऽनुमितिकारणव्यतिरेकपरामर्शज्ञानस्य प्रतिबन्धकं यत् तादृशदोषविषयकं 'अत्यन्ताभावाऽप्रतियोगिसाध्यं' इतिज्ञानं, तद्विषयत्वं हेतौ स्वविषयकज्ञान-विषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं-दोषः, तद्विषयकं ज्ञानं-'अत्यन्ताभावाऽप्रतियोगि-साध्यकादिरित्याकारकं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं हेतावितिः हेतुर्दुष्टः ॥ **असिद्धि-स्त्रिधा** । तत्र-"'**आश्रयाऽसिद्धिस्थले**-'गगनारविन्दं--सुरभि,-अरविन्दत्वात्, इत्यत्र 'पक्षता-वच्छेदकाभाववान् पक्ष'इति दोषः तद्विषयकं 'गगनीयत्वाभाववदरविन्द'मिति ज्ञानं 'गगनारविन्दं सुरभी'त्यनुमितिं प्रतिबध्नाति 'सुरभिव्याप्याऽरविन्दत्ववद्गगनारविन्द'मितिपरामर्शं प्रतिबध्ना-नीत्यपि मतान्तरम्, अतोऽनुमितेः प्रतिबन्धकं यत् तादृशदोषविषयकं 'गगनीयत्वाभाववदर-विन्द'मितिज्ञानं तद्विषयत्वं हेतौ 'स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं-'गगनीयत्वाभाववदरविन्द'मिति दोषः, तद्विषयकं 'गगनीयत्वाभाववदरविन्दमरविन्दत्वं चे'ति समूहालम्बनात्मकं ज्ञानं तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं अरविन्दत्वे इति ॥ **स्वरूपासिद्धि-स्थले** 'शब्दो-गुणश्चाक्षुषत्वादि'त्यत्र 'हेत्वभाववान् पक्ष'इति दोषः, तद्विषयकं 'चाक्षुषत्वा-भाववान् शब्द' इति ज्ञानं 'गुणत्वव्याप्य-चाक्षुषत्ववच्छब्द' इतिपरामर्शं प्रतिबध्नाति, तादृश-परामर्शप्रतिबन्धकयथार्थज्ञानविषयत्वं दोषे, तादृशदोषवत्त्वं-स्वविषयकज्ञानविषयप्रकृतहेतुताव-च्छेदकवत्त्वसम्बन्धेन हेतौ, स्वं-'चाक्षुषत्वाभाववान्-शब्द' इति दोषः, तद्विषयकं ज्ञानं 'चाक्षुष-त्वाभाववान् शब्द'इत्याकारकं तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं चाक्षुषत्वे इति । **व्याप्यत्वाऽ-सिद्धिस्थले**-'पर्वतो-धूमवान् वह्ने'रित्यत्र 'सोपाधिको हेतु'रिति दोषः । हेतौ-उपाधिमत्त्वं-स्वव्यभिचारित्वसम्बन्धेन बोध्यम्, तत्रोपाधिना हेतौ 'साध्याभाववद्वृत्ति'रितिव्यभिचार उद्भाव्यते, व्यभिचारज्ञानेन च 'साध्याभाववद्वृत्ति'रिति व्याप्तिज्ञानप्रतिबन्धो भवति । तादृशव्य-

भिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकयथार्थज्ञानं 'सोपाधिको हेतु'रिति, तद्विषयत्वं दोषे । दोषवत्त्वं च स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन हेतौ, स्वं–'सोपाधिको हेतु'रितिदोषः, तद्विषयकं 'सपाधिको हेतु'रितिज्ञानम्, तद्विषयत्वं हेताविति ॥ विरोधस्थले–'शब्दः–नित्यः–कृतकत्वा'दित्यत्र 'साध्याभावव्याप्तो हेतु'रिति दोषः, तद्विषयकं 'साध्याभावव्याप्तो हेतु'रिति ज्ञानं 'साध्यव्याप्यहेतुमान् पक्ष' इतिपरामर्शं प्रतिबध्नाति । तादृशपरामर्शप्रतिबन्धकयथार्थज्ञान-विषयत्वं दोषे । दोषवत्त्वं–स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन हेतौ । 'स्वं-'साध्याभावव्याप्तो हेतु'रिति दोषः, तद्विषयकं तत्समानाकारकमेव ज्ञानम् । तद्विषयप्रकृतहेतुताव-च्छेदकवत्त्वं कृतकत्वे इतिरीत्याऽन्यत्राऽपि सङ्गमनीयम् ॥ अत्र 'पर्वतो वह्निमान्' इत्यनुमितिं प्रति 'पर्वतो निर्वह्नि'रितिबाधभ्रमस्य प्रतिबन्धकत्वात् तादृशबाधभ्रमविषय–वह्न्यभावेऽतिव्याप्ति-वारणाय–यथार्थेति । तच्च भ्रमभिन्नेत्यर्थकम् ॥ तथापि 'वह्न्यभाववान् ह्रद'इति बाधदोषैकदेशे-वह्न्यभावे 'वह्न्यभाववान् ह्रद'इत्याकारकज्ञानविषयत्वसत्त्वेनाऽतिव्याप्तिवारणाय–'यद्रूपावच्छि-न्नविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपवत्त्वं वक्तव्यम् । वह्न्यभावत्वावच्छि-न्नविषयकनिश्चयत्वं नाऽनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तीति–यद्रूपपदेन वह्न्यभावत्वस्य धर्तु-मशक्यत्वान्नातिव्याप्तिः । 'यद्रूपावच्छिन्नविषयकाऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्च-यत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वं दोषत्वमिति फलितार्थः ॥

**सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणा-ऽसाधारणा-ऽनुपसंहारि-भेदात् ।**

(दी०) सव्यभिचारं विभजते—स त्रिविध इति ॥

---

( कि०.) मूले सव्यभिचारोऽनैकान्तिक इति । 'एकः=साध्यमेव–अन्तः=निया-मकः=नियमस्य व्याप्त्यात्मकस्य निरूपको यस्य सः एकान्तः, स एव ऐकान्तः, स्वार्थे ठक्, साध्यनिरूपितव्याप्तिमानित्यर्थः, न ऐकान्तिक इत्यनैकान्तिकः, साध्यनिरूपितव्याप्तिग्रहप्रतिबन्ध-कग्रहविषयविशिष्ट इत्यर्थः, व्यभिचारीति यावत् । तस्य 'साधारणाद्यन्यतमत्वं'–लक्षणं बोध्यम् ॥

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा—'पर्वतो–वह्निमान्–प्रमेयत्वा'दिति । प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ॥**

(प०) तत्रेति—साधारणादित्रितयमध्य इत्यर्थः । अथ(१)विरुद्धेऽतिप्रसक्ति-रिति साम्य दूष्यः, सपक्षवृत्तित्वस्यापि निवेशात् । अथैवमपि स्वरूपासिद्धे दूषण-जागर्तीति मा वद गर्वम्, पक्षवृत्तित्वस्यापि तथात्वात् ॥

(दी०) साधारणं लक्षयति–तत्रेति । उदाहरति–यथेति ॥

(कि०) मूले तत्रेति । साधारणादिषु मध्ये इत्यर्थः ॥ साध्यस्याऽभाववति वृत्तिर्यस्य सः, 'सपक्षवृत्तित्वविशिष्टसाध्याभाववद्वृत्तिः'–साधारण इति फलितोऽर्थः ॥ यथेति । पर्वतः= पक्षः । वह्निः=संयोगेन साध्यम् । स्वरूपसम्बन्धेन प्रमाविषयत्वात्मकं प्रमेयत्वं हेतुः ॥ तत्र संयोगेन साध्यस्य=वह्नेः अभाववति जलह्रदादौ प्रमेयत्वात्मको हेतुर्वर्तते–इति प्रमेयत्वं साधारणव्यभिचारविशिष्टम् ॥ दोषविशिष्टत्वं, प्रतिबध्यप्रतिबन्धकभावश्च पूर्वं दर्शितौ ॥

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा— 'शब्दो–नित्यः–शब्दत्वादिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ॥

(न्या०) असाधारण इति । सर्वसपक्षव्यावृत्तत्वं = निश्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च = साध्यासामानाधिकरण्यम् । हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

(प०) पक्षमात्रेति । सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति सर्वसपक्षविपक्षव्यावृत्तः । (२) केवलव्यतिरेकिवारणाय तद्भिन्न इत्यपि देयम् ॥

(१) 'शब्दः–नित्यः–कृतकत्वा'दिति विरुद्धे कार्यत्वे हेतौ नित्यत्वाभाववति अनित्ये वर्तमानत्वादतिव्याप्तिर्बोध्या । 'सपक्षवृत्तित्वे सती'त्युपादाने तु निश्चितसाध्यवति=निश्चितनित्यत्ववति परमाण्वादौ कृतकत्वस्याऽसत्त्वात् वारणं बोध्यम् ॥ नन्वेवमपि–'शब्दः–गुणः–चाक्षुषत्वात्–रूपवत्' इति स्वरूपाऽसिद्धे चाक्षुषत्वेऽतिव्याप्तिः, चाक्षुषत्वस्य गुणत्वात्मक–निश्चितसाध्यवति रूपे सपक्षे,–अथ च साध्याभाववति रूपत्वजातौ सत्त्वात् ॥ 'पक्षवृत्तित्वे सती'त्युपादाने तु पक्षे-शब्दे चाक्षुषत्वस्याऽसत्त्वात् वारणमिति भावः ॥ तथा च पक्षवृत्तित्वे सति सपक्षवृत्तित्वे च सति साध्याऽभाववद्वृत्तित्वम् साधारणत्वं बोध्यम् ॥

(२) 'पृथिवी–इतरभिन्ना–गन्धात्' इत्यत्र गन्धे सर्वविपक्षजलादिव्यावृत्तत्वस्य सत्त्वेऽपि सपक्षस्याऽप्रसिद्धत्वात् सपक्षव्यावृत्तत्वं गन्धेऽप्रसिद्धम्, इति तत एवाऽतिव्याप्त्यसंभवे केवलव्यतिरेकिण्यतिव्याप्तिदानमेवाऽनुचितं, इति तद्भिन्नत्वनिवेशस्तु सुतरां अनुचित इति सुधिभिर्विभावनीयम् ॥

(दी०) असाधारणं लक्षयति—सर्वेति । ॥

(कि०) मूले-सर्वसपक्षेति । सर्वेभ्यः सपक्षेभ्यो विपक्षेभ्यश्च व्यावृत्तः पक्षमात्रवृत्ति-श्चेति-विग्रहः ॥ शब्दः=पक्षः ॥ नित्यत्वं स्वरूपसम्बन्धेन साध्यम्, तच्च ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम् । शब्दत्वादिति जातिः-समवायेन हेतुः । नित्येभ्यः=नित्यत्व-धर्मवत्परमाण्वादिसपक्षेभ्यः ; अनित्येभ्यः=नित्यत्वाभाववद्घटादिविपक्षेभ्यः व्यावृत्तं= तदवृत्ति शब्दमात्रवृत्ति=शब्दे पक्षमात्रे वर्तते इत्यर्थः । निश्चितसाध्यवद्वृत्तित्वाऽभाववत्त्वे सति निश्चितसाध्याऽभाववद्वृत्तित्वाऽभाववानिति लक्षणं बोध्यम्, समन्वयस्तु पूर्वं दर्शित एव तथा च अन्वयव्यतिरेकव्याप्तिशून्यत्वे सति पक्षमात्रवृत्तित्वं असाधारणत्वमिति फलितार्थः ॥

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा-सर्वम्-अनित्यं-प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति ॥**

( न्या० ) अनुपसंहारिणं लक्षयति—अन्वयेति । उभयविधदृष्टा-न्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री (१) नास्तीत्यर्थः। सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः ॥ किञ्चिद्विशेष्यकनिश्च-याऽविषयसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाऽविषयसाध्याभाव-कत्वमेवाऽनुपसंहारित्वम्, एतदीयज्ञानस्य व्याप्तिसंशयजननद्वारा व्याप्ति-ज्ञानप्रतिबन्धः—फलम् । वस्तुतस्तु अत्यन्ताभावाऽप्रतियोगिसाध्यादिक-मेवाऽनुपसंहारित्वमिति बोध्यम् ।

( प० ) अन्वयेति । केवलान्वयिन्यतिव्याप्तिवारणाय-अन्वयेति । केवल-व्यतिरेकिण्यतिव्याप्तिवारणाय-व्यतिरेकेति । अत्रेति । उपदर्शितानुमान इत्यर्थः ॥

(दी०) अनुपसंहारिणो लक्षणमाह—अन्वयेति ॥

(कि०) मूले अन्वयेति । अन्वयदृष्टान्तरहितो व्यतिरेकदृष्टान्तरहितश्चेत्यर्थः । सर्वं= पक्षः । अनित्यत्वं-स्वरूपसम्बन्धेन साध्यम् । तच्च ध्वंसप्रागभावाऽन्यतरप्रतियोगित्वरूपम् । प्रमेयत्वादिति-ईश्वरप्रमाविषयत्वं-स्वरूपसम्बन्धेन हेतुः । सपक्षो विपक्षश्चात्र नास्ति, सर्वस्यैव पक्षत्वात्=सन्दिग्धसाध्यवत्त्वात् तथा च अन्वयव्याप्तिज्ञानस्य व्यतिरेकव्याप्तिग्रहस्य च सामग्री 'अन्वयव्यतिरेकसहचारादि'रूपा नास्तीतिभावः ॥ समन्वयस्तु पूर्वं दर्शितः ॥

(१) अन्वयव्याप्तिज्ञानस्य सामग्री अन्वयसहचारः, व्यतिरेकव्याप्तिज्ञानस्य सामग्री व्यतिरेक-सहचारः, स च सपक्षाऽप्रसिद्धेः विपक्षाऽप्रसिद्धेश्च नास्तीत्यर्थः ॥ यस्य धूमहेतोः सपक्षः विपक्षश्च प्रसिद्धः, तस्य महानसात्मकसपक्षविशेष्यकनिश्चयविषय—साध्यकत्वं जलह्रदात्मकविपक्षविशेष्यक-

साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा—'शब्दो-नित्यः-कृतकत्वादिति । कृतकत्वं हि नित्यत्वाऽभावेनाऽनित्यत्वेन व्याप्तम् ॥

(न्या०) विरुद्धं लक्षयति—साध्याभावव्याप्त इति ॥ (१) साध्याभावव्याप्तिः = साध्याभावनिरूपितव्यतिरेकव्याप्तिः = साध्यव्यापकीभूताभावप्रतियोगित्वम् । तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः ॥ साध्याभावव्याप्यप्रतिहेतुमान्पक्षः—सत्प्रतिपक्षः इति यावत् ॥ सत्प्रतिपक्षे द्वौ हेतू, विरुद्ध एको हेतुरिति भावः । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ॥

(प०) विरुद्धं लक्षयति—साध्येति । सद्धेतुवारणाय-साध्याभावव्याप्त इति, साध्येति, अभावेति च । असंभववारणाय—व्याप्तेति । सत्प्रतिपक्षवारणाय-सत्प्रतिपक्षभिन्न इत्यपि बोध्यम् । कृतेति । कार्यत्वादित्यर्थः । कृतकत्वमिति । अनित्यत्वेन व्याप्तमिति । यद्यत्कृतकं तत्तदनित्यमिति । व्याप्तिर्भवत्येव तथेति भावः ॥

(दी०) विरुद्धं लक्षयति—साध्येति ॥

---

(कि०) मूले—साध्याभावेति । साध्यस्याऽभावस्य व्याप्तिमानित्यर्थः । तथा च साध्याभावाऽभावघटिता या साध्याभावस्य व्यतिरेकव्याप्तिस्तद्वान्,—साध्यव्यापकीभूताभावप्रतियोगित्वं हेताविति फलितार्थः, समन्वयस्तु पूर्वमुक्तः ॥ शब्दः=पक्षः । नित्यत्वं=स्वरूपेण साध्यम् । कृतकत्वं=कार्यत्वं स्वरूपेण हेतुः ॥

निश्चयविषयसाध्याऽभावकत्वं च प्रसिद्ध्यति,–अनुपसंहारिणः प्रमेयत्वहेतोः सपक्षो विपक्षश्च न प्रसिद्धः, अतस्तत्र किञ्चित्सपक्षविशेष्यकनिश्चयाऽविषयसाध्यकत्वस्य किञ्चिद्विपक्षविशेष्यकनिश्चयाऽविषयसाध्याऽभावकत्वस्य च सत्त्वेन लक्षणसमन्वयः ॥ अत्र कुत्राऽपि साध्यनिश्चयस्य साध्याभावनिश्चयस्य चाऽप्रसिद्धेः प्रमेयत्वहेतौ 'प्रमेयत्वं अनित्यत्वाभाववदवृत्ति न वे'त्याकारकव्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिबन्धकोऽयंदोष इति बोध्यम् ॥

(१) अत्र दोषे साध्याभावनिरूपिता हेतुनिष्ठा अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च, तदाश्रयो हेतुः साध्याभावः–नित्यत्वाभावः, तन्निरूपिताऽन्वयव्याप्तिः–'यत्र यत्र कृतकत्वं तत्र तत्र नित्यत्वाभाव'–इति नित्यत्वाऽभावाऽभाववदवृत्तिकृतकत्वरूपा । एवं साध्याभावनिरूपिता हेतुनिष्ठा व्यतिरेकव्याप्तिः 'यत्र यत्र नित्यत्वाभावाभावः=नित्यत्वम् तत्र तत्र कृतकत्वाभाव' इति, तद्वत्त्वं विरुद्धहेतोः ॥

**यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः यथा—'शब्दो-नित्यः-श्रावणत्वाच्छब्दत्ववत् । 'शब्दो-ऽनित्यः-कार्यत्वाद्घटवदिति ॥**

( प० ) सत्प्रतिपक्षं लक्षयति—साध्येति । यस्य=हेतोः, साध्याभावसाधकं=साध्याभावस्यानुमापकं, हेत्वन्तरं=प्रतिपक्षो हेतुः, विद्यते—स हेतुः 'सत्प्रतिपक्ष' इत्यर्थः । अयमेव 'प्रकरणसम' इत्युच्यते । (१) विरुद्धवारणाय-हेत्वन्तरमिति । वह्न्यादिसाध्ये धूमस्य वारणाय-साध्येति, अभावेति च ॥

(दी०) सत्प्रतिपक्षं लक्षयति—यस्येति ।

---

(कि०) मूले—साध्याभावसाधकमिति । साध्यास्याऽभावस्तत्साधकं हेत्वन्तरं=प्रतिपक्षो हेतुर्यस्य सः ॥ शब्दः=पक्षः, नित्यत्वं=स्वरूपेण साध्यम्, श्रावणत्वात्=श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वादिति स्वरूपेण हेतुः । अनित्यत्वं स्वरूपेण साध्यम्, कार्यत्वं स्वरूपेण हेतुः, अत्र प्रथमं साध्यं नित्यत्वम्, तदभावः=अनित्यत्वं, तत्साधकं हेत्वन्तरं 'कार्यत्व'रूपं वर्तते यस्य=श्रावणत्वस्य, तत्=श्रावणत्वं सत्प्रतिपक्षितम् । एवम्—द्वितीयं साध्यम्=अनित्यत्वम्, तदभावो=नित्यत्वम्, तत्साधकं हेत्वन्तरं='श्रावणत्व'रूपं विद्यते यस्य=कार्यत्वस्य, तत्=कार्यत्वं सत्प्रतिपक्षितम् ॥ वह्न्यादिसाध्ये धूमस्य सत्प्रतिपक्षव्यवहारवारणाय—साध्याभावेति । विरुद्धवारणाय—हेत्वन्तरं यस्येति । समन्वयस्तु पूर्वं दर्शितः ॥

**असिद्धस्त्रिविधः-आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति ॥**

( प० ) असिद्धं विभजते—असिद्ध इति । आश्रयासिद्धाद्यन्यतमत्वमसिद्धत्वम् ॥

(दी०) असिद्धं विभजते—असिद्ध इति ॥

---

(कि०) मूले-असिद्धस्त्रिविध इति । आश्रयासिद्धाद्यन्यतमत्वम्-असिद्धत्वमिति लक्षणम् ॥ आश्रयाऽसिद्धिः=आश्रयेणाऽसिद्धिः, एवं स्वरूपेणाऽसिद्धिः=स्वरूपासिद्धिः, व्याप्यत्वेनाऽसिद्धिर्व्याप्यत्वासिद्धिरित्तिबोध्यम् ॥

---

( १ ) 'हेत्वन्तर'मित्यनुपादाने—'शब्दो-नित्यः—शब्दत्वादिति-विरुद्धस्थले यस्य=कृतकत्वहेतोः साध्याभावसाधकत्वं वर्तते, अतस्तत्र अतिव्याप्तिरिति । 'हेत्वन्तर'मित्युपादाने तु तद्वारणम् ॥ 'अभाव'पदानुपादाने 'पर्वतो-वह्निमान्-धूमात्, आलोकाद्वा, इत्यत्र यस्य=धूमस्य वह्निरूपसाध्यसाधकं हेत्वन्तरं आलोको विद्यते स धूमः सत्प्रतिपक्षितः स्यात् 'अभाव'पदोपादाने तु आलोको

आश्रयासिद्धो यथा—'गगनारविन्दं—सुरभि,—अरविन्दत्वात्, सरोजाऽरविन्दवदिति । अत्र गगनारविन्दमाश्रयः, स च नास्त्येव ॥

(न्या०) आश्रयासिद्ध इति । आश्रयासिद्धिर्नाम—पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः । यथेति । अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम् ॥

(प०) आश्रयासिद्धत्वं च—पक्षतावच्छेदकाभाववत्पक्षकत्वम् । भवति हि अरविन्दत्वे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वम्, अरविन्दरूपपक्षे गगनीयत्वविरहात् । ननु किमरविन्दे गगनीयत्वविरहोऽत आह—अत्रेति । उपदर्शितानुमान इत्यर्थः ।

(दी०) आश्रयासिद्धमुदाहरति—गगनेति ॥

---

(कि०) मूले—आश्रयासिद्ध इति । आश्रयाऽसिद्धिः—'पक्षे पक्षतावच्छेदकाऽभावः । यथा गगनारविन्दमिति । गगनवृत्तितावदरविन्दमित्यर्थः, अत्र पक्षे अरविन्दे, गगनवृत्तित्वं पक्षतावच्छेदकं नास्तीति—पक्षे पक्षतावच्छेदकाभाव एव दोषो बोध्यः ॥ सुरभिः=सुगन्धः समवायेन साध्यः । अरविन्दत्वं समवायेन हेतुः । आश्रयः=पक्ष इत्यर्थः । स च=गगनारविन्दात्मकः पक्षः, नास्तीति=गगनवृत्तितावत्त्वेन अरविन्दं नास्तीति । खपुष्पस्याऽलीकत्वादिति भावः । समन्वयस्तु पूर्वं दर्शितः ॥

स्वरूपासिद्धो यथा—'शब्दोऽनित्यश्चाक्षुषत्वात्, रूपवदिति । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ॥

(न्या०) स्वरूपासिद्ध इति । स्वरूपासिद्धिर्नाम—पक्षे हेत्वभावः । तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् ॥

(प०) पक्षे हेत्वभावः—स्वरूपासिद्धिः ।(१) सद्धेत्वभावेऽतिव्याप्तिवारणाय—पक्षे

---

न साध्याभावसाधक इति तद्वारणम् ॥ 'साध्य'पदाऽनुपादाने 'पर्वतो-वह्निमान् धूमात्,—वह्न्यभावाऽभाववान् वा आलोकात्, इत्यत्र—यस्य=धूमस्य अभावसाधकं=वह्न्यभावाऽभाव-साधकं हेत्वन्तरं=आलोको विद्यते सः धूमः सत्प्रतिपक्षितः स्यात्, तद्वारणाय—साध्येति, वह्न्यभावाभावस्तु न साध्याभावः, अतस्तद्वारणमिति ॥

(१) जलह्रदाद्यात्मके विपक्षे धूमात्मकसद्धेत्वभावमादाय धूमस्य पर्वतपक्षकस्थले स्वरूपाऽसिद्ध-

इति । घटाद्यभाववारणाय-हेत्विति । सोऽयं स्वरूपासिद्धः–शुद्धासिद्ध–भागासिद्ध-विशेषणासिद्ध-विशेष्यासिद्धभेदेन चतुर्विधः । तत्राद्यस्तु मूले एव प्रदर्शितः । द्वितीयो यथा–उद्भूतरूपादिचतुष्टयं गुणः, रूपत्वादि'त्यत्र रूपत्वहेतोः पक्षैकदेशा-वृत्तित्वेन तस्य भागे = पक्षैकदेशे स्वरूपासिद्धत्वम् ॥ तृतीयो यथा–'वायुः-प्रत्यक्षः, रूपवत्त्वे सति स्पर्शवत्त्वा' दित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्श-वत्त्वस्यापि अवृत्तित्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाऽभावे विशिष्ट-स्याप्यभावात् । (१) तुरीयो यथा –अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः, तस्य स्वरूपासिद्धत्वं तु विशेष्याभावप्रयुक्तविशिष्टाभावादिति बोध्यम् ॥

(दी०) स्वरूपासिद्धमुदाहरति—शब्द इति ॥

---

(कि०) मूले-स्वरूपासिद्ध इति । पक्षे हेत्वभाव इत्यर्थः । शब्दः=पक्षः । गुणत्वं=समवायेन साध्यम् । 'चाक्षुपत्वादि'ति—'चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं स्वरूपेण हेतुः । रूपम्=दृष्टान्तम् । समन्वयस्तु पूर्वं दर्शितः ॥ अयं स्वरूपाऽसिद्धः—शुद्धाऽसिद्धो भागासिद्धो विशेषणाऽसिद्धो विशेष्याऽसिद्धश्चेति भेदाच्चतुर्धा । तत्र–'शब्दो–गुणः—चाक्षुपत्वा'दिति—शुद्धासिद्धः । द्वितीयस्तु–घटपटादिकं–पृथिवी–घटत्वा'दिति । तत्र पक्षैकभागे पटे घटत्वस्या-ऽसिद्धिः । तृतीयो यथा–'वायुः—प्रत्यक्ष.–रूपवत्त्वे सति स्पर्शवत्त्वात्'अत्र वायौ 'रूपवत्त्वा'त्मक-विशेषणस्यासिद्धिः । चतुर्थो यथा–'वायुः–प्रत्यक्षः,–स्पर्शवत्त्वे सति रूपवत्त्वात्'अत्र–'रूपवत्त्वं' विशेष्यं वायावसिद्धम् ॥ सर्वत्र लक्षणनिर्माणे यदि लक्षणमव्याप्तिग्रस्तं तदा भागासिद्धेऽन्तर्भवति, यथा–गोः 'कपिलरूपवत्त्वम्' । अतिव्याप्तिग्रस्तं–व्याप्यत्वाऽसिद्धेऽन्तर्भवति । असंभवग्रस्तं–स्वरूपाऽसिद्धेऽन्तर्भवति । दोषत्रयरहितं लक्षणं सद्धेतुरिति भावः ॥

सोपाधिको हेतुर्व्याप्यत्वाऽसिद्धः । साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः । साध्यसमानाधिकरणाऽत्यन्ताऽभावा-ऽप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठाऽत्यन्ताऽभाव-प्रतियोगित्वं साधनाऽव्यापकत्वम् । यथा— पर्वतो धूमवान्-वह्नि-मत्त्वादि'त्यत्राऽऽर्द्रेन्धनसंयोग उपाधिः । तथाहि—'यत्र धूमस्त-त्राऽऽर्द्रेन्धनसंयोगः' इति साध्यव्यापकत्वम् , 'यत्र वह्निस्तत्राऽऽ-

त्वाऽऽपत्तिः, तद्वारणाय–'पक्षे'इति ॥ 'हेतु'पदाऽनुपादाने पर्वते पक्षे घटाभावमादाय-धूमस्य स्वरूपाऽसिद्धत्वाऽऽपत्तिः, तद्वारणाय हेत्विति ॥ 'अभाव'पदानुपादानेऽपि धूमस्य सत्प्रतिपक्षित-त्वापत्तिर्बोध्या ॥

(१) 'वायुः–प्रत्यक्षः– स्पर्शवत्त्वे सति रूपवत्त्वात् , इत्यत्रेति ।

र्द्रेन्धनसंयोगो नास्ति' अयोगोलके आर्द्रेन्धनसंयोगाऽभावादिति साधनाऽव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वाऽसिद्धम् ।

( न्या० ) व्याप्यत्वासिद्ध इति । प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्, तदेवं वह्नेरव्यापकत्वमार्द्रेन्धसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम्, तदेव व्यभिचरितत्वम् । तथा चोपाधिव्यभिचरितत्वं साधने वह्नौ गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधमव्यभिचारित्वं गृहीतमेव अनुमानप्रकारश्च— पूर्वानुमानहेतु वह्निं पक्षीकृत्य वह्निः—धूमव्यभिचारी—धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात —घटत्वादिवत्' । यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति । एवं प्रकारेण प्रकृतानुमानहेतुभूते अत्र तु पक्षीभूते वह्नौ साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च 'धूमाभाववद्वृत्तित्व'रूपधूमव्यभिचारे गृहीते, वह्नौ 'धूमाभाववद्वृत्तित्व'रूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

(प०) व्याप्यत्वासिद्धं निरूपयति—सोपाधिक इति । ननु कोऽयमुपाधिरत आह—साध्येति । 'साधनाव्यापक उपाधि'रित्युक्ते 'शब्दोऽनित्यः—कृतकत्वादि'त्यत्र 'सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्व'मप्युपाधिः स्यात्, ( द्व्यणुकमादाय तदव्यापकत्वात् ) तदर्थं—साध्यव्यापकत्वमुक्तम् । (१)तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने 'कृतकत्व'मुपाधिः स्यात्तदर्थं—साधनाव्यापकत्वमुक्तम् । उपाधिभेदमादायासम्भववारणाय-व्यापकत्वशरीरेऽप्यत्यन्तपदमुपात्तम् । साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकत्वशरीरेऽप्यत्यन्तपदमुपात्तम् । सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्य उपदर्शितः । एवं 'क्रत्वन्तर्वर्तिनी हिंसा—अधर्मजनिका,—हिंसात्वात, क्रतुबाह्यहिंसावदि'त्यत्र निषिद्धत्वमुपाधिः, तस्य 'यत्राऽधर्मजनकत्वं तत्र निषिद्धत्वमि'ति साध्यव्यापकता । यत्र हिंसात्वं तत्र न निषिद्धत्वमि'ति—निषिद्धत्वमुपाधिः—साधनाऽव्यापकः क्रतुहिंसायां

(१)'साध्यव्यापकत्व'मात्रस्य उपाधिलक्षणत्वे—'शब्दः—अनित्यः—सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्' इत्यत्र कृतकत्वे साध्यव्यापकत्वसत्त्वात् उपाधिः स्यादिति भावः ॥

निषिद्धत्वस्याभावात्, 'न हिंस्यात्सर्वा भूतानि' इति सामान्यवाक्यतः 'पशुना यजेत्' इत्यादिविशेषवाक्यस्य बलीयस्त्वात् । अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकमपि तु निषिद्धत्वमेवेत्यादिकमपि द्रष्टव्यम् । द्वितीयो यथा—'वायुः—प्रत्यक्षः—प्रत्यक्षस्पर्शाश्रयत्वादि'त्यत्रोद्भूतरूपवत्त्वमुपाधिः । तस्य 'यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमि'ति न केवलसाध्यव्यापकत्वं, रूपे व्यभिचारात्, किन्तु द्रव्यत्व-लक्षणो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मा-वच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय—बहिःपदम् । यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च वायौ, तत्रोद्भूत-रूपविरहात् । तृतीयो यथा—'ध्वंसो—विनाशी—जन्यत्वादि'त्यत्र भावत्वमुपाधि-स्तस्य 'यत्र विनाशित्वं तत्र भावत्वमि'ति न केवलसाध्यव्यापकत्वं, प्रागभावे भावत्वविरहात्, किन्तु जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्वमिति साधनावच्छिन्नसाध्यव्यापकत्वमेव । यत्र जन्यत्वं तत्र भावत्वमिति साधनाव्याप-कत्वं च ध्वंसे, तत्र भावत्वविरहात् । एवं 'स-श्यामो—मित्रातनयत्वादि' त्यत्र शाकपाकजन्यत्वमुपाधिः, श्यामत्वस्य नीलघटेऽपि सत्त्वान्न केवलसाध्यव्यापकत्वं, किन्तु साधनावच्छिन्नसाध्यव्यापकत्वमेव, अष्टमे पुत्रे शाकपाकजन्यत्वविरहेण साधनाव्यापकत्वं चेत्यादिकमपि द्रष्टव्यम् ॥

( दी० ) व्याप्यत्वासिद्धस्य लक्षणमाह—सोपाधिक इति । उपाधेर्लक्षणमाह-साध्येति । उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्यः—

---

(कि०) मूले—सोपाधिक इति । उपाधिना सहितः—सोपाधिकः, स्वव्यभिचारित्व-सम्बन्धेन उपाधिमानित्यर्थः । स्वः=उपाधिः, साध्यस्य व्यापकत्वे सति साधनस्य=हेतोरव्यापकं यत् तदेवोपाधिपदग्राह्यमत्र ॥ साध्येति । साध्येन सह समानं=एकं अधिकरणं यस्य सः, तादृशात्यन्ताभावस्याऽप्रतियोगित्वमित्यर्थः । 'साधनमस्यास्तीति—साधनवत्, तन्निष्ठो योऽत्यन्ता-भावस्तत्प्रतियोगित्व'मित्यर्थः ॥ तथाहीति । धूमसमानाधिकरणो न आर्द्रेन्धनसंयोगाभावः, किन्तु घटाभावस्तत्प्रतियोगित्वं घटे, तदप्रतियोगित्वं—आर्द्रेन्धसंयोगे, इति साध्यव्यापकता ॥ वह्निमदयोगोलकनिष्ठोऽत्यन्ताभावः—आर्द्रेन्धनसंयोगाभावः, तत्प्रतियोगित्वम्—आर्द्रेन्धनसंयोगे इति साधनाऽव्यापकता, स्व(उपाधि)व्यभिचारेण साधने साध्यव्यभिचारानुमानं उपाधेः प्रयोजनम्, यथा—'वह्निः—धूमव्यभिचारी,—धूमव्यापकाऽऽर्द्रेन्धनसंयोगव्यभिचारित्वात् । तेन 'वह्निः—धूमा-भाववद्वृत्ति'रितिव्यभिचारज्ञानेन 'धूमाभाववदवृत्तिर्वह्नि'रितिव्याप्तिज्ञानप्रतिबन्ध इति तात्पर्यम् ॥ उपाधिलक्षणे 'साध्यव्यापकत्वानुपादाने—'शब्दः—अनित्यः,—कृतकत्वा'दिति सद्धेतुस्थले—'जातिमत्त्वे सत्यस्मद्बहिरिन्द्रियग्राह्यत्व' मुपाधिः स्यात्, अतंस्ते 'जातिमत्त्वे सत्यस्मद्बहिरिन्द्रियग्राह्य-

आर्द्रेन्धनसंयोगः। द्वितीयो यथा—'वायुः-प्रत्यक्षः-प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्। तृतीयो यथा—प्रागभावो-विनाशी-जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्। चतुर्थस्तु प्रागभावो-विनाशी-प्रमेयत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्॥

---

त्वाऽसत्त्वेन साधनाऽव्यापकत्वात्। साध्यव्यापकत्वोपादाने तु—'अनित्यत्वं साध्यं प्रागभावे वर्तते, तत्र जातिमत्त्वे सत्यस्मद्बहिरिन्द्रियग्राह्यत्वं नास्तीति—साध्यव्यापकत्वविरहात् तन्नोपाधिरिति॥ साधनाऽव्यापकत्वानुपादाने—'उत्क्षेपणम्—अनित्यम्,—कर्मत्वजातिमत्त्वात्' इत्यत्र कार्यत्वमुपाधिः स्यात्, कार्यत्वस्य साध्यव्यापकत्वात्, साधनाऽव्यापकत्वोपादाने तु कार्यत्वस्य कर्मत्वजातेरपि व्यापकत्वात् तद्वारणमिति॥ अत्रेदमवधेयम्—साध्ये साध्यतावच्छेदकाभावः— साध्याऽप्रसिद्धिः, यथा—पर्वतः—काञ्चनमयवह्निमान्—धूमादि'त्यत्र॥ हेतौ हेतुतावच्छेदकाभावः—साधनाऽप्रसिद्धिः,—यथा—'पर्वतो—वह्निमान्—काञ्चनमयधूमादित्यत्र॥ ते तु व्याप्यत्वाऽसिद्धावन्तर्भूते—इति॥ द्वितीयो यथेति। वायुः—पक्षः यस्य धर्मो—बहिर्द्रव्यत्वम्, तद्विशिष्टप्रत्यक्षत्वं पृथिवीजलतेजःसु वर्तते, तत्र—उद्भूतरूपवत्त्वमस्तीति—साध्यव्यापकत्वम्, अन्यथा केवलप्रत्यक्षत्वस्याऽऽत्मन्यपि सत्त्वेन साध्यव्यापकत्वानुपपत्तिः। प्रत्यक्षस्पर्शाश्रयत्वरूपो हेतुर्वायौ वर्तते, तत्र—उद्भूतरूपवत्त्वं नास्तीति—साधनाऽव्यापकता, अत उद्भूतरूपवत्त्वम्—उपाधिः, तेन 'प्रत्यक्षस्पर्शाश्रयत्वम्—प्रत्यक्षत्वव्यभिचारि,—बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्त्वव्यभिचारित्वादि'ति व्यभिचारानुमानं फलितम्॥ तृतीयो यथेति। भावत्वम्—उपाधिः। स च जन्यत्वावच्छिन्नविनाशित्वव्यापको द्रव्यगुणकर्मसु, जन्यत्वाऽव्यापकश्च ध्वंसे, अन्यथा केवलविनाशित्वस्य प्रागभावे सत्त्वेन तत्र भावत्वाऽसत्त्वेन व्यापकत्वानुपपत्तिरिति हृदयम्॥ चतुर्थस्त्विति। अत्र भावत्वम्-उपाधिः, जन्यत्वं—उदासीनो धर्मः, न तु पक्षधर्मः, तथा च—जन्यत्वाऽवच्छिन्नविनाशित्व—व्यापकं द्रव्यगुणकर्मसु भावत्वम्, अभावे प्रमेयत्वाव्यापकत्वं च बोध्यम्, अन्यथा विनाशित्वस्य प्रागभावे सत्त्वेन भावत्वस्य साध्यव्यापकता नोपपद्येतेति भावः॥

**यस्य साध्याभावः प्रमाणान्तरेण पक्षे निश्चितः सः बाधितः। यथा—'वह्निरनुष्णो-द्रव्यत्वादिति। अत्राऽनुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्॥ व्याख्यातमनुमानम्॥**

(न्या०) यस्येति। यस्य = हेतोः, साध्यस्याभावः—साध्याभावः = साध्यबाधः। स च प्रमाणान्तरेण = प्रत्यक्षादिप्रमाणेन, पक्षे निश्चितः

स बाधित इत्यर्थः। तथा च प्रात्यक्षिकसाध्यबाधितनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम्। बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते ॥

❁ इति न्यायबोधिन्यामनुमानपरिच्छेदः ❁

(प०) यस्येति। सद्धेतुवारणाय(१) प्रमाणान्तरेणेति। घटाद्यभावमादाय धूमवारणाय—साध्येति ॥ ( प्रत्यक्षेणाऽऽकलितमप्यर्थं अनुमानेन बुभुत्सन्ते तर्करसिका' इति प्राचीनोक्तेः; अनुमानपूर्वम् यस्य साध्यं पक्षे प्रत्यक्षेण निश्चितं तस्य धूमस्य बाधितत्वापत्तिवारणाय—अभावेति ॥ विपक्षे जलह्रदे साध्याभावस्य प्रत्यक्षेण निश्चितत्वात् धूमस्य बाधितत्वापत्तिवारणाय-'पक्षे' इति ) ॥

❁ इति पदकृत्येऽनुमानपरिच्छेदः ❁

(दी०) बाधितस्य लक्षणमाह—यस्येति। अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम्। इतरेषां परामर्शप्रतिबन्धकत्वम्। तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य

---

( कि० ) मूले—यस्येति। यस्य हेतोः साध्यस्याऽभावः प्रत्यक्षादिप्रमाणाऽन्तरेण निश्चितः स बाधित इत्यर्थः। अन्यत् सरलम्। समन्वयस्तु पूर्वं दर्शितः। दोषज्ञानानां केन केन रूपेण कं प्रति प्रतिबन्धकतेत्याकांक्षायामाह—दीपिकायां—बाधस्येति। 'पक्षः साध्याऽभाववानि'ति—पक्षे साध्याऽभाववत्तानिश्चयस्येत्यर्थः ॥ ग्राह्याभावनिश्चयत्वेनेति। तद्वत्तावुद्धिविषयीभूतस्य तस्य योऽभावस्तन्निश्चयत्वेनेत्यर्थः। साध्याऽभाववान् पक्षः, साध्यवदन्यः पक्षः, पक्षाऽवृत्ति साध्यम्, पक्षे साध्याऽभावः, पक्षनिष्ठसाध्याऽभावः, विशिष्टसाध्ये, पक्षादेर्विशेष्याऽभाववत्त्वादिकम्,—यथामतं—पक्षे साध्यवत्ता-ज्ञान'स्य साक्षादेव विरोधि प्रत्येकमेव बाधः। बाधनिश्चयश्च-तदभावनिश्चयत्वेन दोषविशेषाद्यजन्यलौकिकसन्निकर्षाजन्यज्ञानमात्रे एव विरोधीति भावः ॥ सत्प्रतिपक्षस्येति। 'वन्ह्यभावव्याप्यजलादिमान् ह्रद'इतिनिश्चयस्येत्यर्थः। विरोधिज्ञानसामग्रीत्वेन=विरुद्धाऽनुमितिसामग्रीत्वेन तादृशनिश्चयस्य 'वह्निमानि'त्यनुमितिविरोधित्वम्। तथा च—तद्वत्ताज्ञानविषयीभूतस्य तस्याऽभावव्याप्यवत्तानिश्चयत्वेन साक्षादनुमितिप्रतिबन्धकः सत्प्रतिपक्षनिश्चय इति भावः ॥ नव्यास्तु—अतिरिक्तविरोधिज्ञानसामग्रीत्वेन

---

( १ ) प्रमाणान्तरेणेत्यनुपादाने-'पर्वतो-वह्निमान्-धूमादि'त्यत्र यस्य=धूमस्य साध्यस्य=वह्नेः अभावः पक्षे=पर्वते प्रमाणेन-'पर्वतः-वह्न्यभाववान्-जलादि'ति अनुमानेन निश्चितः, सः=धूमहेतुः,-बाधितः स्यात्, अतः तद्वारणाय-प्रमाणान्तरेणेति,=प्रत्यक्षप्रमाणेनेत्यर्थः, वह्निस्तु पर्वते प्रत्यक्षेण न बाधित इति तद्वारणम् ॥ 'साध्य'पदाऽनुपादाने-यस्य=धूमहेतोः, अभावः=घटाभावः, प्रत्यक्षेण पर्वते निश्चितः, सः धूमो बाधितः स्यात् इति ॥ तद्वारणाय-साध्येति ॥

सामानाधिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्। आश्रयासिद्धस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। उपाधिस्तु व्यभिचारज्ञानद्वारा

---

प्रतिबन्धकत्वाऽपेक्षया विरोधिपरामर्शस्य साध्याऽभावव्याप्यवत्तानिश्चयत्वेन रूपेण प्रतिबन्धकतामङ्गीकुर्वन्ति इति ॥ इतरेषाम्=व्यभिचार-विरोधाऽसिद्धिज्ञानानां (मध्ये) कस्यचित् साक्षात् परामर्शप्रतिबन्धकत्वम्, कस्यचिच्च व्याप्तिज्ञानप्रतिबन्धद्वारेति भावः ॥ तदेवाऽऽह—**तत्राऽपीति** । व्यभिचारादिष्वपीत्यर्थः । साधारणस्य=हेतुनिष्ठसाध्याऽभाववद्वृत्तित्वनिश्चयस्य ॥ **अव्यभिचाराऽभाववत्तयेति** । 'साध्याऽभाववद्वृत्तित्व'मिति व्यभिचारः, साध्याऽभाववद्वृत्तित्वाऽभावः=अव्यभिचारः=व्याप्तिरिति यावत् । साध्याऽभाववद्वृत्तित्वाऽभावाऽभावः=अव्यभिचाराऽभावः=व्यभिचाररूपः,—तद्वत्तया । तथा च—हेतुनिष्ठसाध्याऽभाववद्वृत्तित्वाऽभावाऽभाववत्ताग्रहात्मकस्य—साधारणव्यभिचारग्रहस्य—'अव्यभिचाराऽभावग्रहत्वेन रूपेण'व्याप्तिग्रहप्रतिबन्धकतेतिभावः ॥ **विरुद्धस्येति** । विरोधज्ञानस्येत्यर्थः । विरोधज्ञानस्य परामर्शप्रतिबन्धकत्वन्त्वस्त्येव, 'व्याप्तिज्ञानप्रतिबन्धकत्वमपि भवती'त्येतद्ग्रन्थेन प्रदर्शितमिति ॥ 'सामानाधिकरण्याऽभाववत्तये'त्यस्य—'व्याप्तिज्ञानप्रतिबन्धकत्वमि त्यनेनाऽन्वयः । तथा च—"हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिस्तद्घटकीभूत—साध्यसामानाधिकरण्य'—ज्ञानं प्रति हेतुधर्मिक'साध्याऽसामानाधिकरण्य'—रूपविरोधज्ञानं प्रतिबन्धकमिति भावः । मूलस्थस्य—'साध्याऽभावव्याप्तो हेतु'रित्यस्य च 'साध्यव्यापकीभूताऽभावप्रतियोगिहेतु'र्विरोध—इत्यर्थः । तादृशविरोधश्च हेतुमत्ताज्ञानसहकृतः सन् साक्षादनुमितिप्रतिबन्धकः ॥ **व्याप्यत्वाऽसिद्धस्येति** । व्याप्यत्वाऽसिद्धिनिश्चयस्येत्यर्थः । 'पर्वतो धूमवान् वह्ने'रित्यत्र वह्निः, 'पर्वतो—वह्निमान्—नीलधूमा'दित्यत्र नीलधूमश्च व्याप्यत्वाऽसिद्धौ । वह्नेः सोपाधिकतया व्याप्यत्वाऽसिद्धता, नीलधूमस्य तु व्यर्थविशेषणघटितत्वात् व्याप्यत्वाऽसिद्धता, 'स्वसमानाऽधिकरण—प्रकृतसाध्यव्याप्यताऽवच्छेकधर्मान्तराऽघटित'स्यैव व्याप्यतावच्छेदकत्वात् । स्वं=नीलधूमत्वम्, तत्समानाधिकरणं धूमत्वम् तच्च प्रकृतवह्न्यात्मकसाध्यव्याप्यतावच्छेदकम् इति तादृशधर्मान्तरो धूमत्वम्, तेन घटितत्वं नीलधूमत्वे वर्तते, न त्वघटितत्वम्, अतो नीलधूमत्वं न व्याप्यतावच्छेदकं किन्तु व्यर्थविशेषणघटितम् । तथा च विशिष्टव्याप्त्यभावग्रहत्वेन=साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्याऽभावनिश्चयत्वेन व्याप्यत्वासिद्धिग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वमिति भावः ॥ **असाधारणाऽनुपसंहारिणोरिति** । असाधारण्यनिश्चयाऽनुपसंहारित्वनिश्चययोरित्यर्थः । 'शब्दः—नित्यः,—शब्दत्वा'दित्यादावसाधारणस्थले 'हेतुसाध्ययोः सामानाधिकरण्यनिश्चयाऽनुत्पादेन तदानीं पक्षान्तर्भावेन च साध्यसंशयसत्त्वेन व्याप्तिसंशयोऽपि भवति, व्याप्तिसंशयोपधायकत्वं—असाधारणदोषस्य, तद्ग्रहस्य व्याप्तिज्ञानप्रतिबन्धकव्याप्तिसंशयोपधायकत्वेन (रूपेण) व्याप्तिज्ञानप्रतिबन्धकत्वमिति भावः ॥ 'सर्वं—अभिधेयम्, प्रमेयत्वा'दित्यनुपसंहारिस्थले 'अत्यन्ताभावाऽ-

व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धे अन्तर्भवतीति प्राञ्चः। निग्रहस्थानान्तरमिति नवीनाः॥

* इति दीपिकायामनुमानपरिच्छेदः *

---

प्रतियोगिसाध्यकादि'रूपाऽनुपसंहारिदोषज्ञानदशायां तत्र सर्वस्यापि सन्दिग्धसाध्यवत्त्वाद् व्याप्तिनिश्चयो नास्त्येव, किन्तु व्याप्तिसंशयः संभवति, अतो व्याप्तिसंशयोपधायकः–अनुपसंहारिदोषः, तद्ग्रहस्य व्याप्तिसंशयोपधायकत्वेन व्याप्तिग्रहप्रतिबन्धकत्वमिति भावः॥ **आश्रयाऽसिद्धस्वरूपाऽसिद्धयोरिति।** आश्रयाऽसिद्धिनिश्चयस्वरूपाऽसिद्धिनिश्चययोरित्यर्थः। गगनकुसुमम्–सुरभि,–कुसुमत्वा'दित्यत्र 'पक्षे पक्षतावच्छेदकविरह'रूपाऽऽश्रयाऽसिद्धिज्ञानदशायां–'हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वा'त्मक–पक्षधर्मताग्रहाऽसंभवात्, 'शब्दः–अनित्यः, चाक्षुषत्वा'दित्यत्र 'पक्षे हेतोरभाव'इति स्वरूपाऽसिद्धिग्रहदशायां 'हेतौ पक्षवृत्तित्वा'त्मक–पक्षधर्मताज्ञानाऽसंभवात्, पक्षासिद्धि–स्वरूपासिद्धि ग्रहयोः पक्षधर्मताग्रहप्रतिबन्धकत्वम्=प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानप्रतिबन्धकत्वमिति भावः॥ सोपाधिको हेतुर्व्याप्यत्वाऽसिद्ध इत्युक्तं प्राक्, तत्रोपाधिः–व्यभिचारज्ञानद्वारा व्याप्तिज्ञानं प्रतिबध्नातीत्युपाधेर्न हेत्वाभासत्वमिति दर्शयति–**उपाधिस्त्वित्यादिना।** तथा च उपाधेः साक्षादनुमिति–तत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वाऽभावाच्च हेत्वाभासत्वमिति भावः। **प्राचीनाः**–पक्षे साध्यसिद्धिसत्त्वेऽनुमित्यदर्शनात्–'साध्यवत्पक्ष'रूपा सिद्धिर्हेत्वाभासान्तरमिति–स्वीकुर्वन्ति, तान्प्रत्याह–**सिद्धसाधनंत्विति।** पक्षे साध्यनिश्चय इत्यर्थः। **पक्षताविघटकतयेति।** 'सिषाधयिषाविरहविशिष्टसिद्ध्यभाव'-रूपाऽनुमितिकारणपक्षताविघटकतयेत्यर्थः॥ **आश्रयाऽसिद्धे इति।** आश्रयासिद्धिदोषेऽन्तर्भाव इत्यर्थः। प्राचीनमते प्रकृतपक्षताज्ञानप्रतिबन्धकज्ञानविषयस्यैवाऽऽश्रयाऽसिद्धित्वादिति हृदयम्, अतो नातिरिक्तं हेत्वाभासान्तरमिति भावः। **नवीनास्तु**–प्रतिवादिपराजयस्थानविशेषः सिद्धसाधनम्, यथा वादिप्रयुक्तहेतौ हेत्वाभासात्मकदूषणोद्भावने सति वादी निगृहीतो भवति, तथा वादिना प्रतिवादिप्रयोगे सिद्धसाधनदोषोद्भावने सति प्रतिवादी निगृहीतो भवतीत्यतो निग्रहस्थानविशेषः सिद्धसाधनमिति भावः॥

ॐ इति तर्कदीपिकाकिरणावल्यामनुमानपरिच्छेदः ॐ

—ॐॐॐ—

# ॐ अथोपमानपरिच्छेदः ॐ

उपमितिकरणम्–उपमानम्। संज्ञा–संज्ञि–सम्बन्धज्ञानमुपमितिः; तत्करणं–सादृश्यज्ञानम्। अतिदेशवाक्यार्थस्मरणं–अवान्तरव्या-

पारः । तथा हि- 'कश्चिद्गवयशब्दवाच्य(पदार्थ)मजानन् कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवय' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति, तदनन्तरम् 'अयं गवयशब्दवाच्य' इत्युपमितिरुत्पद्यते ॥ इत्युपमानम् ॥

( न्या० ) उपमानं लक्षयति—उपमितिकरणमिति । उपमितिं लक्षयति—संज्ञासंज्ञीति । संज्ञा नाम = पदम् । संज्ञी = अर्थः । तयोः सम्बन्धः = शक्तिः । तथा च—पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नाम = अतिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं = व्यापारः । उपमितिः = फलम् । 'गोसदृशो गवयपदवाच्य' इत्याकारकवाक्याद् गोसादृश्यावच्छिन्नविशेष्यकंगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ❀ इति न्यायबोधिन्यामुपमानपरिच्छेदः ❀

( प० ) अवसरसंगतिमभिप्रेत्यानुमानानन्तरमुपमानं निरूपयति—उपमितीति । उपमितेः करणमुपमानमित्यर्थः । कुठारादिवारणाय-मितीति । प्रत्यक्षादिवारणाय-उपेति । संज्ञासंज्ञीति । अनुमित्यादिवारणाय—सम्बन्धेति । संयोगादिवारणाय—संज्ञासंज्ञीति । असौ गवयपदवाच्य इति । अभिप्रेतो गवयो गवयपदवाच्य इत्यर्थः । तेन गवयान्तरे शक्तिग्रहाभावप्रसंग इति दूषणमपास्तम् । तथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम् । अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः । उपमितिः फलमिति सारम् । तच्चोपमानं त्रिविधं—सादृश्यविशिष्टपिण्डज्ञानम्-असाधारणधर्मविशिष्टपिण्डज्ञानं, वैधर्म्यविशिष्टपिण्डज्ञानञ्च तत्राऽऽद्यमुक्तमेव । द्वितीयं यथा—'खड्गमृगः कीदृगि'ति पृष्टे नासिकालसदेकशृंगोऽनतिक्रान्तगजाकृतिश्चे'ति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशं पिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति, तदनन्तरं 'खड्गमृगो खड्गमृगपदवाच्य' इत्युपमितिरुत्पद्यते अत्र नासिकालसदेकशृङ्ग एवासाधारणधर्मः । तृतीयं यथा—'उष्ट्रः कीदृगि'ति पृष्टे 'अश्वादिवदसमानपृष्ठो न ह्रस्वग्रीवशरीरश्चे'ति आप्तोक्ते कालान्तरे तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपिण्डज्ञानं, ततोऽतिदेशवाक्यार्थस्मरणं, तत 'उष्ट्र उष्ट्रपदवाच्य' इत्युपमितिरुत्पद्यते ।

❀ इति पदकृत्यके उपमानपरिच्छेदः ❀

( दि० ) उपमानं लक्षयति । उपमितीति ।

* इति दीपिकायामुपमानपरिच्छेदः *

---

(कि०) **उपमितिकरणमिति मूलम्** । अवसरसङ्गत्योपमाननिरूपणं बोध्यम् । अवसरः–प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्युपलक्षितावश्यवक्तव्यत्वम् । अनुमानोपमानयोर्द्वयोरपि प्रत्यक्षोपजीवक(कार्य)त्वेऽप्यनुमानस्य बहुवादिसम्मतत्वेन निरसनीयाऽल्पवादिविप्रतिपत्तिकत्वेन सुगमतयाऽनुमाने एव प्रायशो व्युत्पित्सोः प्रथमतो जिज्ञासा जायते, इत्यनुमाननिरूपणेन प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या 'अवश्यवक्तव्यत्वमुपमानस्ये'तिअवसरसङ्गत्याऽनुमाननिरूपणानन्तरमुपमाननिरूपणम् युक्तमिति भावः ॥ उपमितेः करणम्–उपमानम् । मिति'पदानुपादाने 'उपकरणं शय्यादिकं कुठारादिकं चाऽपि भवतीति तद्वारणाय–'मिति'पदम् । 'उप'पदानुपादाने 'मिति' पदेन प्रत्यक्षादिकमादाय तत्करणेन्द्रियेष्वतिव्याप्तिः, तद्वारणाय 'उपपदम्'! उपमितेस्तादात्म्येन उपमानत्वाऽऽपत्तिवारणाय–'करण'पदम् । उपमानं नाम–सादृश्यज्ञानम् ॥ **संज्ञासंज्ञीति** । संज्ञा–पदम्, संज्ञी–अर्थः । तयोः सम्बन्धः वाच्यवाचकभावात्मकः, तस्य ज्ञानम्–'पदपदार्थयोस्तादृशसम्बन्धनिश्चयः–स एवोपमितिरित्यर्थः । संज्ञासंबि' पदानुपादाने संयोगादावतिव्याप्तिः, तस्यापि सम्बन्धत्वात्, तद्वारणाय–'संज्ञासंज्ञो'ति । वस्तुतस्तु लाघवेन 'उपमिनोमी' त्यनुव्यवसायप्रतीतिसाक्षिकोपमितित्वजातिमत्त्वमे'व लक्षणं बोध्यम् । तत्करणम्–सादृश्यज्ञानम् । सादृश्यं=तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा गोभिन्नत्वे सति गोगता ये भूयांसो धर्माः शृङ्गादयस्तद्वत्त्वम् गवये गोसादृश्यं, तथा च तादृशसादृश्यप्रकारकव्यक्तिविशेष्यकनिश्चयः करणम्, तादृश'सादृश्यविशिष्टपिण्डनिश्चय'जन्यं यत् 'गोसदृशो गवयपदवाच्य'-इत्युपदेशवाक्यार्थस्य स्मरणं 'तदेव व्यापारः । ननु तादृशोपदेशवाक्यार्थस्मरणस्य पूर्वतनशाब्द' बोधजन्यदृढसंस्कारजन्यत्वेन तत्र–उपमान–व्यापारता कथमिति चेन्न । तादृशोपदेशवाक्यार्थस्मरणस्य पूर्वतनशाब्दबोधाऽऽहितसंस्कारजन्यत्वेऽपि तत्र–उद्बोधकतया सादृश्यविशिष्टपिण्डदर्शनस्याऽपि कारणत्वात् भवति तद्व्यापारत्वमक्षतमिति । क्रमं दर्शयति—दीपिकायां **तथाहीति**–कश्चित्=उपमातृत्वेनाऽभिमतः पुरुषः । गवयशब्दवाच्यम्=गवयपशुम् अजानन् सन् कुतश्चित्=आरण्यकाप्तोपदेष्टृपुरुषात् 'गोसदृशो गवयपदवाच्य' इत्युपदेशवाक्यश्रवणं कृत्वा वनं गतस्तत्र 'गोसदृशो गवय' इतिवाक्यार्थं स्मरन्=स्मरिष्यन् । 'वर्तमानसामीप्ये वर्तमानवद्वे'त्यनुशासनेन भवष्यति लटि शतृप्रत्ययः । 'गोसदृशं पिण्डं–पशुशरीरं' पश्यति । अनेन–गोसादृश्यविशिष्टपिण्डदर्शनं करणं दर्शितम् 'वाक्यार्थं स्मरिष्यन्नि'त्यनेन 'वाक्यार्थस्मरणस्य व्यापारत्वं दर्शितम् ॥ **तदनन्तरमिति** । सादृश्यदर्शनजन्य वाक्यार्थस्मरणानन्तरमित्यर्थः । 'अयं गवयपदवाच्य'इत्यस्य 'गवयो गवयपदवाच्य' इति सामान्यज्ञानात्मिका–गवये गवयपदशक्तिविषयकनिश्चयरूपा उपमितिरुत्पद्यते इत्यर्थः, न तु अयं गवयो गवयपदवाच्य'इति विशेष ज्ञानात्मिका, तथा सति गवयान्तरे शक्तिग्रहाऽभावप्रसङ्गादिति हृदयम् ॥ इदमुपलक्षणम्–उपमानं त्रिविधम्, सादृश्यविशिष्टपिण्डदर्शनम्, असाधारणधर्मविशिष्टपिण्डदर्शनम्, वैधर्म्यविशिष्टपिण्डदर्शनं चेति । तत्र प्रथममुक्तं मूले । द्वितीयं यथा–'भल्लुकः कीदृगि'तिपृष्टे–'पश्चाङ्गुलीविशिष्टपादचतुष्टयसम्पन्नो लम्बनासिकालसन्मुखो दीर्घोऽनत्युच्चतरः कृष्णदीर्घरोमाकुलितशरीरो भल्लुक'

इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशाऽसाधारणधर्मादिविशिष्टं पिण्डं पश्यति, ततः उपदेशवाक्यार्थस्मरणं, ततो 'भल्लुको भल्लुकपदवाच्य' इत्युपमितिर्भवतीति ॥ तृतीयं यथा—'सिंहः कीदृगिति पृष्टे 'करशृंगपक्षखुरादिरहितशरीर' इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे करशृंगादिधर्मविरुद्धधर्मविशिष्टपिण्डदर्शनं करोति, तत उपदेशवाक्यार्थस्मरणं भवति, ततः 'सिंहः सिंहपदवाच्य' इति जायत उपमितिरिति ॥ काणादवैशेषिकास्तु 'गवयः—गवयपदवाच्यः,—गोसादृश्यात, इत्यनुमानं कृत्वा 'गवयपदवाच्यत्वव्याप्यगोसादृश्यवान् गवय' इति परामर्शेन 'गवयः—गवयपदवाच्य' इत्यनुमितिं कुर्वन्ति । तन्न युक्तम् । यतः—पदवाच्यत्वस्य सादृश्येन सह व्याप्तिज्ञानं विनाऽपि गवयपदवाच्यत्वप्रकारकप्रमात्मकज्ञानस्योपमितिरूपस्याऽनुभवसिद्धत्वात् उपमितिः प्रमान्तरमिति संक्षेपः ॥

❀ इति तर्कदीपिकाकिरणावल्यामुपमानपरिच्छेदः ❀

—❀❀❀—

# ❀ अथ शब्दपरिच्छेदः ❀

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं-पदसमूहः, यथा—'गामानय शुक्लां दण्डेने'ति ॥ शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य' इतीश्वरसंकेतः शक्तिः ॥**

( न्या० ) शब्दं (१) लक्षयति—आप्तेति । आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम् । वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरतः—आप्तोच्चरितत्वनिवेशः । तावन्मात्रोक्तौ जवगडदशादावतिव्याप्तिरतो वाक्यत्वम् । आप्तत्वं च—प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः । वस्तुतस्तु—पदज्ञानं करणम् । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः । वाक्यार्थज्ञानं शाब्दबोधः फलम् । वृत्तिर्नाम—शक्तिलक्षणान्यतररूपा । शक्तिर्नाम—घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः । ईश्वरसंकेतो नाम—ईश्वरेच्छा सैव शक्तिरित्यर्थः । शक्तिनिरूपकत्वमेव पदे शक्तत्वम् । विषयतासम्बन्धेन शक्त्याश्रयत्वं शक्यत्वम्, शक्यसम्बन्धो (२) लक्षणा, सा द्विविधा—गौणी,

(१) शब्दविशेष्यकलक्षणस्वरूपादिप्रकारकज्ञानाऽनुकूलशब्दप्रयोगात्मकव्यवहाराऽनुकूलकृतिमान्—ग्रन्थकार इति बोधः ॥ (२) स्वशक्यसम्बन्ध एव लक्षणेति—तदर्थः । 'गंगायां घोष'—इत्यत्र स्वं=गंगापदम्, तच्छक्यः=प्रवाहादिः, तत्सम्बन्धः=सामिप्यादिः, स एव लक्षणात्मकः, स च तीरे वर्तते, इति तीररूपोऽर्थो गङ्गापदस्य लक्ष्यार्थः, तत्र गङ्गापदात् तीरोपस्थितौ सत्यां

शुद्धा चेति । गौणी नाम—सादृश्यविशिष्टे लक्षणा, यथा—'सिंहो माणवक' इत्यादौ सिंहपदस्य (१) सिंहसादृश्यविशिष्टे लक्षणा । शुद्धा त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । लक्ष्यतावच्छेदकरूपेण (२) लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा, यथा 'गङ्गायां घोष'इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणा-ज्ञानाद्गङ्गापदात्तीरोपस्थितिः । लक्ष्यतावच्छेदकरूपेण (३)लक्ष्य-शक्योभ-यबोधप्रयोजिका लक्षणा अजहल्लक्षणा, यथा 'काकेभ्यो दधि रक्ष्यतामि'त्यत्र काकपदस्य दध्युपघातके लक्षणा, लक्ष्यतावच्छेदकं दध्युपघातकत्वम्, तेन रूपेण दध्युपघातकानां सर्वेषां काक-बिडाल-कुक्कुट-सारमेयादीनां शक्यलक्ष्याणां बोधात् । जहदजहल्लक्षणा च जीवब्रह्मणोरैक्यं ब्रुवतां वेदान्तिनां (४) मते, सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्र-बोधप्रयोजिका, यथा 'तत्त्वमसी'त्यत्र सर्वज्ञत्व-किंचिज्ज्ञत्व-परित्यागेन व्यक्तिमात्रबोधनात् जहदजहल्लक्षणा ।

---

तीरविषयकः='तीरवृत्तिर्घोष'इत्याकारको बोधो भवतीति ॥ अत्र तीरोपस्थितौ—तीरत्वा-वच्छिन्नविशेष्यकलक्षणाप्रकारकज्ञानस्य कारणत्वं बोध्यम् ॥ (१) यथा—'सिंहो माणवक'इत्यत्र शक्यार्थः=सिंहात्मकोऽर्थः, तस्य सम्बन्धः='सिंहभिन्नत्वे सति सिंहगतभूयोधर्म (विलक्षण-पराक्रमक्रूरताद्यात्मक) वत्त्व' रूपं सादृश्यं यत् भूयोधर्मात्मकं तदात्मिकैव लक्षणा गौणी, सा च आश्रयत्वादिसम्बन्धेन तद्विशिष्टे वर्तते, अतः सादृश्यविशिष्टः=लक्ष्यार्थः, तथा च—'सिंहसदृशाऽभिन्नपुरुष' इति बोधः ॥

(२) लक्ष्यतावच्छेदकेन तीरत्वादिरूपेण तीरादिमात्रस्य बोधप्रयोजिका लक्षणेति तदर्थः ॥

(३) यथा—'काकेभ्यो दधी'त्यत्र लक्ष्याऽर्थः=काकभिन्नः, शक्यार्थस्तु काकः, तत्सम्बन्धः=नाशकत्वरूपः, तत्र लक्ष्यतावच्छेदकं यत् दध्युपघातकत्वं तेन रूपेण काकभिन्नस्य काकस्य च बोधप्रयोजिका लक्षणेति । 'काकेभ्यः'—इतिपञ्चम्यर्थः=जन्यत्वम्, धात्वर्थः=व्यापारः,—नाशाऽनुत्पादश्च, नाशाऽनुत्पादः=नाशोत्पत्तिप्रतियोगिकाऽभावः, तादृशाऽभावे प्रयोज्यत्व-संसर्गेण व्यापारोऽन्वेति, तथा च—'दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकत्वत्कर्तृकव्यापार-प्रयोज्याऽभाववद्दधी'ति बोधः फलितः ॥

(४) तन्मते शाब्दबोधे शुद्धचिन्मात्रं भासते, तथा च—'तत् त्वमसी'त्यत्र 'तत्'—पदशक्यः—सर्वज्ञत्वादिविशिष्टात्मा, 'त्वं'—पदशक्यः—अल्पज्ञत्वादिविशिष्टात्मा, शक्यसम्बन्धः—द्वयोरभेदात्मकः, स च लक्षणात्मकः, तत्रोभयत्र शक्यतावच्छेदकं सर्वज्ञत्वमल्पज्ञत्वं च, तत्परित्यागेन शुद्धाऽऽत्म-व्यक्तिमात्रबोधो भवति ॥ एवं 'सोऽयं देवदत्त'—इत्यत्राऽपि 'तत्'—पदशक्यार्थः=तत्कालाऽवच्छिन्नदेवदत्तः, 'अयं'—पदशक्यार्थः=एतत्कालावच्छिन्नदेवदत्तः, तत्सम्बन्धः=अभेदः,

(प०) अवसरसंगतिमभिप्रेत्योपमानानन्तरं शब्दं निरूपयति—आप्तेति। शब्द इति। शब्दप्रमाणमित्यर्थः। भ्रान्त-विप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्व-वारणाय-आप्तेति। ननु कोऽयमाप्त इत्यत आह—आप्तस्त्विति। यथार्थवक्ता= यथाभूताबाधितार्थोपदेष्टा। वाक्यं लक्षयति—वाक्यमिति। घटादिसमूह-वारणाय-पदेति। शक्तमिति। निरूपकतासम्बन्धेन शक्तिविशिष्टमित्यर्थः। अस्मादिति। 'घटपदाद्धटरूपोऽर्थो बोद्धव्य' इतीश्वरेच्छैव शक्तिरित्यर्थः। अर्थ-स्मृत्यनुकूलपदपदार्थसम्बन्धत्वं तल्लक्षणम्। शक्तिरिव लक्षणापि पदवृत्तिः। अथ केयं लक्षणा? शक्यसम्बन्धो लक्षणा। सा च त्रिधा—जहत्-अजहत्-जहदजहद्भे-दात्। वर्तते च 'गङ्गायां घोष' इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धस्तीरे। लक्षणाबीजं च—तात्पर्यानुपपत्तिः। अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति। 'छत्रिणो यान्ती'त्यादौ द्वितीया। 'सोऽयमश्व'इत्यादौ तृतीया॥

(दी०) शब्दं लक्षयति—आप्तेति। वाक्यं लक्षयति—वाक्यमिति॥ पदलक्ष-

---

(कि०) मूले—आप्तवाक्यमिति। उपजीव्योपजीवकभावसंगतिरत्र बोध्या। उपमानानन्तरं शब्दनिरूपणे ज्ञानविषयीभूतशब्दस्य शाब्दप्रमितिकरणात्मकशब्दतया शब्दे 'गोसदृशो गवय'—इत्याकारकसादृश्यविशिष्टपिण्डदर्शनोपजीव्यतानिरूपितोपजीवकत्वं नास्ति, किन्तु संज्ञासंज्ञिसम्बन्धात्मक—शक्तिनिर्णयरूपोपमितिनिष्ठोपजीव्यतानिरूपितोपजीवकता शाब्दबोधे वर्तते, शब्दशक्तिनिर्णयाऽनन्तरमेव शब्दादर्थोपस्थितेरनुभवात्, तथा चाऽत्रोपमितिशाब्दबोधरूपफलयोः सङ्गतिर्बोध्या तस्याः फलनिष्ठत्वेऽपि 'स्वाश्रयकरणत्वा'ऽऽत्मकपरम्परासम्बन्धेन करणनिष्ठत्वात्= (करणयोरनन्तराऽभिधानप्रयोजकत्वं बोध्यमिति)। स्वं—उपजीव्योपजीवकत्वम्, तदाश्रयौ—उपमितिशाब्दबोधौ, तत्करणत्वम्—'उपमान' 'शब्द'गतमिति॥ शाब्दप्रमितिकरणत्वं= शब्दत्वम्। शाब्दत्वं च='शब्दात्प्रत्येमी'त्यनुभवसिद्धो जातिविशेषः। 'आप्तवाक्यं शब्द—इत्यत्र 'शब्द'इतिलक्ष्यनिर्देशः, प्रमाणशब्द'—इति तदर्थः, 'प्रमाणशब्दत्वं'—लक्ष्यतावच्छेदकम् 'आप्तवाक्यमि'ति लक्षणम्, 'आप्तोच्चरितत्वे सति वाक्यत्वं' तदर्थः, भवति हि—'पयसा

---

स एव लक्षणारूपः, तादृशलक्षणया तच्छब्दयतावच्छेदकस्य=तत्कालावच्छिन्नैतत्कालाऽवच्छिन्नत्वात्मकस्य परित्यागेन देवदत्तमात्रस्य बोधो जायते इति॥ नैयायिकास्तु—'तत्त्वमसी'यत्र न जहदजहल्लक्षणा, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनामि'त्यादिश्रुतिप्रतिपाद्यभेदस्य पारमार्थिकत्वेन 'तत्त्वमसी'त्यस्याऽभेदप्रतिपादकत्वविरहात्, आत्मनि आत्माऽभेदबोधस्य व्युत्पत्ति-विरुद्धत्वाच्च। किन्तु गौण्या लक्षणयैव निर्वाहः। तत्र-'तत्'-पदस्य तत्सदृशार्थे लक्षणा, 'तत्'—पदशक्यार्थः=सर्वज्ञाऽऽत्मा, तत्सम्बन्धः=सादृश्यम्, 'सर्वज्ञाऽऽत्मभिन्नत्वे सति सर्वज्ञाऽऽत्मगतनित्यत्वादिधर्मवत्त्वरूपम्, आश्रयत्वसंसर्गेण सादृश्याऽवच्छिन्ने युष्मदर्थे ईश्वर-सदृशाऽभेदस्यैव बोधः सम्पद्यते॥

णमाह—शक्तमिति । अर्थस्मृत्यनुकूलपदार्थसम्बन्धः । शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः, तन्निरासार्थमाह—अस्मादिति । डित्थादीनामिव

---

सिचतो'त्यादिशब्द आप्तोच्चरितवाक्यमिति । 'आप्तोच्चरितत्वाऽऽनुपादाने "वह्निना सिञ्चती"—त्यादावनाप्तोच्चरिते वाक्येऽतिव्याप्तिः । 'वाक्यत्वा'ऽनुपादाने आप्तोच्चरितकखगघादिवर्णेष्वतिव्याप्तिः । आप्तत्वं=प्रयोगकारणीभूतार्थविषयकतत्त्वज्ञानवत्त्वम् । अत्रेयं प्रणाली—प्रथमं येन केनाऽपि प्रमाणेन वक्तुः—वाक्यार्थज्ञानं भवति, ततः—'अन्यस्य वाक्यार्थज्ञानं भवत्वि'तीच्छा, ततो 'मत्कृतिसाध्यं वाक्यार्थज्ञानं मदिष्टसाधन'मितिज्ञानम्, ततः कण्ठाभिघातादौ चिकीर्षा, तत उच्चारणे प्रवृत्तिः, ततः कण्ठचेष्टाविभागादिः, ततः कण्ठौष्ठाद्यभिघातादिः, ततो वाक्योत्पत्तिरिति । अतो वक्तृवाक्यार्थवुबोधयिषापूर्वकवाक्यं प्रति वक्तृवाक्यार्थज्ञानस्य हेतुतया सर्वत्र लक्षणं सङ्गमनीयम् । **प्रयोगकारणीभूते'त्यादिकथनेन**—शुकादिप्रयुक्ताऽबाधितार्थकवाक्यस्याऽनुक्रियमाणद्वारा प्रमाणशब्दत्वमिति—**ध्वनितम्** । ननु—'कोऽयमाप्त'इत्याकाङ्क्षायामाह—**आप्तस्त्विति** । यथार्थवक्तृत्वम्=यथाभूताऽबाधितार्थोपदेष्टृत्वम् ॥ वाक्यत्वं नाम=पदसमूहत्वं, न तु वैयाकरणानामिव—'एकतिङ्त्वम्' ॥ **वस्तुतस्तु**—न ज्ञायमानपदं करणं, पदाऽभावेऽपि मौनिश्लोकादौ शाब्दबोधात्, किन्तु—पदज्ञानं—'करणम्, वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिः=व्यापारः 'वाक्यार्थज्ञानं'=शाब्दबोधः=फलम् ॥ दीपिकायां—**अर्थस्मृत्यनुकूलेति** । शाब्दबोधजनिका याऽर्थस्मृतिः, तदनुकूलो यो घटादिपद—घटादिरूपार्थयोः सम्बन्धः, स शाब्दबोधनियामकः, 'सम्यग् बध्नाती'तिव्युत्पत्तेः—शाब्दबोधप्रयोजकः—शक्तिपदार्थ इत्यर्थः । अनुकूलत्वमत्र=न जनकत्वं, किन्तु—प्रयोजकत्वम्, तच्च—कारणतावच्छेदके पदपदार्थसम्बन्धेऽपि सुघटम् । 'पदार्थस्मृत्यनुकूलत्वे सति पदपदार्थसम्बन्धत्वमि'ति लक्षणार्थः । 'पदार्थस्मृत्यनुकूलत्वाऽऽनुपादाने 'घट'पद—'कम्बुग्रीवादिमदा'—त्मकार्थयोः पृथिव्यादौ यः कालिकसम्बन्धस्तत्रातिव्याप्तिः, 'पदार्थस्मृत्यनुकूलत्वो'पादाने तु शक्ति'रूपसम्बन्धातिरिक्ता ये 'कालिकादि'सम्बन्धास्ते न शाब्दबोधजनकपदार्थस्मरणानुकूला इति तद्वारणम् । अर्थस्मृत्यनुकूलत्वस्याऽदृष्टादौ सत्त्वादतिव्याप्तिः, तद्वारणाय—पदपदार्थसम्बन्ध' इति, अदृष्टादिकं न पदपदार्थसम्बन्ध इति तद्वारणम् ॥ दीपिकायां—**पदार्थान्तरमिति** । मीमांसकैरीश्वराऽनङ्गीकारादीश्वरेच्छाया अप्यसंभवात्, पदगता शक्तिर्वह्निगतदाहजनकशक्तिरिव पदार्थबोधजनकं पदगतं पदार्थान्तरमिति भावः ॥ अत्र पदार्थान्तरत्वम्='तत्तत्पदार्थतावच्छेदकाऽभावकूटवत्त्वम्' । तत्तत्पदार्थतावच्छेदकं यत्—द्रव्यत्वं, गुणत्वं, कर्मत्वं, सामान्यत्वं, विशेषत्वं, समवायत्वं, अभावत्वं, चेति—तदभावः=द्रव्यत्वाभावः, गुणत्वाभावः, कर्मत्वाभावः, सामान्यत्वाभावः, विशेषत्वाभावः समवायत्वाभावः अभावत्वाभावश्चेति, तत्कूटः=सप्तानामभावानां समुदायः, स च न द्रव्यादिप्रत्येके, किन्त्वष्टमे शक्तिनामके पदार्थे, इति तदर्थः ॥ **तन्निरासार्थमिति** । मीमांसकमतनिरासार्थमित्यर्थः । **अस्मादितीति** । अस्मादि'तीद'—

घटादीनामपि सङ्केत एव शक्तिः न तु पदार्थान्तरमित्यर्थः॥ "गवादिशब्दानां जातावेव शक्तिः। विशेषणतया जातेः प्रथममुपस्थितत्वात्, व्यक्तिलाभस्त्वाक्षेपादिति केचित्" तन्न, गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्॥ शक्तिग्रहश्च वृद्धव्यवहारेण॥ तथा हि-व्यु-

---

मर्थस्य पदशब्दार्थेन सहाऽभेदेनाऽन्वयः। पञ्चम्या जन्यत्वमर्थः, तस्य बोद्धव्यैकदेशे बोधेऽन्वयः। कर्मणि विहितस्य'तव्यत्'प्रत्ययस्य विषयत्वमर्थः तथा च-'एतत्पदजन्यबोधविषयतावानयमर्थो भवतु,-इत्याकारिका पदप्रकारिकाऽर्थविशेष्यिकेश्वरेच्छा शक्तिरित्यर्थः। 'एतत्पद'निष्ठप्रकारतानिरूपित'जन्यत्व'निष्ठप्रकारतानिरूपित'बोध'निष्ठप्रकारतानिरूपित 'विषयत्व' निष्ठप्रकारतानिरूपित'विषयता'ऽऽश्रयोऽर्थ-इति बोधः। स्व(पद)जन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वं' पदस्याऽर्थे सम्बन्धः॥ **डित्थादीनामिवेति**। डित्थस्य काष्ठमयकरिविशेषे सङ्केतो यथा, तथा घटादिपदानामपि कम्बुग्रीवादिमति संकेत एव शक्तिरिति भावः। **न तु पदार्थान्तरमिति**। उक्तेश्वरेच्छात्मकसंकेतरूपक्लृप्तपदार्थातिरिक्तो न शक्तिपदार्थ इत्यर्थः॥ जातिशक्तिवादिनां मीमांसकानां मतं दर्शयति-**गवादीति**। गोपदस्य गोत्वे एव शक्तिः, यतो नैयायिकैर्जातिविशिष्टव्यक्तौ शक्तिः स्वीक्रियते, तत्रापि 'नाऽगृहीतविशेषण बुद्धिर्विशिष्टे चोपजायते'इतिन्यायेन-'विशेषणतया गोत्वादिजातेर्विशिष्टग्रहात्पूर्वमुपस्थितत्वात्, गोत्वविशिष्टाऽनन्तगोव्यक्तिषु शक्तिकल्पनामपेक्ष्य शुद्धगोत्वे शक्तिकल्पने लाघवाच्चेति, तथा च 'गोपदं-गोत्वे शक्त'मित्याकारकज्ञानस्यैव गोत्वविषयकशाब्दबोधे कारणत्वमिति भावः॥ नतु कथं तर्हि गवादिव्यक्तिबोध इत्यत आह-'**व्यक्तिलाभस्त्विति**॥ **आक्षेपादिति**। अर्थापत्तिप्रमाणादित्यर्थः। तथा हि-( गोत्वं गोव्यक्तिं विनाऽनुपलभ्यमानं सत् गोव्यक्तिं स्वाश्रयतया कल्पयती'त्यर्थापत्त्या ) अथवा-'आनयनकर्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वमन्तरेणाऽनुपपद्यमानं सत् स्वस्य गोवृत्तित्वमपि कल्पयतीति' अर्थापत्त्या गोव्यक्तिलाभ इति भावः॥ केचित्=मीमांसकाः॥ खण्डयति-**तन्नेत्यादिना** 'गौर्नष्टा' 'गौर्जाता' 'गामानये'त्यादौ समभिव्याहृताऽन्वयस्य जातौ बाधात्। न हि गोत्वं नश्यति जायते वा, न वा तत्राऽऽनयनादिक्रिया वर्तते, अतो गोत्वविशिष्टव्यक्तिरेव प्रतियोगितया नाशाद्यन्वयिशक्यार्थः, तस्माज्जातिविशिष्टव्यक्तावेव शक्तिरिति भावः॥ **किञ्च**-गोत्वे यदि शक्तिस्तदा 'गोत्वत्वं'-शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं च-'गवेतराऽसमवेतत्वे सति सकलगोसमवेतत्वम्, तत्र सकलगोव्यक्तीनां प्रवेशो भवतामप्यस्तीति तदपेक्षया लाघवात् गोत्वविशिष्टे शक्तिः, गोत्वं चैकमेव शक्यतावच्छेदकमिति॥ शब्दार्थस्तु-'गामानये'त्यादौ='गामानये'त्यादिवाक्यजन्यशाब्दबोधादौ, व्यक्तावेवाऽऽनयनकर्मत्वादेरन्वयसंभवेन वृद्धव्यवहाराऽधीनशक्तिग्रहेण-सर्वत्र जातिविशिष्टव्यक्तावेव शक्तिकल्पनादिति॥ 'व्यक्त्याकृतिजातयः पदार्थः' इतिगौतमसूत्रेणाऽपि जात्याकृतिविशिष्टव्यक्तावेव शक्तिकल्पनं न्याय्यं, न तु जातौ, नाऽप्याकृतौ, नाऽपि च व्यक्तौ पृथक्॥ आकृतिः-अवयवसंयोगः॥ **शक्तिग्रहश्च वृद्धव्यवहारेणेति**। शक्तिग्रहो वृद्धव्यवहारादिना

त्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे

---

भवतीत्यर्थः। तथा च कारिका—"शक्तिग्रहो व्याकरणोपमानकोशाऽऽप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति॥ प्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति। उपमानाच्छक्तिग्रहः—गोसादृश्यविशिष्टपिण्डदर्शनात्—संज्ञासंज्ञिसम्बन्धग्रहो भवति। कोशात्—'पिताम्बरोऽच्युतः शार्ङ्गी'त्यत्र पीताम्बरादिशब्दस्य श्रीकृष्णपरमात्मनि शक्तिग्रहः। आप्तवाक्यात्—'कोकिलः पिकपदवाच्य' इत्यस्मात् पिकपदस्य कोकिले शक्तिग्रहः॥ व्यवहारतश्च शक्तिग्रहं दर्शयति—व्युत्पित्सुरिति। व्युत्पित्सुः=शक्तिग्रहाभिलाषी॥ उत्तमवृद्धेति। प्रयोजकवृद्धेत्यर्थः। मध्यमवृद्धस्य=प्रयोज्यवृद्धस्येत्यर्थः॥ गवानयनं दृष्ट्वा प्रवृत्तिं चोपलभ्य—इत्यन्वयः। प्रवृत्तिमुपलभ्य—प्रवृत्तिमनुमायेत्यर्थः॥ अनुमानन्तु—'गवानयनक्रिया-प्रयत्नपूर्विका,—विलक्षणक्रियात्वात्,—स्वीयक्रियावत्' इत्येवं प्रवृत्त्यनुमानानन्तरम्—'गवानयनगोचरो यत्नः—गवानयनगोचरज्ञानजन्यः,—तद्गोचरयत्नत्वात्, 'यो यद्गोचरो यत्नः स तद्गोचरज्ञानजन्यः स्वीयस्तन्यपानयत्नव'दित्यनुमानेन गवानयनगोचरं ज्ञानमनुमाय—'गवानयनगोचरज्ञानम्— 'गामानये'तिवाक्यजन्यम्,—तदन्वयव्यतिरेकानुविधायित्वात्' यत्—यदन्वयव्यतिरेकानुविधायि तत् तज्जन्यं यथा दण्डान्वयव्यतिरेकानुविधायी घटः, इत्येवं आनयनक्रियाऽन्विते गोपदार्थे शक्तिं निश्चिनोतीति। इत्येवं प्रथमतः क्रियान्वितगवादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् क्रियाऽनन्विते जात्याकृतिविशिष्टव्यक्तिविशेषे एव शक्ति'रतिसिद्धान्तः॥ अन्वयव्यतिरेकाभ्यामिति। 'वाक्यश्रवणे सति गवानयनप्रवृत्तिजनकज्ञान'मित्यन्वयः, 'वाक्यश्रवणाऽभावे सति गवानयनप्रवृत्तिजनकज्ञानाऽभाव'इति व्यतिरेकः, ताभ्यामित्यर्थः॥ आवापोद्वापाभ्यामिति। आवापः=सङ्ग्रहः। उद्वापः=त्यागः। प्रथमं 'गामानये'तिवाक्येन आनयनक्रियां सङ्गृह्य क्रियान्विते शक्तिग्रहः, पश्चात् 'अश्वमानय-गां बधाने'ति गोकर्मकबन्धनघटितवाक्यश्रवणानन्तरं विजातीयमध्यमवृद्धक्रियाप्रवृत्त्या'आनयनान्विते' शक्तेस्त्यागो भवति, तदानीमानयनस्याऽश्रवणात्। किन्तु गोपदस्य गोत्वविशिष्टे गवि शक्तिः। अश्वपदस्य चाऽश्वत्वविशिष्टेऽश्वे शक्तिरिति। व्युत्पद्यते=व्युत्पत्तिमान् भवतीत्यर्थः॥ वाक्यस्य शेषात्—यथा'यवमयश्चरुर्भवती'त्यत्र 'यव'—शब्दस्य आर्याणां दीर्घशूके म्लेच्छानाञ्च कङ्गौ प्रयोगदर्शनादर्थसन्देहे 'वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन' इतिवाक्यशेषाद् दीर्घशूके शक्तिग्रहो भवतीति॥ विवरणाद्यथा—'घटोऽस्ति—कलशोऽस्ती'त्यत्र 'घटपदस्य कलशे शक्तिग्रहः॥ प्रसिद्धपदसान्निध्याद्यथा—'विकसितपद्मे मधूनि पिबति मधुकर'इत्यत्र पद्म मधु-पदसान्निध्यात् मधुकरस्य भ्रमरविशेषे शक्तिनिर्णय इति बोध्यम्॥

शक्तिः अश्वपदस्य अश्वत्वविशिष्टे शक्तिः, इति व्युत्पद्यते ॥ ननु सर्वत्र कार्यपरत्वाद्-व्यवहारस्य, कार्यवाक्ये एव व्युत्पत्तिः, न सिद्धे इति चेत्! न, 'काञ्च्यां त्रिभुवनतिलको भूपतिः' इत्यादौ सिद्धेऽपि व्यवहारात्। 'विकसितपद्मे मधूनि पिबति मधुकरः' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च ॥ लक्षणाऽपि शब्दवृत्तिः। शक्यसम्बन्धो लक्षणा 'गङ्गायां घोष' इत्यत्र 'गङ्गापदवाच्य-प्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते। सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम्। लक्षणा त्रिविधा–जहल्लक्षणा, अजहल्लक्षणा,

---

मीमांसकः शंकते–ननु सर्वत्रेति। अयं भावः–प्रथमं वृद्धव्यवहारेण यदि शक्तिग्रहस्तदा व्यवहारस्य कार्यपरवाक्ये एव दर्शनात् कार्यवाक्ये=आनयनादिक्रियाऽन्वितार्थबोधकवाक्ये एव, व्युत्पत्तिः=शक्तिग्रहः, न तु सिद्धे=न कार्यतावाच्चिपदनिराकांक्षे प्रसिद्धार्थकपदे,–शक्तिग्रह इति ॥ उत्तरयति–नेत्यादिना। 'काञ्ची'–'त्रिभुवनतिलकः'–'भूपति'श्चैते प्रसिद्धास्तत्राऽपि व्यवहारेण शक्तिग्रहो भवति, एवं–'विकसितपद्म'पदस्य'मधु'पदस्य च सान्निध्यात् सिद्धेऽपि मधुकरपदे शक्तिग्रहो भवतीति, अतः सिद्धेऽपि शक्तिग्रह आवश्यकः, अन्यथा तत्राऽनुभवसिद्धस्य शाब्दबोधस्याऽपलापाऽऽपत्तेः। निरूपकतासम्बन्धेन पूर्वोक्ता शक्तिः पदे वर्तते, विशेष्यताऽऽख्यविषयतासम्बन्धेन तु पदार्थे वर्तते इति बोध्यम् ॥ यथा शक्तिः पदपदार्थयोः सम्बन्धात्मिका काचिद्वृत्तिः तथा लक्षणापीति दर्शयितुमाह–लक्षणाऽपीति। लक्षणाया लक्षणम्––'शक्यसम्बन्धत्वम्—'तच्छक्तिशून्यत्वे सति तत्सम्बन्धिशक्तत्वमिति—यावत् ॥ समन्वयति–'गङ्गायां घोष'इति। अत्र गङ्गापदार्थः=भगीरथ–रथ–खाताऽवच्छिन्नजल-प्रवाहः, तस्य सामिप्यरूपसम्बन्धिनि तीरे'गङ्गा'पदस्य लक्षणा, तथा च तादृशसम्बन्धवदर्थबोधकं पदं लाक्षणिकमिति भावः। तत्र–'गङ्गातीरवृत्तितावान् घोप'इतिबोधः ॥ ननु गङ्गापदस्य प्रवाहे शक्तिः तीरे च लक्षणाऽङ्गीकृता, तथा तुल्ययुक्त्या सैन्धवादिपदानामेकत्र लवणे शक्तिरन्यत्राऽश्वे च लक्षणा स्वीकर्तव्या, तथा च सति सैन्धवादिपदानां नानाऽर्थवाचकत्वाऽनुपपत्तिरित्याशंकायामुत्तरयति–सैन्धवादाविति। तथा च लवणाऽर्थाऽश्वाऽर्थयोः परस्पर–सम्बन्धाऽकल्पनात्। तादृशे कुत्राऽप्यर्थे सैन्धवादिपदस्य न लक्षणा, किन्तु नानार्थे नानाशक्तिरिति भावः। एवं 'हरि'—पदेऽपि विष्णु सिंह-वानरेन्द्रादौ नानाशक्तिरिति बोध्यम् ॥ जहल्लक्षणेति। जहतीति-जहति, जहति स्वानि ( पदानि ) यं,–सः=जहत्स्वः, जहत्स्वः–अर्थो यस्यां सा–इति। व्युत्पत्त्या–शक्यार्थसम्बन्धिमात्रबोधजनिकेति बोध्या ॥ अजहल्लक्षणेति। न जहतीति अजहति, अजहति स्वानि यं सः, तादृशोऽर्थो यस्यां से'ति–व्युत्पत्त्या शक्यार्थलक्ष्यार्थोभयविपयकबोधजनिकेति बोध्या ॥ जहदजहल्लक्षणेति। जहति च अजहति च–जहदजहति,–जहदजहति स्वानि यं सः, तादृशः अर्थो यस्यां सेति-व्युत्पत्त्या शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधजनिकेति बोध्या ॥ तत्र जहल्लक्षणामाह—यत्रेति। 'मञ्चाः क्रोशन्ती'त्यत्र 'मञ्च' पदवाच्यार्थस्य मञ्चस्य

जहदजहल्लक्षणा चेति। यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा, यथा 'मञ्चाः क्रोशन्ति'। यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति, यथा-छत्रिणो गच्छन्ति'। यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति, यथा 'तत्त्वमसीति'। गौण्यपि लक्षणैव, लक्ष्यमाणगुणसम्बन्धस्वरूपा। यथा 'अग्निर्माणवक इति।

---

क्रोशनकर्तृत्वाऽन्वयाऽसंभवेन 'मञ्च'पदं मञ्चस्थपुरुषे लाक्षणिकमिति भावः॥ अजहल्लक्षणामाह–**यत्रेति**। वाच्यार्थस्या'ऽपी'त्यपिना लक्ष्यार्थस्य सङ्ग्रहः।'छत्रिणो यान्ती'त्यत्र छत्र्यछत्रिषु गच्छत्सु छत्रिणां बाहुल्येन छत्रिणो यान्तीत्यच्छत्रिषु यानकर्तृत्वाऽनुपपत्त्या'छत्रि' पदं अजहत्स्वार्थलक्षणया छत्र्यछत्र्युभयबोधकमिति भावः॥ जहदजहल्लक्षणामाह--**यत्रेति**। 'तत्त्वमसी'त्यत्र 'तत्'पदवाच्ये सर्वज्ञत्वादिविशिष्टात्मनि 'त्वं'पदवाच्याऽल्पज्ञत्वादिविशिष्टात्मनोऽभेदानुपपत्त्या उभयत्र एकदेशस्य=सर्वज्ञत्वस्याऽल्पज्ञत्वस्य च परित्यागेन उभयत्राऽवशिष्ट'य 'तत्'पदलक्ष्यस्य 'त्वं'पदलक्ष्यस्यैकदेशस्यात्मनोऽभेदेनाऽन्वय इति। इदमद्वैतानां मतेनोदाहरणम्। नैयायिकमते तु–'सोऽयं देवदत्त'इत्यत्र शुद्धदेवदत्तस्य, बोधो भवति, परोक्षत्वरूपतत्तांशस्य सन्निकृष्टत्वरूपेदन्त्वांशे देवदत्तेऽन्वयाऽनुपपत्तेस्तत्र तत्तांशस्य हानं इदन्तांशस्याऽहानमिति जहदजहल्लक्षणयेति बोध्यम्। **गौण्यपीति**। गौणी नाम सादृश्यविशिष्टे लक्षणा, सा च द्वेधा, एका–इदमादिपदविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा, यथा–'सिंहोऽय'मित्यत्र सिंहसादृश्यबोधिका, सेयं 'साध्यवसानिके'त्युच्यते॥ **अत्र लक्ष्यमाणेति**। लक्ष्यमाणो यो गुणः विलक्षणपराक्रमक्रूरतादिः, तत्सम्बन्धः–आश्रयत्वरूपः तद्रूपा **बोध्या**॥ द्वितीयातु–'इदमादिपदभिन्नविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा,यथा 'अग्निर्माणवक'इत्यत्र शुचित्वादिगुणसदृशगुणवत्त्वबोधिकेति॥ आलङ्कारिकाः पुनरेवमाहुः—'तीरे घोष' इतिप्रयोगे स्वाधीने सम्भवत्यपि'गङ्गायां घोष'इति अनन्वितप्रयोगकरणं शैत्यपावनत्वादिव्यञ्जनार्थम्, तत्र गङ्गापदे जहल्लक्षणया तीरबोधे सत्यपि शैत्यपावनत्वादि प्रतीत्यर्थं 'व्यञ्जना'नाम्नी वृत्तिरवश्यं मन्तव्येति। सा च शब्दशक्तिमूला, अर्थशक्तिमूला च। तत्र शब्दशक्तिमूलां निरस्यति–'**व्यञ्जनाऽपीति**। **शक्तिलक्षणान्तर्भूतेति**। अयं भावः–व्यञ्जके पदे नानार्थबोधकत्वं यदि, तदा तत्र 'दूरस्था भूधरा रम्या'इत्यत्र भूधरपदेन शैलानामिव नृपतीनामपि शक्त्यैव बोधो निर्वहेत् अतो व्यञ्जना शक्त्यन्तर्भूता, गङ्गायां घोष' इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिर्जहल्लक्षणयैव निर्वहति, तत्र शैत्यपावनत्वादिविशिष्टतीराऽधिकरणकघोषतात्पर्येण प्रयुक्तत्वान्वयात् तथाविधतीररूपार्थस्य बोधे तत्तात्पर्याऽनुपपत्त्यात्मकबीजसत्त्वादिति, अतो लक्षणान्तर्भूता सा॥ **शब्दशक्तिमूला=शब्दस्य** गङ्गापदस्य या प्रवाहे शक्तिः सैव मूलं यस्याः सेतिविग्रहः॥ ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि 'अर्थशक्तिमूला'व्यञ्जना नाऽन्यथासिद्धा, अर्थस्य=तात्पर्यविषयीभूतार्थस्य या तात्पर्यविशेषबोधकतारूपा शक्तिः सैव मूलं यस्याः सेतिविग्रहः॥ '**गच्छ गच्छसि चेत्!** कान्त! पन्थानः सन्तु मे शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवानि'त्यत्र

व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च अनुमानादिना अन्यथासिद्धा। तात्पर्यानुपपत्तिर्लक्षणाबीजम्। तत्प्रतीतीच्छया उच्चरितत्वरूपतात्पर्य-ज्ञानं च वाक्यार्थज्ञाने हेतुः, नानार्थानुरोधात्। प्रकरणादिकं तात्पर्यग्राहकम्।

---

'हे प्रिय! भवद्गमनोत्तरं मम प्राणवियोगो भविष्यत्यतो न गन्तव्य'मित्याद्यर्था व्यज्यन्ते, इह जन्मपदस्य गमनाभावे शक्तिः, न तु जन्मपदशक्यमरणसम्बन्धमादाय गमनाभावे लक्षणा, अतात्पर्यार्थत्वात्, अतो न शक्तिलक्षणान्यतराभ्यामिह निर्वाह इति पूर्वपक्षे उत्तरयति— **अर्थशक्तिमूला चेति**। चः–त्वर्थे॥ **अनुमानादिनेति**। 'इयं–मदीयगमनोत्तरकालीनप्राण-वियोगवती,–विलक्षणशब्दप्रयोक्तृत्वात्, यन्नैवं तन्नैवं यथा–'गच्छ गच्छसि चेत्! कान्त! मा विशङ्कस्व मत्कृते। त्वयाऽर्जितानि भोग्यानि भोक्ष्येऽहं भाग्यशालिनी'त्युच्चारणकर्त्री स्त्री। इत्येवं व्यञ्जनासम्पादनीयार्थस्याऽनुमानेनैव लाभादर्थशक्तिमूलापि व्यञ्जनाऽन्यथासिद्धा॥ अनुमानादिनेत्यत्रादिना 'संभावना'सङ्ग्रहः, तथा च क्वचित् सम्भावनयैव तादृशार्थलाभेन व्यञ्जनाऽन्यथासिद्धेति। 'संभावना तु—उत्कटैककोटिकसंशयः, उत्कटत्वं विषयताविशेषइति॥ यदि तु 'शब्दादमुमर्थं प्रत्येमो'ति स्वारसिकप्रत्ययस्तदा व्यञ्जनाया वृत्तित्वनिराकरणं वाचस्पतीनाम-प्यशक्यमिति मन्तव्यम्। (व्यञ्जनालक्षणं–मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बन्धाऽ-सम्बन्धसाधारणं प्रसिद्धाऽप्रसिद्धाऽर्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो-व्यञ्जनेति) लक्षणाया बीजं यद्यन्वयाऽनुपपत्तिः, तदा–'यष्टीः प्रवेशये'त्यादौ यष्टिपदस्य यष्टिधरेषु लक्षणाविलयप्रसङ्गः, तत्राऽन्वयस्य निराबाधात्, किन्तु—तात्पर्याऽनुपपत्तिरेव लक्षणा-बीजम्, तच्च तत्राऽस्ति, अतो यष्टिपदस्य यष्टिधरेषु लक्षणा संभवतीत्याशयेन तत्पर्याऽनुपपत्तिरेव लक्षणाबीजमिति दर्शयति—**तात्पर्याऽनुपपत्तिरिति**॥ पदविशेष्यक–स्वशक्यार्थबोधेच्छा-प्रयोज्योच्चरितत्वाभावनिर्णय इत्यर्थः। लक्षणाबीजम्=लक्षणाज्ञानं प्रति हेतुज्ञानविधया प्रयोजकम्, तद्यथा–'गंगादिपदम्–तीरादिलक्षकम्,–स्वशक्यार्थविषयकबोधेच्छाप्रयोज्योच्चारणविषयत्वाऽभाव-वत्त्वे सति बोधजनकत्वात्'इति। तात्पर्यस्वरूपं **प्रदर्शयति—तत्प्रतीतीति**। 'तीरादिरूपार्थप्रती-तीच्छयोच्चरितत्वं तीरतात्पर्यम्, तज्ज्ञानं वाक्यार्थज्ञाने=शाब्दबोधे हेतुः॥ 'हरिं पश्ये'त्यादिना-नार्थकस्थले हरिपदस्य सिंहे वानरे श्रीकृष्णे देवेन्द्रे च शक्तेस्तुल्यतया शाब्दबोधे तात्पर्यज्ञानस्य कारणत्वं विना एकैकार्थमात्रविषयकशाब्दबोधो न सम्भवति। अतस्तत्र तात्पर्यज्ञानमवश्यं कारणं तथा च तस्य सर्वत्रैव कारणत्वं युक्तमित्याह—**नानार्थानुरोधादिति**॥ मौनिश्लोकादावपि तत्प्रतीतीच्छात्मकतात्पर्यमस्त्येव। वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्येते। शुकवाक्येऽपीश्वरीय-**तात्पर्यज्ञानं** कारणम्॥ संवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम्॥ **प्रकरणादिकमिति**। भोजनप्रकरणं यथा'सैन्धवमानये'त्यत्र लवणतात्पर्यग्राहकम्। आदिपदेन विशेषणमपि तात्पर्यग्राहकं बोध्यं यथा'सकेसरो गर्जनघोषकारी मृगाधिराजो हरिरेत्यकस्मा'दित्यादौ सकेसरत्वादिविशेषणत्रयं हरिपदस्य सिंहे तात्पर्यग्राहकम्। प्रकरणादेः–'इदं सैन्धवपदं–लवण-

'द्वार'-मित्यादौ 'पिधेही'ति-शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वात् शब्दस्यार्थम-विज्ञाय शब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इति चेत्! न, पदविशेषजन्य-पदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृति': इत्य-त्रापि शाब्दज्ञानप्रसङ्गात्॥पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः, समुदायशक्ती

---

बोधेच्छयोच्चरितम्,-भोजनप्रकरणोक्तत्वादित्येवं प्रकरणेन लिङ्गेन तात्पर्यग्रहो भवतीति भावः॥ आसत्तिज्ञानस्य शाब्दबोधहेतुत्वं दर्शयति-द्वारमित्यादावित्यनेन॥ यथाऽवतरणिका-अन्वय-प्रतियोग्यनुयोगिपदयोरव्यवधानम्-आसत्तिः, तज्ज्ञानं शाब्दबोधे कारणम्। 'गौर्गच्छती'त्यत्र 'गौ'रित्यनुयोगिपदस्य 'गच्छती'तिप्रतियोगिपदस्य चाऽव्यवधानज्ञानेन 'गमनानुकूलकृतिमती गौ'रिति बोधो भवतीति।. तत्र पदजन्यपदार्थोपस्थितिः-तत्तच्छाब्दबोधे हेतुः' न तु केवला पदर्थापस्थितिः॥ प्राभाकरास्तु-'नहि शाब्दबोधे पदजन्यपदार्थोपस्थितिः'कारणं, किन्तु लाघवेन 'पदार्थोपस्थिति'रेव कारणम्, अत एव 'द्वार'मित्युक्तौ 'पिधेहीति-पदाध्याहारो न भवति, किन्तु 'पिधान'रूपाऽर्थाध्याहार एवेति-वदन्ति। तन्मतं दूषयितुं स्वसिद्धान्तं दर्शयति-'द्वार'मित्यादौ 'पधेही'ति शब्दाध्याहार इति। अयं भावः-यदि केवला पदार्थोपस्थितिरङ्गीक्रियते तदा तत्र मते प्रत्यक्षादिनोपस्थितानां तत्तत्पदार्थानां पदज्ञानं विनैव शाब्दबोधापत्तिः स्यात्। मन्मते तु तत्र पदाभावात् पदजन्या पदार्थोपस्थितिर्नास्त्यतो न शाब्दबोधः, किन्तु प्रमाणान्तरेणानुभूतपदार्थोपस्थितौ सत्यां प्रत्यक्षमेव भवतीति। अतो 'द्वार'मित्युक्तौ 'पिधेहिं'तिशब्दस्यैवाऽध्याहारो न तु'पिधान'रूपाऽर्थाध्याहार इति तत्त्वम्॥ प्राभाकरः शङ्कते-नन्वर्थेति। अयंभावः-शब्दस्य अर्थज्ञानफलकत्वात् 'अर्थं बुद्ध्वा वाक्य-रचने'तिन्यायेन प्रथमतोऽर्थानुसंधानं विना शब्दानुसन्धानस्याऽसंभवेन प्रथमतोऽर्थाध्याहार एव युक्त इति। तत्रोत्तरयति-पदविशेषेति। 'अर्थं बुद्ध्वा वाक्यरचने'त्यत्रापि 'अर्थं बुद्ध्वे' त्यत्राऽर्थबोधार्थं प्रथमं शब्दोऽपेक्षितः, विना शब्दमर्थबोधो न भवति, यदि शब्दं विनाऽप्यर्थ-बोधो भवेत्, तदा तादृशार्थबोधप्रतिपादकशब्दरचनैव नोपपद्येत, अतः पदजन्यपदार्थोपस्थितिरेव शाब्दबोधे हेतुः, पदजन्यपदार्थोपस्थितौ च पदस्य हेतुता, तथा च पदाध्याहार आवश्यक इति, तेन 'द्वारं पिधेहि'त्यत्र द्वारकर्मकपिधानक्रियाऽनुकूलकृतिमाँस्त्व'मितिशाब्दबोध इति॥ अन्यथेति। पदार्थोपस्थितौ पदविशेषजन्यत्वानुपादाने-इत्यर्थः। 'घटः कर्मत्वमानयनं कृति'-रित्यत्र 'घटकर्मत्वा'द्युपस्थितेः सत्त्वेन शाब्दबोधाऽऽपत्तिः स्यात्। न्यायमते तु 'घटा'दिपदोत्त-रा'ऽमा'दिपदज्ञानजन्योपस्थितेरसत्त्वेन न तादृशवाक्येन शाब्दबोधापत्तिरिति भावः॥ पदं चतुर्विधं-यौगिकं रूढं योगरूढं यौगिकरूढं चेति, तत्र योगरूढस्य निरूपणेन तदन्तर्गतयौगिक-रूढयोः स्वरूपाऽवगमात् यौगिकं रूढं यौगिकरूढं चापि तद्रीत्याऽन्यत्र विज्ञातं भवत्येवेत्या-शयेन योगरूढिं दर्शयति- पङ्कजादीति। यत्राऽवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् यथा-पङ्कजादिपदम्, तत्राऽवयवशक्त्या पङ्कजनिकर्तृत्वरूपमर्थं बोधयति समुदाय-शक्त्या च पद्मत्वेन रूपेण पद्मं बोधयतीति, शास्त्रकल्पिताऽवयवार्थाऽन्वितविशेष्यभूताऽर्थनिरूपिता

रूढिः, नियतपद्मत्वज्ञानार्थं समुदायशक्तिः; अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः। 'इतरान्विते शक्तिः' इति प्राभाकराः। 'अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न कल्पनीया' इति गौतमीयाः॥

शक्तिः= **योगरूढिः** ॥ **अवयवशक्तिर्योग इति**। शास्त्रकल्पिताऽवयवार्थनिरूपिता शक्तिर्योग इत्यर्थः, अवयवार्थबोधजनकं पदं—यौगिकं,—यथा—पाचकादिपदम् ॥ **समुदायशक्ती रूढिरिति**। शास्त्रकल्पिताऽवयवार्थभानाऽभावे समुदायार्थनिरूपितशक्तिरित्यर्थः, यत्राऽवयवशक्तिनिरपेक्षया समुदायशक्त्यैव बोधो भवति तद्—रूढं, यथा—'गोमण्डला'दिपदम् ॥ यत्र यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्—यौगिकरूढम्, यथा—उद्भिदादिपदम्, तत्रोद्भेदनकर्ता तरुगुल्मादिर्योगविशेषोऽपि च बुद्धयते, शास्त्रकल्पिताऽवयवार्थ—समुदायार्थयोः स्वतन्त्रशक्तिः— **यौगिकरूढिरिति** ॥ पदं हि तत्तच्छक्तिविशिष्टत्वेन तत्तन्नाम्नोच्यतेऽतश्चतुर्धा बोध्यम् ॥ ननु पङ्कजादिपदेऽपि योगशक्त्यैव निर्वाहोऽस्त्वित्याशङ्क्य तत्रोत्तरयति— **नियतेति**। पङ्कजपदस्य पद्मत्वावच्छिन्ने समुदायशक्तिमन्तरेण शाब्दबोधे नियतपद्मत्वावच्छिन्नभानं न स्यात् कुमुदादीनामपि केवलाऽवयवशक्त्या कदाचित् पङ्कजनिकर्तृत्वेन बोधःसम्भवतीतिभावः॥ **अन्यथेति**। नियतपद्मत्वावच्छिन्नभानोपयोगिसमुदायशक्त्यनङ्गीकारे—इत्यर्थः। कुमुदेऽपि 'पङ्कज'पदप्रयोगाऽऽपत्तिः स्यादित्यर्थः॥ 'अन्वितेशक्ति'रितिप्राभाकरमतं दर्शयति— **इतराऽन्विते**—इति। 'अन्विते शक्ति'रिति तदर्थः, अन्वयस्य इतरनियतत्वेन 'इतरांश'स्याऽव्यावर्तकत्वात् ॥ तथा चाऽयं **भावः**= **प्राभाकरैः**—अन्वितार्थे यथा शक्तिः, तथा अन्वयांशेपि शक्तिरङ्गीक्रियते. अन्वयो नाम—पदार्थयोः संसर्गः, तथा च—'अन्वितः (सम्बन्धवान्) घटो घटपदशक्यः'—इत्याकारकशक्तिज्ञानमेव पदार्थद्वयसंसर्गविषयकशाब्दबोधे कारणम्, संसर्गांशमनन्तर्भाव्य 'घटो घटपदशक्य'इत्याकारकशक्तिग्रहस्य तादृशशाब्दबोधकारणत्वे तु अशक्यस्यापि तस्य (पदार्थसंसर्गस्य) तादृशशक्तिज्ञानजन्यशाब्दबोजविषयत्वे 'घट'मित्यादौ प्रमेयत्वादेरपि शाब्दबोधविषयत्वापत्तिः स्यात्, अतः—वृत्ति(शक्ति)ज्ञानीयतद्विषयताया एव शाब्दबोधीयतद्विषयताप्रयोजकता स्वीकर्तव्या, तथा च पदार्थद्वयसम्बन्धांशेऽप्यवश्यं शक्तिरङ्गीकर्तव्या—इति ॥ पदार्थद्वयसंसर्गरूपाऽन्वयांशस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसंभवेन तादृशाऽन्वयांशे शक्तिकल्पनं निर्युक्तिकमिति नैयायिकमतं दर्शयति—**अन्वयस्येत्यादिना**। अन्वयस्य=पदार्थद्वयसंसर्गस्य, वाक्यार्थतया=शब्दबोधे विषयतया, भानमाकाङ्क्षाबललभ्यत्वादुपपद्यतेऽतस्तत्र शक्तिर्न कल्पनीयेत्यर्थः॥ एवं तत्तच्छक्तपदज्ञानजन्या या पदार्थोपस्थितिस्तज्जन्यतत्तदर्थविषयकशाब्दबोधरूप एकः कार्यकारणभावः, तत्तल्लाक्षणिकपदज्ञानजन्या या पदार्थोपस्थितिस्तज्जन्यतत्तदर्थविषयकशाब्दबोधरूपोऽपरः, तादृशोभयविधशाब्दबोधं प्रति वृत्तिज्ञानाऽधीनतदुपस्थितित्वेनाऽनुगतैककार्यकारणभावस्तु शक्तिलक्षणोभयसाधारणस्य लघुभूतस्याऽनुगतस्य वृत्तित्वस्य दुर्वचत्वात् न संभवति, किन्तु परस्परजन्ये व्यभिचारवारणाय तत्तच्छक्तपदज्ञानजन्यतत्तदुपस्थित्यव्यवहितोत्तरजायमानतत्तद्विषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तच्छक्त-

पदज्ञानजन्यतत्तदुपस्थितित्वावच्छिन्नं कारणम्, एवं तत्तल्लाक्षणिकपदज्ञानजन्यतत्तदुपस्थित्यव्यवहितोत्तरजायमानतत्तद्विषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तल्लाक्षणिकपदज्ञानजन्यतत्तदुपस्थितित्वावच्छिन्नं कारणम्। एवं च 'वृत्तिज्ञानाऽऽधीनोपस्थितेः शाब्दबुद्धिं प्रति कारणत्वमेवाऽलीकं' यं कार्यकारणभावमवलम्ब्य प्राभाकरमते "अन्वयांशे शक्तिं विना अन्वयस्य शाब्दबोधे भानाऽनुपपत्तिरूपाऽऽपत्तिभिया अन्वयांशे शक्तिकल्पनं युक्तं भवेत्, अतोऽन्वयांशे शक्तिकल्पनं न न्याय्यमिति। अधिकं शक्तिवादेऽवलोकनीयम् ॥

**आकांक्षा (१)योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्ताऽन्वयाऽननुभावकत्वम्–आकांक्षा। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकांक्षादिरहितं वाक्यमप्रमाणम्। यथा—'गौरश्वः पुरुषो हस्ती'ति न प्रमाणम्, आकांक्षाविरहात्। 'वह्निना सिञ्चेदि'ति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि 'गामानये'त्यादिपदानि न प्रमाणम्, सान्निध्याभावात्**

(न्या॰) आकाङ्क्षां लक्षयति—पदस्येति अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा। यथा 'घटमि'त्यादिस्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेन 'अम्' पदं 'घट' पदवदित्याकारका'ऽम्'-पदविशेष्यक'घट'पदप्रकारकज्ञानसत्त्वे 'घटीयं कर्मत्वमि'ति बोधोजायते। 'अम् घट' इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते। अतस्तादृशाकांक्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाधइति। बाधाभावो योग्यतेत्यर्थः। 'अग्निना सिञ्चेदि'त्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। सन्निधिं निरूपयति—पदानामिति। असहोच्चारितानि = विलम्बोच्चारितानि ॥

(१) आकांक्षा—पदगता, सा च—'यत्पदस्य यत्पदविरहप्रयोज्यशाब्दबोधजनकत्वाऽभाववत्त्वं तत्पदे तत्पदवत्त्व'रूपा, प्रकृति–प्रत्यययोः साकांक्षत्वात् पदवत्ता—अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वाऽन्यतरसम्बन्धेन। आधेयत्वसंसर्गेण घटप्रकारककर्मताविशेष्यकशाब्दबोधं प्रति 'घट'पदाऽव्यवहितोत्तरा–'ऽम्'-पदत्वाऽऽगकाऽऽकांक्षाज्ञानं कारणम्, 'अम्'–पदा-

( प० ) (१) असम्भववारणाय—पदान्तरव्यतिरेकप्रयुक्त इति । पुनरसम्भव-वारणाय—पदान्तरेति । अर्थेति, आकांक्षावारणाय अर्थेति । पदानामिति । असहोच्चारितेष्वतिव्याप्तिवारणाय—अविलम्बेनेति । आकांक्षावारणाय-पदानामिति । आकांक्षादिशून्यवाक्यस्याऽत्र प्रमाणत्वं निषेधयति—तथा चेति । आकांक्षादिकं शाब्दहेतुरित्युक्ते चेत्यर्थः । आकांक्षाद्युदाहरणं दर्शयति –यथेति ॥

( दी० ) आकांक्षेति । आकांक्षादिज्ञानमित्यर्थः । अन्यथा आकांक्षादिभ्रमा-

---

(कि०) कारणनिश्चयात् कार्यनिश्चयः, कारणभ्रमाच्च कार्यभ्रमः, शाब्दबोधं प्रत्याकाङ्क्षादीनां स्वरूपसतां कारणत्वे तत्तत्पदसमभिव्याहृततत्तत्पदत्वात्मकधर्मरूपाया आकांक्षाया असत्त्वेन 'घट'इत्यत्र घटकर्मत्वविषयकशाब्दभ्रमो नोपपद्येत अत आकाङ्क्षादीनां लक्षणयाऽऽकाङ्क्षाज्ञान-परत्वं दर्शयति—आकांक्षादिज्ञानमित्यर्थ इति । तेन आकाङ्क्षाज्ञानं, योग्यताज्ञानं,

---

व्यवहितपूर्ववृत्ति'घट'पदत्वरूपाऽऽकांक्षाज्ञानं वा कारणम् । योग्यता—अर्थगता, सा च—'एकपदार्थेऽपरपदार्थवत्त्वरूपा ॥ आसत्तिः—पदसमूहनिष्ठा, सा च—अव्यवधानेन पदोच्चारणप्रयुक्तसन्निधिरूपा, शाब्दबोधाऽनुकूलपदविशिष्टपदत्वात्मकाऽनुपूर्वीरूपेति यावत् । वैशिष्ट्यं—स्वाऽव्यवहितपूर्वत्व-स्वाऽव्यवहितोत्तरत्वाऽन्यतररूपेण बोध्यम् ॥

(१) पदवृत्त्याकांक्षालक्षणस्य व्यावृत्तिं प्रदर्शयति—असंभववारणायेति । तथा च—'गाम्' इति पदस्य-स्वान्तर्गत'गो'पदस्य 'अम्'पदे 'अम्'पदस्य 'गो' पदे वाऽन्वयबोधजनकत्वेन अन्वयबोधाऽजनकत्वाद्यात्मकाऽऽकांक्षालक्षणस्यैवाऽनुपपन्नत्वेन तादृशलक्षणलक्ष्याऽऽकांक्षाविरहात् 'गाम्'इत्यादिवाक्येन शाब्दबोध एव न स्यादित्यसंभवाऽभिप्रायः । अतः—पदान्तरव्यतिरेकप्रयुक्तेत्युक्तम्, तथा च पदान्तरस्य='अम्'इत्यादेः व्यतिरेकेण'गो'पदस्याऽन्वयबोधाऽजनकत्वसंभवेन'एकपदे अपरपदवत्त्वा'त्मकाऽऽकांक्षालक्षणस्य तत्र गमनात् आकांक्षासत्त्वेन भवति शाब्दबोध–इति ॥ पुनरसंभवेति । 'पदान्तरे'त्यनुपादाने 'गाम्'इत्यादौ 'गो'पदस्य सामान्यतोऽभावप्रयुक्ताऽन्वयाऽननुभावकत्वस्यैवाऽप्रसिद्धत्वात् तादृशलक्षणलक्ष्याऽऽकांक्षैव पदे न स्यात् तेन शाब्दबोधो न स्यादित्यभिप्रायः ॥ पदान्तरोपादाने तु 'अम्' इति यत्पदान्तरं तद्व्यतिरेकप्रयुक्ताऽन्वयाऽननुभावकत्वसत्त्वेन नोक्तदोष इति भाव. ॥ आकांक्षावारणाय -अर्थेतीति । 'अबाधत्व'मात्रस्य लक्षणत्वे—अव्यवहितोत्तरत्वादिसंसर्गेण पदे पदाऽभाववत्त्वं—बाधः, तादृशसंसर्गेण पदे पदाभावाऽभाववत्त्वं—अबाधः, 'अर्थ'पदाऽनुपादाने पदे तादृशाऽबाधस्याऽपि योग्यतात्वाऽऽपत्तिः, अतः—'अर्थ'पदोपादानम्, तथा च तादृशाऽबाधस्य अर्थाऽनिष्ठतया न-तत्राऽतिव्याप्तिरिति भावः ॥ आकांक्षावारणाय—पदानामिति । 'पदानामि'—त्यनुक्तौ 'गाम्'—इत्येकपदे 'गो'पदनिष्ठा—'ऽम्'पदवत्त्वरूपाऽऽकांक्षायामतिव्याप्तिः स्यात् । 'पदानामि'—त्युक्तौ तु एकपदस्य पदसंमूहत्वाऽभावेन'गो'पदनिष्ठा—'ऽम्'—पदवत्ताया आसत्तित्वमेव न सम्पद्यते; आसत्तेः पदसमूह-( वाक्य ) निष्ठत्वात् ॥

च्छाब्दभ्रमो न स्यात् । आकांक्षां लक्षयति–पदस्येति । योग्यतालक्षणमाह–अर्थेति । सन्निधिलक्षणमाह–पदानामिति । अविलम्बेन पदार्थोपस्थितिः सन्निधिः । उच्चारणं तु तदुपयोगितायां उक्तम् । 'गौः अश्वः इति।'घटःकर्मत्व'मित्यप्यनाकांक्षोदाहरणं द्रष्टव्यम्॥

---

सन्निधिज्ञानं, शाब्दबोधकारणमिति बोध्यम् ॥ **अन्यथेति** । आकाङ्क्षादीनामाकांक्षाज्ञानरूपार्थाऽकरणे इत्यर्थः ॥ **पदस्येतीति** । यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाऽजनकत्वं-तंत्पदसमभिव्याहृततत्पदत्वं=आकाङ्क्षा । 'राज्ञः पुरुष'इत्यादौ षष्ठ्यन्तराजपदस्य पुरुषपदाऽभावप्रयुक्तमन्वयबोधाऽसमर्थत्वमस्ति, अतः राजपदसमभिव्याहृतपुरुषपदत्वम्–आकाङ्क्षा । एवं घट'मित्यत्र 'घट'पदस्य 'अम्'पदाऽभावप्रयुक्तमन्वयबोधाऽसमर्थत्वम् अतो 'घटपदसमभिव्याहृताऽम्पदत्वम्–आकाङ्क्षा । लक्षणे प्रयुक्तत्वं नाम—'कारणाऽभावात् कार्याऽभाव' इत्याकारकप्रतीतिबोधकः स्वरूपसम्बन्धविशेष इति । अननुभावकत्वान्तम्–तादृशसम्बन्धार्थद्योतकमित्यर्थः ॥ **केचित्तु**—'एकपदार्थज्ञाने तदर्थान्वययोग्याऽपरार्थस्य यज्ज्ञानं तद्विषयिणीच्छा'–आकाङ्क्षा–इति–वदन्ति ॥ मूले-**अर्थाऽबाधो योग्यतेति** । एकपदार्थाऽनुयोगिकाऽपरपदार्थप्रतियोगिकसम्बन्धो योग्यतेत्यर्थः । संशयनिश्चयसाधारणशाब्दबोधं प्रति संशयनिश्चयोभयसाधारणं योग्यताज्ञानं कारणमितिभावः ॥ 'अर्थबाधाऽभावो योग्यते'ति नवीनमतेतु स्वरूपसती एव योग्यता शाब्दबोधे हेतुरिति बोध्यम् । **अविलम्बेनेति** । अन्वयप्रतियोग्यनुयोगिबोधकपदयोरव्यवधानेनोपस्थितिः–सन्निधिरित्यर्थः । सन्निधिज्ञानं शाब्दबोधे हेतुः । उच्चारणं तु सन्निध्युपयोगितया मूलेऽभिहितं न तु लक्षणान्तर्गतमिति भावः ॥ विपरीतान्युदाहरणान्याह...'**गौरश्व**'... इत्यादीनि । तत्र गोपदस्याऽश्वपदाभावप्रयुक्ताऽन्वयबोधाऽजनकत्वं नास्ति, अतस्तत्राऽऽकाङ्क्षाविरहात्तन्न प्रमाणम् । एवं 'घटः कर्मत्वम्–आनयनं कृति'रित्यादौ घटपदस्य कर्मत्वपदाऽभावप्रयुक्ताऽन्वयबोधाऽजनकत्वं नास्तीत्याकाङ्क्षाविरहात् तन्न प्रमाणम् । एवम्—'अग्निना सिञ्चे'दित्यत्र सेके वह्निकरणकत्वस्य बाधात् योग्यताऽभावात् तद्वाक्यं न प्रमाणम् । एवम् प्रहरान्तरे उच्चरिते'गाम्'......'आनये'त्यादौ अव्यवधानेनोपस्थितेरभावात् तद्वाक्यं न प्रमाणमितिभावः ॥

**वाक्यं द्विविधम्-वैदिकं, लौकिकं च । वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम् ॥वाक्यार्थज्ञानं शाब्दज्ञानम्, तत्करणं शब्दः, ।**

**इतिशब्दप्रमाणम् ॥**

(न्या०) **वैदिकमिति** । वेदवाक्यमित्यर्थः ॥ इदमुपलक्षणम् । वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि । **लौकिकं त्विति** । वेदवाक्यभिन्न-

मित्यर्थः । आप्तत्वं च—प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ।

॥ इतिन्यायबोधिन्यां शब्दपरिच्छेदः ॥

(प०) नन्वेतावता शाब्दसामग्री प्रपञ्चिता । प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह—वाक्यार्थेति । शाब्दत्वं च 'शब्दात्प्रत्येमी'त्यनुभवसिद्धा जातिः । शाब्दबोधक्रमो यथा—'चैत्रो ग्रामं गच्छती'त्यत्र—'ग्रामकर्मकगमनानुकूलवर्तमानकृतिमांश्चैत्र'इति शाब्दबोधः । द्वितीयायाः कर्मत्वमर्थः । धातोर्गमनम् । अनुकूलत्वं च संसर्गमर्यादया भासते । लटो वर्तमानत्वमाख्यातस्य कृतिः । तत्सम्बन्धः संसर्गमर्यादया भासते ॥ 'रथो गच्छती'त्यत्र 'गमनानुकूलव्यापारवान् रथ'इति शाब्दबोधः॥ 'स्नात्वा गच्छती'त्यत्र- 'गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमानकृतिमानि'ति शाब्दबोधः । क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः। एवमन्यत्रापि वाक्यार्थो बोध्यः ॥

॥ इति पदकृत्यके शब्दपरिच्छेदः ॥

(दी०) वाक्यं विभजते—वाक्यमिति। वैदिके विशेषमाह—वैदिकमीश्वरोक्तत्वादिति । ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेत् ? न, वेदः-पौरुषेयः वाक्यसमूहत्वात्,-भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः । न च स्मर्यमाण-

---

(कि०) मूले—वाक्यमिति । वाक्यत्वं=अर्थबोधकपदसमूहत्वम् ॥ वैदिकमिति । वेदवाक्यमित्यर्थः । वैदिकवाक्यत्वम्=ईश्वरोच्चरितत्वे सत्यर्थबोधकपदसमूहत्वम् । लौकिकवाक्यत्वं नाम=प्रयोगहेतुभूतयथार्थज्ञानवत्पुरुषोच्चरितत्वे सति अर्थबोधकपदसमूहत्वम् । अन्यत्= तादृशवैदिकलौकिकभिन्नं वाक्यम्, तदप्रमाणमित्यर्थः ॥ शाब्दसामग्रीनिरूपणानन्तरं शाब्दप्रमां दर्शयति—वाक्यार्थज्ञानं शाब्दज्ञानमिति । शाब्दत्वं='शब्दात्प्रत्येमी'त्यनुभवसिद्धा जातिः ॥ उपसंहरति—तत्करणमिति । शाब्दबोधकरणं शब्द इत्यर्थः ॥ शब्दनित्यत्ववादी परमेश्वराऽनभ्युपगन्ताऽध्वरमीमांसकः शङ्कते—नन्वित्यादिना ।—तैरीश्वराऽनङ्गीकारात् ईश्वरोच्चरितत्वेन तन्मते वेदस्य न प्रामाण्यं किन्तु स्वतःप्रामाण्यम्, शब्दानां नित्यत्वेन शब्दसमूहात्मकवेदस्याऽप्यनादित्वात्=स्व (ध्वंस) प्रतियोगित्वर्णवृत्तिजात्यवच्छिन्नप्रतियोगिताकध्वंसव्यापक—प्रागभावाऽप्रतियोगित्वात् वेदे ईश्वरोच्चरितत्वमसिद्धमिति शङ्काऽभिप्रायः । नैयायिको वेदस्येश्वरोच्चरितत्वमनुमानेन व्यवस्थापयति—वेद इति। वेदत्वं नाम=अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वम् । मन्त्रादिवारणाय सत्यन्तदलम् । महाजनश्च—भक्ष्य-पेया-यद्वैतराग-जीविका—कुतर्काऽभ्यास—व्यग्रता—ऽभिसन्धि—पाषण्ड-संसर्ग-प्रतारणादिनिबन्धनाऽन्यप्रवृत्तिमान् ॥ पौरुषेयत्वमत्र—सजातीयोच्चारणाऽनपेक्ष-भ्रमादिशून्य-पुरुषोच्चारणजन्यत्वम् ॥ मीमांसकैराशङ्कितमुपाधिं खण्डयति—न चेति । पक्षे—वेदे साध्यस्य निश्चयो नास्ति किन्तु सन्देहः। वेदातिरिक्ते भारतादौ 'अष्टादशपुराणानां कर्ता सत्यवतीसुत'-

कर्तृकत्वमुपाधिः, गौतमादिभिः 'शिष्य'परम्परया वेदेऽपि सकर्तृत्वस्मरणेन साधनव्यापकत्वात्। 'तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त' इति श्रुतेः। ननु वर्णा नित्याः 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात्। तथा च कथं वेदस्यानित्यत्वमिति चेत्! न, 'उत्पन्नो गकारो नष्टो गकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात् 'सोऽयं गकार' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला, इतिवत् साजात्या-

---

इत्यादिप्रमाणबलेन कर्ता-उपलभ्यते न तु वेदे, तथा च भारतादौ पौरुषेयत्वस्य निश्चयात्, यत्र यत्र भारतादौ पौरुषेयत्वं तत्र तत्र स्मर्यमाणकर्तृकत्वमस्तीति साध्यव्यापकत्वम्, यत्र यत्र च वेदे वाक्यसमूहत्वं तत्र तत्र न स्मर्यमाणकर्तृकत्वमिति साधनाऽव्यापकत्वम्, अतः स्मर्यमाणकर्तृकत्वमुपाधिः, उपाधिना हेतौ स्वव्यभिचारेण साध्यव्यभिचारानुमानमुद्भाव्यते यथा—'वाक्यसमूहत्वम्—पौरुषेयत्वव्यभिचारि, — पौरुषेयत्वव्यापक—-स्मर्यमाणकर्तृकत्वव्यभिचारित्वात्। तथा च कथं—-'वेदः पौरुषेय'इत्याद्यनुमानं साध्यसाधकं भवेदित्याशङ्कार्थः। उत्तरं तु—-न चात्र स्मर्यमाणकर्तृत्वमुपाधिराशंकनीयः, साधनाऽव्यापकत्वविरहात्, यतो गौतमादिमहर्षिभिः स्वशिष्यान् प्रति 'वेदकर्ता-ईश्वर'इत्युपदेशात् तच्छिष्यपरम्परया वेदे ईश्वरकर्तृकत्वं सिद्ध्यतीति वेदेऽपि स्मर्यमाणकर्तृकत्वसत्त्वेन साधनव्यापकत्वं—-तत्रोपलब्धं न तु साधनाऽव्यापकत्वम्, तथा च स्मर्यमाणकर्तृकत्वमुपाधिरेव न भवतीति भावः॥ वेदस्येश्वरकर्तृकत्वे आगमप्रमाणमाह-''तस्मादि'ति। तपस्तेपानात्-'तप'आलोचने-इतिधातोर्लिटि-एत्वाऽभ्यासलोपयोः शानच्, तथा च-आलोचनशालिन इत्यर्थः। त्रयो वेदाः-ऋग्यजुः—सामानि-इति॥ श्रुत्यन्तरमपि-'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद' इति। तस्माद्वेदा अनित्या एव॥ शब्दनित्यत्ववादी मीमांसकः पुनः शङ्कते-ननु वर्णा इति॥ तत्र प्रमाणमुपन्यस्यति-स एवाऽयमिति। अत्र-एतत्कालिकत्वोपलक्षितगकारे पूर्वकालिकत्वोपलक्षितगकाराऽभेदो भासते, स चाऽभेदो वर्णानामनित्यत्वे न, संभवति, पूर्वकालीनस्य नष्टत्वादेतत्कालीनस्य चाऽपूर्वत्वात्, तथा च वर्णसमूहः शब्द, शब्दसमूहो वाक्यम्, वाक्यसमूहश्च वेदः, कथं तस्याऽनित्यत्वं संभवेत्? न कथञ्चिदपीति शङ्कार्थः॥ उत्तरयति-नेत्यादिना। तादृशप्रतीतिबलादेव ध्वंसप्रागभावप्रतियोगित्वं शब्दानां सिद्ध्यतीति भावः॥ ननु तर्हि प्रत्यभिज्ञाविरोध इत्यत आह-सोऽयं गकार इति॥ दीपज्वाला दृष्टान्तम्, सा च दीपस्य कलिका ज्योतिरिति यावत्। तत्र यथा सजातीयसहस्रज्वालानां उत्पन्नविनष्टानामपि 'सेयं दीपज्वाले'ति साजात्येन (दीपज्वालात्वरूपजातिमादाय) प्रत्यभिज्ञा भवति तथा गकारादावपि गत्वादिजातिमादाय प्रत्यभिज्ञेति बोध्यमिति भावः॥ मीमांसकैर्वर्णा नित्याः, तथा च कथं परम्परया तत्समूहवाक्यसमूहवेदस्याऽनित्यत्वमिति पूर्वपक्षः कृतः, तत्र वर्णानामनित्यत्वेन वेदस्याऽप्यनित्यत्वं सम्पादितम्। इदानीं तैर्वर्णानां नित्यताऽङ्गीकारेऽपि वेदस्य वाक्यात्मकस्य नित्यता न सिद्ध्यतीति प्रतिपादयति-वर्णानां नित्यत्वेऽपीति। अनुपूर्वी-'अग्निमीळे'इत्यादौ-

लम्बनत्वात् । वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च । तस्मादीश्वरोक्तो वेदः । मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया प्रामाण्यम् । स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता काचित् शाखोच्छिन्नेति कल्प्यते । ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वादिति नित्यानुमेयो वेदो मूलमिति चेत् ! न, तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वा-

---

'अकाराव्यवहितोत्तर--गकाराव्यवहितोत्तर नकाराऽव्यवहितोत्तरैकाराव्यवहितोत्तर–मकाराऽव्यवहितोत्तरैकाराऽव्यवहितोत्तर–लकाराऽव्यवहितोत्तरैकारत्व'रूपा । तद्विशिष्टवाक्यस्य=अव्यवहितोत्तरत्वादिसम्बन्धेन तत्तद्वर्णविशिष्टवाक्यस्य ॥ **अनित्यत्वाच्चेति** । अव्यवहितोत्तरत्वादिनाऽनित्यरचनाविशेषगर्भिताऽनुपूर्वीविशिष्टवाक्यानामनित्यत्वमेवेति भावः ॥ अनुक्तसमुच्चयार्थक'च'कारेण–लक्षणलक्ष्यतावच्छेदकयोरैक्याऽनभ्युपगन्तृनैयायिकमते विशिष्टस्याऽनित्यत्वे विशेषणस्य (वर्णानां) नित्यत्वं कथमपि न संभवतीति बोध्यम् ॥ **तस्मादीति** । वाक्यानामनित्यत्वादेवेत्यर्थः । वेदोऽनित्य ईश्वरोक्त इति सिद्धम् ॥ **मन्वादीति** । वेदमूलकमन्वादिस्मृतीनां मन्वादिस्मृतिप्रतिपाद्याचारविशेषाणां च वेदमूलकतया प्रामाण्यमित्यर्थः ॥ ननु तर्हि स वेदः कथं नोपलभ्यते ? इत्यत आह---**स्मृतिमूलेति** । स्मृतिप्रतिपाद्याऽऽचारप्रयोजकीभूतानां स्मृतेर्मूलात्मकश्रुतीनामित्यर्थः । **तन्मूलभूतेति** । स्मृतिमूलभूता काचिच्छाखा पाठतः परिभ्रष्टेत्यनुमीयते, तथा हि–'स्मृतिवाक्यानि,–वेदमूलकाऽऽचारप्रयोजकीभूतानि,–शिष्टाचारप्रवर्तकवाक्यत्वात्' इति भावः ॥ मीमांसकः शङ्कते–**ननु पाठ्यमानेति** । अयं भावः–पाठनोऽपि परिभ्रंशो न कल्पनीयः, यतः–यो हि गुरुपरम्परयाऽविच्छिन्नसमानानुपूर्वाकपठ्यमानो वेद इदानीमुपलभ्यते तद्वाक्यानामुच्छेदस्त्वशक्यकल्पनः, तत्राऽपि च मध्ये मध्ये स्मृतिमूलभूतवाक्यानां विप्रकीर्णानां=विशकलिततया विद्यमानानां स्मृतिमूलत्वकल्पनावादोऽप्ययुक्तः, स्मृतिसमानार्थकवाक्यानां तत्राऽनुपलम्भात्, एवं चेदानीमुपलभ्यमानस्मृतीनां मूलभूताः शाखा विनष्टा इत्यत्राऽपि विकल्पः–ताः शाखाः स्मृतिरचनायाः पश्चाद्वा विनष्टा वा पूर्वं विनष्टाः, यद्युच्यते पश्चात् ? तदा विनिगमनाविरहेण पूर्वं विनष्टा इत्यपि कथं नोच्यते, कालबाहुल्येनाऽनित्यानां कदा विनाशो जायते इति निर्णयाऽभावात् । तथा च स्मृतयोऽपि कपोलकल्पिता न तु वेदमूलिकाइत्यापत्तिः समुद्भवति । तुल्ययुक्त्येदानीं पठ्यमानोऽपि वेद ईश्वरोच्चरित एवेत्यपि अशक्यनिर्णयः, अनित्यानां बहुवारं विनाशसद्भावात्, अतः पठ्यमानवेदस्यापि कल्पितत्वाऽऽपत्तिर्भवन्मते समुद्भवति, तस्मात् 'स्मृतिमूलं वेदः–नित्यः, नित्यशब्दात्मकत्वादि'त्येवं नित्यो वेदोऽनुमेयः, वर्णाश्च नित्या एव, तथा च नोक्ताः सर्वा आपत्तयः । स्मृतिमूलवेदघटकाऽऽनुपूर्व्यघटितवाक्यानामिदानीं स्मृतित्वरूपेणोपलभ्यमानत्वात्, इति गूढशंकाऽभिप्रायः । उत्तरयति–**न तथापीति** । यया कयाऽपि युक्त्या वेदस्य नित्यत्वसाधनेऽपि आनुपूर्व्यघटितवाक्यात्मकवेदस्याऽनित्यत्वं स्यास्यत्येव, वर्णानां रचनाविशेषानुपूर्व्या अनित्यत्वेन पूर्वं विनष्टत्वात् तव मते इदानीं तादृशानुपूर्वीज्ञानाऽभावेन वेदवाक्यानां बोधक-

सम्भवात् ॥ ननु "एतानि पदानि–स्मारितार्थसंसर्गवन्ति–आकाङ्क्षादिमत्पदकदम्बकत्वात् 'गामानय दण्डेनेति' मद्वाक्यवत्" इत्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेत् ! न, अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य

---

त्वानुपपत्तिरूपदूषणं त्वशक्यपरिहारम् । अस्माकन्तु सजातीयाऽनुपूर्वीकसजातीयवर्णसमूहात्मकसजातीयवाक्यानामर्थबोधकत्वमुपपद्यते न क्वाचिद्धानिरिति वेदस्याऽनित्यत्वं निराबाधमिति–उत्तराऽभिप्रायः ॥ वेदमूलकश्रुतिस्मृतिपुराणादयो वैदिकाः प्रमाणभूताः । वैदिकत्वं नाम–वेदप्रतिपाद्यार्थविरुद्धार्थोऽप्रतिपादकत्वम् । अवैदिकत्वं–वेदाभिमतार्थविरुद्धाऽर्थोऽप्रतिपादकभिन्नत्वम्, तच्च नास्तिकादिग्रन्थेष्विति ध्येयम् । शब्दप्रमाणं नाऽनुमानाऽतिरिक्तमिति वैशेषिकाः शङ्कन्ते–नन्वित्यादिना । वैशेषिकाऽभिप्रेताऽनुमानं दर्शयति–एतानीति । तन्मते 'घटोऽस्ति' 'घटमानये'त्यादिशब्दश्रवणानन्तरं पदवृत्त्या पदार्थानां स्मरणे सति तदुत्तरं तात्पर्यज्ञानविषयीभूतो यः तादृशस्मारितपदार्थानां परस्परान्वयात्मकः संसर्गस्तद्विषयिणी या नैयायिकाऽभिप्रेतशाब्दबोधात्मिका प्रमा साऽनुमित्यात्मिकैव नान्या भवति, तथा च तादृशप्रमार्थं शब्दात्मकप्रमाणान्तरं न मन्तव्यमिति भावः । अक्षरार्थस्तु–'एतानि पदानि' पक्षः । 'घटोऽस्ति' 'घटमानये-त्यादिपदानीति तदर्थः । 'स्मारितपदार्थसंसर्गः' स्वविषयकज्ञानाऽव्यवहितपूर्वत्वसम्बन्धेन साध्यम्, भूतलघटयोः संयोगकालिकादिनानासम्बन्धभानवारणाय संसर्गे तात्पर्यविषयत्वमपि विवक्षणीयम् । अस्मारितपदार्थसंसर्गज्ञानपूर्वकत्वमादायाऽर्थान्तरवारणाय–पदार्थे स्मारितत्वं विशेषणम् । पदवृत्त्या पदस्मारितत्वं बोध्यम् । अथवा 'संसर्गवन्ती'ति संसर्गपदं–संसर्गप्रमापरम्, साध्यतावच्छेदकसंसर्गश्च अव्यवहितपूर्वत्वरूपो बोध्यः, तथा च 'तात्पर्यविषय-स्मारितपदार्थसंसर्गप्रमावन्ती'ति साध्यं फलितम् । हेतुः–आकाङ्क्षादिमत्पदकदम्बकत्वादिति । आकाङ्क्षादीत्यादिना आसत्तितात्पर्यपरिग्रहः, तथा च–आकाङ्क्षासत्तियोग्यतामत्पदकदम्बकत्वादिति फलितार्थः । आकाङ्क्षारहिते आसत्तिरहिते तात्पर्यरहिते च वाक्ये व्यभिचारवारणाय–आकाङ्क्षादिपदोपादानं बोध्यम् ॥ 'गामानय दण्डेनेति' मद्वाक्यं दृष्टान्तम् । तथा च तादृशानुमितिविषयीभूतः पदपदार्थसंसर्गः तत्प्रमा वा अनुमेयैव, अतस्तदर्थं न शब्दः प्रमाणान्तरमिति समुदितार्थः ॥ तन्मतं खण्डयति–नेत्यादिना ॥ अनुमित्यपेक्षयेति । अनुमित्यात्मककार्योऽपेक्षया विलक्षणस्य शाब्दज्ञानात्मककार्यस्य 'शब्दात्प्रत्येमी'त्यनुव्यवसायात्मकप्रतीतिसाक्षिकस्य सर्वेषां सम्मतत्वात् शब्दप्रमाणजन्य एव शाब्दबोध इति तदर्थः । एतदुक्तं भवति–वाक्यार्थस्याऽनुमितित्वे सत्येव उक्तसाकाङ्क्षपदलिङ्गकत्वं कल्प्यम्, तदेव त्वप्रसिद्धं प्रमाणाऽभावात् । 'गौरस्ती'त्यादौ 'अस्तित्वेन गामनुमिनोमी' त्यनुव्यवसायस्य कैरप्यनङ्गीकारात् प्रत्युत 'अस्तित्वेन गौः श्रुतो न त्वनुमित' इत्येवानुभवात् । पण्डितानामपण्डितानां च शब्दश्रवणानन्तरोत्पन्नज्ञानोत्तरं 'शाब्दयामि न त्वनुमिनोमी'त्यादिप्रतीतिसिद्धानुमितित्वविरुद्धशाब्दत्वजातेरपह्नोतुमशक्यत्वेन तादृशविजातीयप्रमाकरणतया शब्दस्य प्रमाणान्तरत्वमव्याहतमिति । एतत्खण्डनमण्डनादिकं शब्द-

'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात् ॥ नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे, श्रुते, वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यते इति चेत्! न, 'देवदत्तो-रात्रौ भुङ्क्ते—दिवाऽभुञ्जानत्वे सति पीनत्वात्',-इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् ॥ 'शते पञ्चाशदि'ति सम्भवोऽप्यनुमानमेव ॥ 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकः शब्द एव ॥ 'चेष्टा'-अपि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानान्तरम्। तस्मात् प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ॥

॥ इति दीपिकायां शब्दपरिच्छेदः ॥

---

शक्तिप्रकाशिकायां द्रष्टव्यम् ॥ अध्वरमीमांसकाः ( भाट्टाः ) वेदान्तिनश्च-अर्थापत्तेः प्रमाणान्तरत्वं शङ्कन्ते—नन्विति। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे=प्रत्यक्षतो ज्ञाते, श्रुते वा=शब्दप्रमाणादवगते वा। पीनत्वाऽन्यथाऽनुपपत्त्या=पीनत्वस्य रात्रि भोजनं विनाऽनुपपत्त्या। रात्रिभोजनमर्थापत्तिप्रमाणेन आक्षिप्यते इत्यर्थः। अर्थापत्ताविदं तत्त्वम्=यद्विना यदनुपपन्नं तत्तदुपपादकम्, भोजनं विना पीनत्वमनुपपन्नं इति भोजनमुपपादकं पीनत्वं तूपपाद्यम् उपपादकज्ञानं फलम् अर्थापत्तिप्रमा, अर्थस्याऽऽपत्तिः=कल्पनेति व्युत्पत्तेः। उपपाद्यज्ञानं करणं, अर्थस्याऽऽपत्तिः कल्पना यस्मादितिव्युत्पत्तेः ॥ खण्डयति-नेत्यादिना। व्यतिरेकानुमानेनैव गतार्थत्वात् अर्थापत्तिर्न प्रमाणान्तरमित्याशयः ॥ अनुमानं दर्शयति-देवदत्त इति। देवदत्तः-पक्षः। रात्रिभोजनं-साध्यम्। दिवाऽभुञ्जानत्वे सति पीनत्वात्-हेतुः। 'यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वं तत्र तत्र रात्रिभोजनवत्त्वं, यथा प्रत्यक्षतो रात्रिमात्रभोजी वटुः'। 'यत्र यत्र रात्रिभोजनवत्त्वाभावस्तत्र'तत्र 'दिवाऽभुञ्जानत्वे सति पीनत्वाभाव'इतिव्यतिरेकव्याप्तेरभ्युपगमेन व्यतिरेकानुमानेऽन्तर्भावादितिभावः। दिवामात्रभोजिनि पीने व्यभिचारवारणाय-सत्यन्तं हेतौ बोध्यम्। अहोरात्राऽभोजिन्यपीने व्यभिचारवारणाय-पीनत्वमुपात्तम् ॥ पौराणिकाः-संभवैतिह्ययोरतिरिक्तप्रमाणत्वं वदन्ति,-तद्यथा-'खार्यां द्रोणाऽऽढकप्रस्थाद्यवगमः' तत्र 'खारी'-त्युक्ते द्रोणाऽऽढकप्रस्थादिसमावेशोऽप्युक्तो भवतीति 'शतवानि'त्युक्ते 'पञ्चाशद्वानि'त्यप्युक्तं भवति। तदुभयत्र खार्यां-द्रोणादीनां संभवः, शते-पञ्चाशत्संभवश्चेति प्रमाणान्तरम् ॥ तन्न। अनुमानेनैव निर्वाहात्, यथा-'खारी-द्रोणादिघटिता,-खारीत्वात्' इत्यनुमानेन 'द्रोणादिघटितत्वव्याप्य'खारीत्ववत्त्वपरामर्शेन 'खारी-द्रोणाद्यविनाभूते'त्यनुमितिर्भवतीति ॥ एवं-'शतम् पञ्चाशद्घटितम्,-शतत्वा'दित्यनुमानेन 'पञ्चाशद्घटितत्वव्याप्य-शतत्ववच्छत'मिति परामर्शेन 'शतम्-पञ्चाशदविनाभूत'मित्यनुमितिर्भवतीतिभावः ॥ एवम्-ऐतिह्यम्-अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम्-इति होचुर्वृद्धा' इति, यथा-'इह वटे. यक्षः प्रतिवसती'ति ॥ तदपि न प्रमाणान्तरम्, यतः-यद्यज्ञातमूलप्रवक्तृकः शब्दः, तदाऽप्रमाणमेव, यदि च-आप्तप्रवक्तृकः शब्दः, तदा शब्दप्रमाणेऽन्तर्भाव इति ॥ चेष्टापीति। अथ चेष्टा- विलक्षणव्यङ्ग्यवो-

## ❀ अथ प्रामाण्यविचारः ❀

अथ ज्ञानानां 'तद्वति तत्प्रकारकत्वं'—स्वतोग्राह्यं परतो वा ? इति विचार्यते,

---

धजनिका प्रमाणरूपा' इत्यालङ्कारिका वदन्ति ॥ तन्न । साऽपि शब्दद्वाराऽनुमानद्वारा वा व्यवहार-हेतुर्भवति न तु स्वतन्त्रा, अतः शब्दप्रमाणेऽनुमाने वाऽन्तर्भावः । अनुमाने यथा—नेत्रमिषेणाऽऽहूयमानां कांचिदवलोक्य दर्शकस्तावदनुमिनोति—'इयम्—मामाह्वयति,—स्वानुकूलप्रयत्नवत्त्व-सम्बन्धेन ममाह्वनानुकूलचेष्टावत्त्वात्, स्वं=चेष्टा'अहम्—अनयाऽऽकाङ्क्ष्यमाणः, नेत्रचेष्टयाऽऽह्वानादिति' वा ॥ उपसंहरति—तस्मादिति ॥

❀ इति तर्कदीपिकाकिरणावल्यां शब्दपरिच्छेदः ❀

अथेदानीं प्रमाणेषु निरूपितेषु तद्गतप्रमितिकरणत्वघटकप्रमागतप्रमात्वस्य—स्वतोग्राह्यत्वं—परतोग्राह्यत्वं वेति विचारयितुं भूमिकामारचयति—**ज्ञानानामित्यादिना** । प्रमात्मकज्ञानाना-मित्यर्थः । षष्ठ्यर्थो वृत्तित्वम्, तद्वति तत्प्रकारकत्वमित्यस्य–तद्विशेष्यकत्वावच्छिन्नतत्प्रकार-कत्वमर्थः, तादृशप्रकारकत्वे वृत्तित्वस्याऽन्वयः, तथा च ज्ञानवृत्तित्वविशिष्टं यत् तद्विशेष्यक-त्वावच्छिन्नतत्प्रकारकत्वरूपं प्रमात्वं, तत् स्वतोग्राह्यं वा परतोग्राह्यमिति विप्रतिपत्तिर्विचार-प्रयोजिका बोध्या ॥ **तद्वतीति** । घटत्वादिमति घटे, तत्प्रकारकत्वं=घटत्वादिप्रकारकत्वमिति तदर्थः । स्वतोग्राह्यमित्यस्य–ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः । परतोग्राह्यमित्यस्य—ज्ञाततालिङ्गकानुमितोसामग्रीभिन्नाऽनुमित्यादिसामग्रीजन्यग्रहविषय इत्यर्थः ॥ अत्रेदं तत्त्वम्—मीमांसकाः—प्रमात्वं स्वतोग्राह्यं, नैयायिकाश्च—प्रमात्वं परतोग्राह्यमिति—स्वीकुर्वन्ति । मीमांसकाः गुरु-मिश्र-भट्टाख्यः, गुरुः=प्राभाकरः, मिश्रः=मुरारिमिश्रः, भट्टः=कुमारीलभट्टः, तत्र गुरु-मते ज्ञाने प्रामाण्यं स्वतः=स्वस्मात्=व्यवसायात्मकज्ञानादेव ग्राह्यम्, गुरुमते सर्वस्मिन्नेव ज्ञाने मिति-मातृ-मेयैतत्त्रयं भासते, मितिः=ज्ञानम्, माता=ज्ञानाश्रयः, मेयः=विषयः । तन्मते 'अयं घटो घटविषयकज्ञानवानहं'मितिप्रथममेव–समूहालम्बनं–व्यवसायज्ञानमुत्पद्यते, अत एव व्यवसायस्य स्वप्रकाश्यात्मकतया स्वेनैव स्वगतप्रामाण्यं गृह्यते, विशिष्टबुद्धौ विशेषण-ज्ञानस्य कारणतायास्तैरनङ्गीकारात् अनुपस्थितस्यापि प्रामाण्यस्य भानसंभवात् ॥ मिश्रमते—ज्ञाने प्रामाण्यं स्वस्मात्=स्वकीयात्=अनुव्यवसायात्मकज्ञानादेव ग्राह्यम्, मिश्रमते 'अयं घट'इत्याकारकव्यवसायज्ञानानन्तरं 'घटत्वेन घटमहं जानमी'त्यनुव्यवसायात्मकं लौकिक-मानसं ज्ञानविषयकज्ञानमुत्पद्यते, तेनाऽनुव्यवसायेन व्यवसायज्ञानगतं प्रामाण्यं गृह्यते ॥ भट्टमते–ज्ञाने प्रामाण्यं स्वस्मात्=स्वकीयात्=ज्ञाततालिङ्गकाऽनुमित्या ग्राह्यम्, भट्टमते सर्वमेव ज्ञानमतीन्द्रियम्, तन्मते 'घटस्य प्राथमिकं यद्व्यवसायात्मकं ज्ञानम्, तस्य ग्राहिका अनुमितिः स्वीकृता तयाऽनुमित्या प्रामाण्यं गृह्यते, घटपक्षकाऽनुमानप्रयोगो यथा—'घटः—घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः;—घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवं तन्नैवं यथा पटः । ज्ञातता च घटवृत्तिर्घटज्ञानजन्यो घटाऽतिरिक्तः प्राकट्याऽपराऽभिधानो धर्मः प्रत्यक्षः । अथवा

तत्र विप्रतिपत्तिः—'ज्ञानप्रामाण्यं—तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं-न

---

घटवृत्तिज्ञाततापक्षकानुमानम्-यथा-'इयं ज्ञातता,-घटत्ववति घटत्वप्रकारकज्ञानजन्या,-घटवृत्ति-घटत्वप्रकारकज्ञाततात्वात्, या यद्वृत्तियत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञातता ॥ तत्रायं क्रमः-आदौ 'अयं घटः' इति प्रत्यक्षम् । ततो घटे ज्ञाततायाः उत्पत्तिः, 'घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्या-ज्ञातता' इतिव्याप्ति-स्मरणं चेत्येकः कालः । तत इन्द्रियसम्बद्धविशेषणतात्मक-ज्ञाततेन्द्रियसन्निकर्ष-व्याप्तिस्मर-णत्युभाभ्यां 'घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्य-घटवृत्तिघटत्वप्रकारकज्ञाततावती-इयम्' इति तादात्म्यसम्बन्धेन व्याप्यवत्तापरामर्शः । तदनन्तरं 'इयं ज्ञातता-घटत्ववति घटत्व-प्रकारकज्ञानजन्ये'त्यनुमितिर्भवतीति बोध्यम् ॥ एतन्मतत्रयसाधारणं दूषणं नैयायिकैरित्थ-मुद्भाव्यते-'यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात् तदाऽनभ्यासदशोत्पन्नज्ञाने 'इदं ज्ञानं प्रमा-नवे'त्याकारकः सर्वजनानुभवसि..: प्रामाण्यसंशयो न स्यात् । यतस्तत्र यदि ज्ञानं स्वेन ज्ञातं तदा तन्मते प्रामाण्यं ज्ञातमेव, यदि ज्ञाने ज्ञातेऽपि प्रामाण्यं न ज्ञातं तदा न स्वतोग्राह्यत्व-सिद्धिः, यदि तु ज्ञानमेव न ज्ञातं तदा धर्मिज्ञानाऽभावात् कथं संशयः, अतो ज्ञाने प्रामाण्यं न स्वतोग्राह्यमिति ॥ नैयायिकमते—परतः = परस्मात् = अनुमानादितो ग्राह्यम्, यतः—-जलप्रत्यक्षानन्तरं तदानयनप्रवृत्तौ सत्यां जललाभे सति—'पूर्वमुत्पन्नं जलप्रत्यक्षज्ञानं-प्रमा,—सफलप्रवृत्तिजनकत्वात्, यत्र सफलप्रवृत्तिजनकत्वं नास्ति,—तत्र प्रमात्वं नास्ति,-यथा—मरुमरीचिकाजलज्ञाने, इति व्यतिरेकिणाऽनुमानेन प्रायशः सर्वत्र ज्ञाने प्रमात्वं निश्चीयते, तस्मात् ज्ञानगतं प्रामाण्यं परतोग्राह्यमिति ॥ एतत्सर्वं लक्ष्यीकृत्य विप्रतिपत्तिं दर्शयति—**तत्र विप्रतिपत्तिरि**त्यादिना । तत्र स्वतोग्राह्यत्वे । विषयत्वं = **सप्तम्यर्थः**, स च विप्रतिपत्तिघटकसंशयेऽन्वेति । विप्रतिपत्तिर्नाम—-संशयजनक-विरुद्धकोटिद्वयप्रतिपादक-वाक्यम्-'प्रामाण्यं स्वतोग्राह्यं न वे'त्याकारकम्, तादृशवाक्येन मध्यस्थस्य विरोधिकोटि-द्वयज्ञानं जायते, तादृशविरोधिकोटिद्वयबोधद्वारा मध्यस्थस्य मानसः संशय उत्पद्यते, तदानी-मेकतरकोटिनिर्णयार्थं न्यायप्रयोगात्मको विचारः कर्तव्यो भवति, अतो विचारप्रयोजकत्वं संशय-जनकवाक्येऽक्षतम्, तथा च—'तत्र ..प्रतिपत्ति'रित्यस्य—'न्यायप्रयोगात्मकविचारप्रयोजक= संशयजनक-विरुद्धकोटिद्वय-प्रतिपादक=वाक्य'मिति शाब्दबोधः ॥ **ज्ञानप्रामाण्यमिति** । 'अयंपक्षः, अत्र पक्षे'ज्ञान'पदानुपादाने 'प्रामाण्य'मित्यवशिष्यते । 'प्र'समभिव्याहृतस्य'मा'-धातोः—'ज्ञानं'मर्थः । 'प्र'शब्दस्य 'याथार्थ्यं'मर्थः । याथार्थ्यं च—तद्वति तत्प्रकारकत्वम् । तादृश'मा'धातोः—भावे ल्युटि-निष्पन्नात् 'प्रमाण'शब्दात् तद्धित'ष्यञि'—'प्रामाण्य'मिति-सिद्धम्, तस्य 'प्रमात्व'मित्यर्थः । अथ च 'करणाऽधिकरणयो'रिति करणे 'ल्युटि'ततः'ष्यञि'-निष्पन्न'प्रामाण्य'शब्दस्य 'प्रमाकरणत्व'मर्थः । तथा चात्र 'तद्वति तत्प्रकारकज्ञानत्व'रूपमेव प्रामाण्यं पक्षो न तु 'प्रमाकरणत्व'रूपमिति—तत्पर्यग्राहकं'ज्ञानं'पदं बोध्यम् । प्रमाकरण-

वा ? अत्र विधिकोटिः स्वतस्त्वम्, निषेधकोटिः परतस्त्वम् । अनुमानग्राह्य-

---

त्वस्य मनःप्रभृतिवृत्तित्वेन ज्ञानमात्रवृत्तित्वविरहात् तस्य न पक्षत्वं किन्तु प्रमात्वस्यैव पक्षतेति भावः ॥ **वस्तुतस्तु**–तद्वति तत्प्रकारकज्ञानत्वं प्रकारीभूतघटत्वपटत्वादिरूपाऽर्थभेदेन भिन्नं भिन्नं पक्षः, तादृशे कुत्रचिदपि प्रामाण्ये'यावज्ज्ञानग्राहकसामग्रीग्राह्यत्व'रूपं साध्यं न संभवत्येव, किन्तु–तत्तद्धर्मप्रकारकज्ञानग्राहकयावत्सामग्रीग्राह्यत्व'रूपमेव साध्यं संभवति, अतो––यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साध्यं, न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति लाभार्थं विशिष्य साध्यघटकघटत्वादिप्रकारक-ज्ञानपरं 'ज्ञान'पदमिति तत्त्वम् ॥ **तदप्रामाण्येति** । तत्पदेन—यद्धर्मघटितज्ञानप्रामाण्यं पक्षस्तद्धर्मघटितज्ञानं ग्राह्यम्, तादृशज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयं न वेत्यर्थः । तादृशो––ग्रहः––गुरुमते 'व्यवसायः', स च 'अयं घटः घटत्वेन घटमहं जानामी'त्याकारकसमूहालम्बनात्मको घटत्वधर्मघटितो यदि, यदा 'अयं घटः घटत्वेन घटमहं जनामी'त्याकारकसमूहालम्बनज्ञानप्रामाण्यं––पक्षः, तादृश ( अयं घटः घटत्वेन घटमहं जानामीत्याकारक ) समूहालम्बनज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशसमूहालम्बन-ज्ञानग्राहिका सामग्री चक्षुःसंयोगादिरूपा, तज्जन्या'ऽयं घटः—घटत्वेन घटमहं जानामी'ति-समूहालम्बनात्मक––व्यवसायविषयत्वं तादृशज्ञानप्रामाण्ये पक्षेऽस्तीतिरीत्या साध्यसमन्वयः ॥ मिश्रमते तादृशो ग्रहोऽनुव्यवसायः, स च 'अयं घट' इति व्यवसायात्मकज्ञानाऽव्यवहितोत्तर-जायमानो'घटत्वेन घटमहं जनामी'त्याकारकमानसज्ञानात्मकः । एतन्मते'अयं घट'इति ज्ञान-प्रामाण्यं यदि पक्षस्तदा'अयं घट'इत्याकारकव्यवसायात्मकज्ञानाऽप्रामाण्याऽग्राहिका यावती 'अयं घट'इतिव्यवसायात्मकज्ञानग्राहिका(ज्ञानविषयकज्ञानजनिका) सामग्री आत्ममनःसंयोगादि-रूपा, तज्जन्यो 'घटत्वेन घटमहं जानामी'त्यनुव्यवसायात्मकग्रहः, तद्विषयत्वं 'अयं घट'इत्या-कारकव्यवसायात्मकज्ञानप्रामाण्ये वर्तते=इतिरीत्या साध्यसमन्वयः ॥ भट्टमते––सर्वमेव ज्ञान-मतीन्द्रियम्, अतो'घटत्ववति घटत्वप्रकारकत्वविशिष्टमतीन्द्रियं यद् घटज्ञानं तत्प्रामाण्यं' पक्षः । तादृशाऽतीन्द्रियज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशाऽतीन्द्रियज्ञानग्राहिका (तादृशाऽती-न्द्रियज्ञानविषयकग्रहजनिका=तादृशाऽतीन्द्रियज्ञानविषयकग्रहः—'इयं ज्ञातता–घटत्ववति घटत्वप्रकारकज्ञानजन्ये'त्याकारकाऽनुमित्यात्मकः, तज्जनिका) परामर्शादिघटिता सामग्री तज्जन्यो ग्रहः––'इयं ज्ञातता–घटत्ववति घटत्वप्रकारकज्ञानजन्ये'त्याकारकाऽनुमित्यात्मकः, तद्विषयत्वं पक्षे=तादृशाऽतीन्द्रियज्ञानप्रामाण्येऽस्तीतिरीत्या साध्यसमन्वयः ॥ यद्यपि प्रथमोपस्थित–– 'तदप्रामाण्याऽग्राहकं'तिपदस्य सार्थक्यमनुक्त्वा'यावत्'पदस्य सार्थकताप्रदर्शनमयुक्तं, तथापि- 'यावत्'पदसत्त्वे एव'तदप्रामाण्याऽग्राहकेत्यस्य सार्थक्यं संभवति नान्यथेति समभिप्रेत्य प्रथमतो 'यावत्'पदसार्थक्यं दर्शयति—**अनुमानग्राह्यत्वेनेति** । यावत्'पदानुपादाने मीमांसकैः 'तदप्रामाण्याऽग्राहक–ज्ञानग्राहक–सामग्रीजन्यग्रहविषयत्वा'त्मकसाध्ये साधिते सिद्धसाधनं भवति,

त्वेन सिद्धसाधनवारणाय--यावदिति । 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहा-द्बाधवारणाय--अप्रामाण्याग्राहकेति । 'इदं ज्ञानमप्रमा' इति अनुव्यवसायनिष्ठ-

---

यतः--'घटज्ञानं-प्रमा, 'सर्वम्-अभिधेय'म्,--समर्थप्रवृत्तिजनकत्वाद्--वाच्यत्वाच्चेति' समूहा-लम्बनात्मिकाऽनुमितिः सर्वैः स्वीकृताऽस्ति, तथा च यदि घटज्ञानप्रामाण्यं--पक्षस्तदा--घट-ज्ञानाऽप्रामाण्याऽग्राहिका या काचिद् घटज्ञानग्राहिका(घटज्ञानविषयकनिरुक्तसमूहालम्बना-नुमित्यात्मकग्रहजनिका )--'प्रमात्वव्याप्य--समर्थप्रवृत्तिजनकत्ववद्घटज्ञानं--अभिधेयत्वव्याप्य-वाच्यत्ववत् सर्वं चे'तिसमूहालम्बनात्मिका परामर्शादिरूपा सामग्री, तज्जन्यग्रहो निरुक्तसमूहा-लम्बनाऽऽत्मकाऽनुमितिरूपः तद्विषयत्वं घटज्ञानप्रमात्वे नैयायिकमीमांसकोभय-सिद्धमेव, तस्य साधनं सिद्धसाधनम् ॥ 'यावत्'पदोपादाने तु--तदप्रामाण्याऽग्राहिका यावती ज्ञानग्राहिका सामग्री यथायथं चक्षुःसंयोगात्मिका,-मनःसंयुक्तसमवायादिका,--ज्ञाततालिङ्गकपरामर्शात्मिका, चेति, यथायथं तज्जन्यः समूहालम्बनात्मको व्यवसायः,--तदुत्तरोत्पन्नाऽनुव्यवसायो,-व्यव-सायोत्तरोत्पन्नज्ञाततालिङ्गकाऽनु[illegible]तिश्चेतिग्रहः, तद्विषयत्वं प्रमात्वे न नैयायिकमतसिद्धमतो न सिद्धसाधनमिति भावः ॥ अत्र सामग्र्यामपि 'यावत्त्व'विशेषणं न युक्तम् । यावत्सामग्रीजन्य-ज्ञानस्यैवाऽप्रसिद्धेः, नहि यावतीभिः--'चक्षुःसंयोगादि-जीवात्ममनःसंयोगादि-परामर्शादि'-सामग्रीभिः किमप्येकं ज्ञानं जन्यते । यदि यावतीः सामग्रीः प्रातिस्विकरूपेणोपादाय तत्तत्सामग्री-जन्यग्रहविषयत्वं साध्यते तदा तत्तन्मते सिद्धसाधनं दूषणं दुर्वारं स्यात्, मतत्रयसाधारण्याऽ-निर्वाहश्च स्यात, अतो'यावदि'ति--'ग्रह'विशेषणम्' न तु सामग्रीविशेषणम्, तथा च 'तद-प्रामाण्याऽग्राहक=ज्ञानग्राहक=सामग्रीजन्य--यावद्ग्रहविषयं न वेति विप्रतिपत्तिः फलिता । अत्रापि'यावद्ग्रहविषय'मित्यत्र 'ग्रहः=ज्ञानम्, तत्र ग्रहत्वं विषयिता चेति धर्मद्वयं वर्तते, 'यावत् पदस्य'व्यापकत्व'मर्थः, तेन--तादृशसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं न वेत्यर्थः फलितः । तथा च--'तत्तद्धर्मप्रकारकज्ञानाऽप्रामाण्याऽग्राहक=तत्तद्धर्मप्रकारक-ज्ञानग्राहक=सामग्रीजन्य-ग्रहत्वव्यापकविषयितानिरूपकत्वं' मीमांसकमते साध्यं फलितम् । अधिकं तु गादाधर्यां प्रामाण्यवादे द्रष्टव्यम् ॥ 'सामग्री'पदानुपादाने साध्याऽप्रसिद्धिः, तद-प्रामाण्याऽग्राहक--ज्ञानग्राहक--जीवात्मशरीरादिजन्ययावद्ग्रहविषयत्वस्य घटत्ववति घटत्व-प्रकारकत्वादिरूपे कुत्रापि प्रमात्वेऽप्रसिद्धेः, तद्वारणाय--सामग्रीपदम्, तथा च सामग्री-पदेन प्रागभावरूपसामग्रीमादाय तज्जन्ययावद्ग्रहविषयत्वस्य प्रमात्वे सत्त्वात् नाऽप्रसिद्धिः । जीवात्मशरीरादिकं तु न सामग्रीति भावः ॥ 'तदप्रामाण्याऽग्राहके'तिपदसार्थक्यं दर्शयति--'**इदं ज्ञानमप्रमेत्यादिना** । तथा च 'तदप्रामाण्याऽग्राहके'त्यनुपादाने 'घटत्ववति घटत्वप्रकारकज्ञानप्रामाण्यं'यत्र पक्षः, तत्र यदा घटत्ववति घटत्वप्रकारके ज्ञाने 'इदं ज्ञानमप्रमे'-त्येवमप्रामाण्यग्रहो जातः, तदानीं तादृशज्ञानाऽप्रामाण्यग्राहक-तादृशज्ञानग्राहकसामग्री--मनःसंयोगादिघटिता,--तज्जन्यग्रहः--तादृशाऽप्रामाण्यज्ञानाऽऽस्कन्दितो--घटत्ववति घटत्व-

प्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः—तदिति,तस्मिन्

---

प्रकारकज्ञानात्मकः, तद्विषयत्वस्य पक्षेऽभावाद् बाधः । 'तदप्रामाण्याऽग्राहके'त्युपादाने तु–तदप्रामाण्याऽग्राहक–ज्ञानग्राहक–सामग्री एव साध्यघटकीभूता, न तु तदप्रामाण्यग्राहक–ज्ञानग्राहकसामग्री, तथा च 'घटत्ववति घटत्वप्रकारक'अयं घट'इत्याकारकव्यवसायात्मक–ज्ञानगताऽप्रामाण्यविषयकग्रहस्याऽजनिका अथ च निरुक्तव्यवसायात्मकज्ञानविषयकग्रहस्य–– यथायथं—'समूहालम्बनात्मकव्यवसाय— तदुत्तरोत्पन्नाऽनुव्यवसाय–व्यवसायोत्तरोत्पन्नज्ञाततालि-ङ्गकाऽनुमिति'रूपस्य जनिका सामग्री यथायथं–'चक्षुःसंयोगादि–मनःसंयोगादि––ज्ञाततालिङ्गक–परामर्शादिरूपे'ति, तज्जन्यग्रहो यथायथं–'समूहालम्बनात्मकव्यवसाय–तदुत्तरोत्पन्नानुव्यवसाय-व्यवसायोत्तरोत्पन्नज्ञाततालिङ्गकाऽनुमिति'रूपः, तद्विषयत्वस्य साध्यत्वेन तादृशविषयत्वाऽभावस्य पक्षेऽसत्त्वान्न बाध इति भावः ॥ **स्वतस्त्वं न स्यादतः–'तदि'तीति** । अयं भावः– 'अयं घट' इति व्यवसायज्ञानम् । पटादौ—"अयं,––घट'–इतीदं ज्ञानमप्रमा"–इत्याकारकज्ञानं व्यवसायधर्मिकाऽप्रामाण्यप्रकारकं व्यवसायविषयकाऽनुव्यवसायात्मकम्, तच्च प्रमात्मकमेव, अप्रामाण्यवति व्यवसायेऽप्रामाण्यप्रकारकत्वेन प्रामाण्यलक्षणाऽऽक्रान्तत्वात् । "अयं घट'– इतीदं ज्ञानमप्रमा'–इति ज्ञानवानह"मित्याकारकं व्यवसायविषयकाऽनुव्यवसायविषयकविशिष्ट-व्यवसायात्मकं ज्ञानं बोध्यम्, तच्च निरुक्ताऽनुव्यवसायात्मकज्ञानगतप्रामाण्यविषयकग्रहरूपम्, निरुक्तानुव्यवसायात्मकज्ञानविषयकग्रहरूपम्, निरुक्ताऽनुव्यवसायात्मज्ञानेऽप्रामाण्यग्रहाऽनात्मकं च ( यदि निरुक्ताऽनुव्यसायज्ञानेऽप्रामाण्यग्रहः–"अयं घट'–इतीदं ज्ञानमप्रमा'–इतिज्ञानम-प्रमे"त्याकारको भवेत् तदाऽप्रामाण्यग्रहात्मकं स्यात् स तु नास्तीतिभावः ) तादृशनिरुक्ताऽनु-व्यवसायात्मकज्ञानविषयकग्रहादिरूपस्य (विशिष्टव्यवसायात्मक)ज्ञानस्य सामग्री मनःसंयुक्त-समवायादिरूपा बोध्या तथा च–'तदप्रामाण्याऽग्राहके'त्यत्र 'तत्'पदाऽनुपादाने–"अयं घट'- इतीदं ज्ञानमप्रमे"त्याकारकज्ञानप्रामाण्यं यत्र पक्षः, तत्र "अयं घट'–इतीदं ज्ञानमप्रमे"त्या-कारकज्ञानग्रहजनक–तदप्रामाण्यग्रहाजनकसामग्री न प्रसिद्ध्यति, यतः–या निरुक्तमनःसंयुक्तसम-वायादिरूपा सामग्री "अयं घट'—इतीदं ज्ञानमप्रमे"त्याकारकं यत् अनुव्यवसायात्मकं ज्ञानं तद्विषयकस्य तद्गत–प्रामाण्यविषयकस्य निरुक्तविशिष्टानुव्यवसायात्मकग्रहस्य च जनिका सैव सामग्री अप्रामाण्यज्ञानस्याऽपि ( 'अयं घट'इत्याकारकव्यवसायधर्मिकाऽप्रामाण्यग्रहस्य="अयं घट'इतीदं ज्ञानमप्रमे"त्याकारकस्य ) जनिका भवति, न तु तथाविधाऽप्रामाण्यग्रहस्याऽजनिका, तथा च 'अप्रामाण्यविषयकग्रहाऽजनकाऽनुव्यवसाय(विषयकज्ञानजनक)ग्राहकसामग्रीजन्य-विशिष्टानुव्यवसायात्मकग्रहविषयत्वं न प्रसिद्ध्यतीति अतः–'तदिति लुप्तसप्तमीकपदोपादानम् । तथा च यादृशज्ञानप्रामाण्यं प्रकृताऽनुमितावुद्देश्यं तादृशप्रामाण्याश्रयमेव ज्ञानं 'तत्' पदेन ग्राह्यम्, तादृशज्ञानेऽप्रामाण्यविषयकग्रहाऽजनकमिति–अग्राहकान्तार्थः । प्रकृते च–'अयं घट' इति व्यवसायात्मकज्ञानप्रामाण्यं न पक्षः, किन्तु "अयं घट'इतीदं ज्ञानमप्रमे"त्यनुव्यवसायात्मक-

ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः। उदाहृतस्थले व्यवसाये अप्रामाण्यग्राहक-स्याप्यनुव्यवसाये तदग्राहकत्वात्स्वतस्त्वसिद्धिः। ननु स्वत एव प्रामाण्यं गृह्यते,'घट-महंजानामि'इत्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात्, व्यव-सायरूपप्रत्यासत्तेस्तुल्यत्वात्। पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति

---

ज्ञानप्रामाण्यं—पक्षः, तादृशाऽनुव्यवसायात्मकज्ञानेऽप्रामाण्यग्रहः—"अयं घट'इतीदंज्ञानमप्रमा'—इतिज्ञानमप्रमे"—त्याकारको नास्त्येव, तेन तादृशाऽनुव्यवसायेऽप्रामाण्यविषयकज्ञानाऽजनिका तादृशानुव्यवसायविषयकनिरुक्तविशिष्टाऽनुव्यवसायात्मकज्ञानजनिका मनःसंयुक्तसमवायादिरूपा सामग्री, तज्जन्यनिरुक्तविशिष्टानुव्यवसायग्रहविषयत्वं "अयं घट'इतीदं ज्ञानमप्रमे"त्याकारका-नुव्यवसायात्मकज्ञानप्रामाण्ये प्रसिद्ध्यतीति सूक्ष्ममीक्षणीयम्। 'इदं ज्ञानमप्रमे'त्याकारकाऽनु-व्यवसायनिष्ठप्रामाण्यग्राहकसामग्र्याः—व्यवसायविशेष्यकाऽप्रामाण्यग्रहजनकत्वेऽपि अनुव्यवसाय विशेष्यकाऽप्रामाण्यग्रहाऽऽजनकत्वात् अनुव्यवसायात्मकज्ञानग्राहकत्वाच्च अप्रामाण्यवति अप्रामाण्य-प्रकारकत्वादिघटितस्य निरुक्ताऽनुव्यवसायात्मकज्ञानप्रामाण्यस्य स्वतोग्राह्यत्वसिद्धिर्भवतीतिसंक्षेपः॥

अक्षरार्थस्तु "अयं घट'इतीदं ज्ञानमप्रमे"त्यनुव्यवसायनिष्ठप्रामाण्यविषयक—"अयं घट'इतीदं ज्ञानमप्रमे'तिज्ञानवानहं'मित्याकारकग्रहजनकस्य मनःसंयुक्तसमवायादिसामग्री-विशेषस्य 'अयं घट'इत्याकारकव्यवसायधर्मिकाऽप्रामाण्यविषयक—"अयं घट'इतीदं ज्ञानम प्रमे"त्याकारकग्रहजनकत्वात् स्वतस्त्वं=स्वतोग्राह्यत्वं न सिद्ध्येदिति॥ लुप्तविभक्तिक'तत्'पदस्य सप्तमीतत्पुरुषं दर्शयति—**तस्मिन्निति**। तस्मिन्नित्यस्यैव विवरणं—**ग्राह्यप्रामाण्याश्रये—इति**। ज्ञाने इति शेषः। उदाहृतस्थले='अयं घट'इतीदं ज्ञानमप्रमे"त्याकारकज्ञानप्रामाण्य-पक्षकस्थले। व्यवसाये='अयं घट'इति ज्ञाने। "अयं घट'—इतीदं ज्ञानमप्रमे'त्याकारकाऽ-प्रामाण्यविषयकग्रहजनकस्य मनःसंयुक्तसमवायादिरूपसामग्रीविशेषस्यापि। अनुव्यवसाये="अयं घट'इतीदंज्ञानमप्रमे'त्याकारके। तदप्रामाण्यविषयकग्रहाऽजनकत्वात् स्वतोग्राह्यत्वसिद्धिरिति-भावः॥ इत्थं विप्रतिपत्तिं प्रदर्श्य मीमांसकमतं शङ्काव्याजेनोपन्यस्यति—**नन्विति**॥ **स्वत एवेति**। एवकारः—अप्यर्थकः, तेन न्यायमताऽभिमताऽनुमानपरिग्रहः, स्वतः=तत्तन्मते तत्तज्ज्ञानग्राहकसामग्रीतः। मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहेणेति बोध्यम्। मिश्रमताऽभि-प्रायेण तदुपपादयति—**घटमहं जानामी'ति**। 'घटत्वेन घटमहं जानामी'त्याकारकाऽनुव्यवसाये-नेत्यर्थः। 'घटत्वेन घटमहं जानामी'त्यनुव्यवसाये यथा घटघटत्वयोर्भानं तथा तत्सम्बन्धस्य समवायस्यापि भानं भवतीति भावः॥ ननु व्यवसायविषयाणामनुव्यवसाये कथं भानमित्या-कांक्षायामाह—**व्यवसायरूपेति**। घट-घटत्वयोर्यो व्यवसायः स एव कारणं सम्बन्धः प्रत्यासत्तिः बोध्या, तथा च व्यवसायज्ञानात्मकप्रत्यासत्त्या यथा घटघटत्वयोर्भानमनुव्यवसाये तथा घटत्वस्य यः समवायस्तस्यापि भानं व्यवसायात्मकसम्बन्धेनाऽनुव्यवसायेभवति, ज्ञानज्ञानस्य ज्ञानविषय-विषयकत्वनियमादिति भावः॥ ननु सम्बन्धभानेन कथं प्रामाण्यस्य भानमित्यत आह—

चेत्! न, स्वतः प्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा, इत्यनभ्यासदशायां प्रमात्व-संशयो न स्यात्। अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात् स्वतोग्राह्य-त्वाभावात् परतोग्राह्यत्वम्। तथा हि-प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं-प्रमा,-समर्थप्रवृत्तिजनकत्वात,—'यन्नैवंतन्नैवंयथा—अप्रमा, इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजाती-यत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते। प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम्।

---

**पुरोवर्तिनीति**। पुरोवर्तिनि घटे यः प्रकार—सम्बन्धः=घटत्वसमवायः, तस्यैव=तद्घटित-स्यैव—प्रामाण्यपदार्थत्वादित्याशयः। अत्रेदं बोध्यम्—नैयायिकैः—'पुरोवर्तिनं घटत्वेन जानामी'त्याकारकोऽनुव्यवसायः स्वीक्रियते, तत्र प्रकारत्वविशेष्यत्वयोर्मानमपि स्वीक्रियते किन्तु घटे घटत्वसमवायस्य भानं नाङ्गीक्रियते, तथा सति 'पुरोवर्तिनं घटत्वसंसर्गेण जानामी'त्यनु-व्यवसायाऽऽपत्तिः स्यादिति॥ मीमांसकैस्तु—अनुव्यवसाये प्रकारसम्बन्धस्यापि भानमभ्यु-पगम्यते, तथा च तद्वति तत्प्रकारकसम्बन्धघटितस्यैव प्रामाण्यपदार्थतया—तस्य स्वतोग्राह्यत्व-मिति शङ्कार्थः। तत् खण्डयति—नेति॥ **अनभ्यासदशायामिति**। प्राथमिकजलज्ञानोत्तर-मित्यर्थः। तत्र—सर्वानुभवसिद्धो यः—'जलज्ञानं प्रमा न वे'ति संशयः स न स्यात्, यतः—यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेव, यदि ज्ञानं न ज्ञातं तदा धर्मिज्ञानाऽभावात् कथं संशय इति भावः॥ **तस्मादिति**। अनभ्यासदशायां संशयाऽनुभवादित्यर्थः। प्रामाण्यस्य परतोग्राह्यत्वम्=अनुमानतोग्राह्यत्वमित्यर्थः॥ तदेव दर्शयति—**तथाहीत्यादिना**॥ **प्रवृत्तौ सत्यामिति**। अनेन मीमांसकानां 'तद्विषयकप्रवृत्तिं प्रति तद्विषयकज्ञाननिष्ठप्रामाण्यनिश्चयः कारण'मितिकार्यकारणभावे व्यभिचारो दर्शितः, प्रामाण्यनिश्चयाऽभावेऽपि प्राथमिकजलज्ञानोत्तरं जले प्रवृत्तेः सर्वाऽनुभवसिद्धत्वादिति भावः॥ पूर्वोत्पन्नम्—प्रथममेवोत्पन्नं जलज्ञानं—पक्षः, प्रमात्वं—साध्यम्, समर्थ(सफल)प्रवृत्तिजनकत्वं—हेतुरितिबोध्यम्॥ अन्वय्युदाहरणाऽसंभवाद् व्यतिरेक्युदाहरणमाह—**यन्नैवं तन्नैवमिति!** यत्=अप्रमा तत्=असमर्थप्रवृत्तिजनकम्, यथा मरुमरीचिकाजलज्ञानमिति॥ व्यतिरेकिणा=व्यतिरेकव्याप्तिमता हेतुना इत्यर्थः, व्यतिरेक-व्याप्तिरत्र—'प्रमात्वाऽभावव्यापकीभूताऽभावप्रतियोगि—समर्थप्रवृत्तिजनकत्व'मिति। निश्चीयते= अनुमीयते इत्यर्थः॥ **द्वितीयादिज्ञानेष्विति**। द्वितीयादिजलज्ञानेष्वित्यर्थः॥ तत्सजातीयत्व-लिङ्गेन=पूर्वज्ञानसजातीयत्वात्मकलिङ्गेन प्रमात्वमनुमेयम्, यथा 'द्वितीयादिजलज्ञानं—प्रमा,—प्रथम-प्रमात्मकजलज्ञानसजातीयत्वात्,—प्रथमज्ञानवत्'। साजात्यं च समर्थप्रवृत्तिजनकत्वेन धर्मेण बोध्यम्॥ **अन्वयव्यतिरेकिणेति**। अन्वयव्याप्तिमता व्यतिरेकव्याप्तिमता च लिङ्गेनेत्यर्थः, यत्र यत्र पूर्वज्ञानसजातीयत्वं तत्र तत्र प्रमात्वं यथा प्रथमज्ञानं, प्रथमज्ञाने निरुक्तं स्वसाजात्यं स्वस्मि-न्नपि वर्तते इत्यन्वयव्याप्तिः,—'यत्र यत्र प्रमात्वं नास्ति तत्र तत्र पूर्वज्ञानसजातीयत्वमपि नास्ति, यथा मरुमरीचिकाजलज्ञानं इति व्यतिरेकव्याप्तिः॥ एवं प्रमाज्ञप्तौ परतस्त्वं व्यवस्थाप्य प्रमोत्पत्तौ परतस्त्वं निरूपयति—**प्रमाया इत्यादिना**। प्रमाया उत्पत्तौ गुणजन्यत्वमेवं

प्रमाऽसाधारणकारणं गुणः। अप्रमाऽसाधारणकारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्वि-शेष्यसन्निकर्षो गुणः। अनुमितौ व्यापकवति व्याप्यज्ञानम्। उपमितौ यथार्थसादृश्य-ज्ञानम्। शाब्दज्ञाने यथार्थयोग्यताज्ञानम्। इत्याद्यूहनीयम्। पुरोवर्तिनि प्रकारा-भावस्यानुव्यवसायेनानुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वं उत्पत्तौ परतस्त्वम्। ननु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति।

---

परतस्त्वम्। प्रमां प्रति गुणत्वं नाम—प्रमाऽसाधारणकारणत्वम्, तच्च प्रमात्वावच्छिन्नप्रमानिष्ठका-र्यतानिरूपितकारणताशालित्वम्, कार्यतायां प्रमात्वावच्छिन्नत्वकथनेन ज्ञानसामान्यहेतुभूतात्ममनः-संयोगादीनां भ्रान्तिजनकपित्तादिदोषाणां च वारणम्॥ **अप्रमाऽसाधारणकारणमिति।** अप्रमात्वावच्छिन्नाऽप्रमानिष्ठकार्यतानिरूपितकारणताशालित्वं दोषत्वमिति भावः॥ अप्रमात्वाऽव-च्छिन्नत्वकथनेन—आत्ममनःसंयोगादेर्बहिरिन्द्रियसन्निकर्षादेश्च वारणम्। चतुर्विधप्रमायां हेतुभूतं गुणं क्रमेण दर्शयति—**तत्रेत्यादिना**। तत्र=प्रमासु मध्ये। प्रत्यक्षे=प्रत्यक्षप्रमायां विशेषण-विशिष्टविशेष्यस्य सन्निकर्षः=षड्विधसन्निकर्षेषु यो यत्र घटते स गुण इत्यर्थः। तद्धर्मिनिष्ठ-विशेष्यतासम्बन्धेन तद्धर्मप्रकारकप्रत्यक्षं प्रति तत्तद्धर्मवत्सन्निकर्षो हेतुरिति भावः। **व्यापक-वतीति**। साध्यवति पर्वतादौ 'साध्यव्याप्यहेतुविशिष्टपक्ष'—इतिपरामर्शो गुणः॥ **इत्याद्यूहनीय-मिति**।'पीतःशङ्ख' इत्याद्यप्रमायां नयनगतपित्तादिदोषः'इदंरजत'मित्यादौ चाकचक्यादिप्रयोजक-काचादिदोषः॥ अप्रमात्वस्याऽपि ज्ञप्तौ परतोग्राह्यत्वं सयुक्तिकं दर्शयति-**पुरोवर्तिनीति**। पुरोवर्तिनि शुक्तौ रजतत्वाऽभावस्य 'रजतमहं जानामी'त्यनुव्यवसायेनाऽविषयीकरणादित्यर्थः। शुक्ताविदं रजत'मितिभ्रमज्ञानगतमप्रामाण्यं=रजतत्वाऽभाववति रजतत्वप्रकारकत्वरूपम् अनुव्यवसायेन न गृह्यतेऽतो न स्वतोग्राह्यत्वम्, किन्तु परतः=अनुमानत एव, यथा'शुक्तावुत्पन्नं रजतज्ञानं—अप्रमा,—विसंवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथा प्रमा॥ अप्रमाया उत्पत्तिरपि चाकचक्यादिप्रयोजककाचादिदोषतो नयनगतपित्तादिदोषतो वा भवतीति, अप्रमोत्पत्तौ पित्तादि-दोषजन्यत्वमेव परतस्त्वं बोध्यमिति भावः॥ अप्रमां प्रति पित्तमण्डूकवसाञ्जनादिदोषाणां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम्। प्रमां प्रति गुणस्य कारणत्वमनुमानात् सिद्धम्, यथा—'प्रमा—ज्ञानसामान्यकारणभिन्नकारणजन्या,—जन्यज्ञानत्वात्,—अप्रमावदि'ति ध्येयम्॥ अख्याति-वादी मीमांसकः शङ्कते—**नन्वित्यादिना**। मीमांसकाः 'शुक्ताविदं रजत'मिति भ्रमस्थले अख्यातिं वदन्ति, अख्यातिर्नाम=न ख्यातिः, प्रत्यक्षाऽप्रतीतिरिति यावत्, तन्मते भ्रमस्थले ज्ञानद्वयं=प्रत्यक्षात्मकं स्मरणात्मकं चेति, अत उक्तस्थले 'इद'मंश एव प्रत्यक्षप्रतीतिविषयो न तु रजतांशस्तस्य चक्षुराद्यसन्निकर्षात्, किन्तु 'रजतां'शज्ञानस्य स्मृतित्वमेव, रजतस्य तत्राऽख्यातिः=प्रत्यक्षप्रतीतिविरह इति। तथा च तादृशस्थले ज्ञानद्वयाङ्गीकारात् 'तदभाववति तत्प्रकारकत्व'लक्षणलक्ष्यं भ्रमज्ञानं तन्मतेऽलीकमिति दर्शयति—**अयथार्थज्ञानमेव नास्तीति**॥ मध्ये नैयायिकः स्वाभिमतामन्यथाख्यातिं व्यवस्थापयितुं शङ्कते—**न चेति**॥ अन्यथाख्यातिः=

न च 'शुक्ताविदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्, रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात् । उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत् ! न, सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ।

❀ इति तर्कदीपिकायां प्रामाण्यविचारः ❀

---

अन्यस्याऽन्यधर्मेण ख्यातिरिति । 'शुक्ताविदं रजत'मित्यत्र देशकालान्तरगतं रजतमेव शुक्तिसंप्रयुक्तेन दोषोपहतेनेन्द्रियेण शुक्त्यात्मना गृह्यते । प्रयोगश्च–'विवादाध्यासितः शुक्तिखण्डः–-रजतज्ञानविषयः,–रजतोपायाऽन्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्,–सत्यरजतवत्- । तथा च 'शुक्ताविदं रजत'मित्यत्र प्रवृत्तिर्भवति, संवादिविसंवादिसाधारणप्रवृत्तिं प्रति च पुरोवर्तिशुक्तिविशेष्यकरजतत्वादिरूपेष्टतावच्छेदकप्रकारकस्य विशिष्टज्ञानस्य कारणत्वम्, अतस्तत्र शुक्तौ रजतत्वप्रकारकज्ञानमेष्टव्यं तथा चाऽन्यथाख्यातिसिद्धिरिति भावः ॥ मीमांसकस्तत्रोत्तरयति–**रजतस्मृतीत्यादिना** । अयमर्थः–प्रवृत्तिं प्रति तादृशविशिष्टज्ञानं न कारणम्, किन्तु तत्र अवश्यक्लृप्तनियतपूर्ववर्तिभ्यां रजतस्मृतिशुक्तिप्रत्यक्षाभ्यां प्रवृत्तिदर्शनात् तयोरेव कारणत्वम्, तथा च 'शुक्ताविदं रजत'मित्यत्र रजतस्मृति–शुक्तिप्रत्यक्षाभ्यामपि प्रवृत्तिरुपपद्यत एवेति ॥ ननु तर्हि 'नेदं रजत'मिति बाधकालेऽपि तत्र रजतस्मरणशुक्तिप्रत्यक्षयोः सत्त्वेन प्रवृत्त्यापत्तिरित्यत आह—**उपस्थितेति** । सर्वत्र वास्तविकरजते शुक्तिरजते च स्वतन्त्रोपस्थितरजतादिरूपेष्टभेदाऽग्रहस्यैव प्रवृत्तिं प्रति कारणत्वम्, तथा च 'नेदं रजत'मित्यत्र कारणाऽभावादेव प्रवृत्त्यापत्तिरूपाऽतिप्रसङ्गाऽभाव इति भावः ॥ नैयायिकस्तन्मतं खण्डयति–**सत्येत्यादिना** । **अयं भावः**–मीमांसकमतेऽवश्यक्लृप्तनियतपूर्ववर्तिनोः–रजतस्मृतिशुक्तिप्रत्यक्षयोः प्रवृत्तिकारणत्वे रजतभेदाऽग्रहस्य च प्रवृत्तिकारणत्वे कार्यकारणभावद्वयकल्पनागौरवम्, तद्भिया यदि सर्वत्र सत्यरजतस्थले मिथ्यारजतस्थले च स्वतन्त्रोपस्थितेष्टभेदाऽग्रहत्वरूपगुरुधर्मावच्छिन्नस्य कारणत्वं कल्प्यते तदपि महद्गौरवं तदपेक्षया लाघवेन सत्यरजतस्थले पुरोवर्ति–सत्यरजतविशेष्यकरजतत्वप्रकारकविशिष्टज्ञानत्वेन तादृशविशिष्टज्ञानस्यैव प्रवृत्तिकारणत्वं अन्वयव्यतिरेकाभ्यां सिद्धमेव तदनुरोधेन सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेनाऽनुगतकारणभावस्य कल्पनीयतयाऽसमर्थप्रवृत्तेरपि तादृशकारणतानिरूपितकार्यतावच्छेदकधर्मवत्तयाऽसमर्थप्रवृत्तिं प्रत्यपि विशिष्टज्ञानत्वेनैव कारणत्वमनुमीयते–यथा 'शुक्तिरजतप्रवृत्तिः–पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकविशिष्टज्ञानजन्या,–प्रवृत्तित्वात्, सत्यरजतस्थलीयप्रवृत्तिवत् । तथा च विशिष्टज्ञानाऽनुरोधेन अन्यथाख्यातिर्निराबाधा नत्वख्यातिरिति संक्षेपः ॥

❀ इति तर्कदीपिकाकिरणावल्यां प्रामाण्यविचारः ❀

**अयथार्थोऽनुभवस्त्रिविधः—संशय-विपर्यय-तर्कभेदात् । एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः । यथा—'स्थाणुर्वा पुरुषो वे'ति ॥**

( न्या० ) यथार्थानुभवं निरूप्याऽयथार्थानुभवं विभजते—संशयेत्यादिना । एकेति । एकधर्मावच्छिन्नविशेष्यतानिरूपिताभावाऽभावप्रकारकज्ञानं संशय इत्यर्थः । भावद्वयकोटिकसंशयाऽप्रसिद्धेः 'स्थाणुर्वा पुरुषो वे'—त्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव संशय इत्यर्थः ॥

( प० ) अयथार्थानुभवं विभजते—अयथार्थेति । संशयं लक्षयति—एकस्मिन्निति । एकस्मिन्धर्मिणि = एकस्मिन्नेव पुरोवर्तिनि पदार्थे, विरुद्धाः= व्यधिकरणा ये नानाधर्माः=स्थाणुत्व-पुरुषत्वादयस्तेषां वैशिष्ट्यं = सम्बन्धः, तदवगाहि ज्ञानं संशय इत्यर्थः । 'घट—पटावि'तिसमूहालम्बनज्ञानस्य घटत्व-पटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय—एकस्मिन्निति । 'घटः पृथिवी'ति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय—विरुद्धेति 'पटत्वविरुद्धघटत्ववान् घट'इति ज्ञानेऽतिप्रसक्तिवारणाय—नानेति ॥

( दी० ) अयथार्थानुभवं विभजते—अयथार्थ इति । स्वप्नस्य मानसविपर्यय-रूपत्वात् न त्रैविध्यविरोधः । संशयलक्षणमाह—एकेति । 'घटपटौ' इति समूहालम्बनेऽतिव्याप्तिवारणाय—एकेति । 'घटो द्रव्यम्' इत्यादौ अतिव्याप्तिवारणाय—विरुद्धेति । 'पटत्वविरुद्धघटत्ववान्' इत्यत्र अतिव्याप्तिवारणाय—नानेति ॥

---

(कि०) नन्वयथार्थानुभवस्य त्रैविध्यकथनमसङ्गतम्, यतः—क्वचिदनुभूतपदार्थस्मरणात् अनुभूतपदार्थविषयकं स्वाप्नज्ञानं जायते, क्वचिच्चाऽननुभूतशशशृङ्गादिस्वाप्नज्ञानं धातुपित्तादिरूपैः, क्वचिच्च शुभाऽशुभाऽदृष्टैर्देवराक्षसादिज्ञानात्मकं च स्वाप्नज्ञानं जायते, तस्याऽसदर्थविषयकस्वाप्नस्य चतुर्थस्य सर्वाऽनुभवसिद्धत्वादित्यत आह—स्वप्नस्येति । स्वाप्नज्ञानस्येत्यर्थः । 'मिद्धा'नामनाडीविशेषावच्छिन्नमनःसंयोगः=स्वप्नः, तदसमवायिकारणकं ज्ञानं स्वाप्नज्ञानम्, तस्य मानसविपर्ययरूपत्वात्=मानसं यद्विपर्ययज्ञानं भ्रमज्ञानं तदात्मकत्वादित्यर्थः ॥ मूले—एकस्मिन्निति । एकस्मिन्नेव पुरोवर्तिनि पदार्थे विरुद्धाः=विरुद्धत्वेन ज्ञायमानाः= व्यधिकरणा ये नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं=सम्बन्धः,—तदवगाहिज्ञानं संशय इत्यर्थः ॥ दीपिकायां—'घटो द्रव्य'मित्यादाविति । 'घटो द्रव्य'मिति ज्ञानस्य एकस्मिन्धर्मिणि घटे घटत्वद्रव्यत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिव्याप्तिः, विरुद्धो-

पादाने तु घटत्वद्रव्यत्वे न विरुद्धे=न व्यधिकरणे इति भावः ॥ 'पटत्वविरुद्धघटत्ववान् घटः' इत्यत्राऽतिव्याप्तिवारणाय–नानेति ॥ एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताशालिज्ञानत्वं संशयत्वं तच्चोक्तस्थले नास्तीतिभावः ॥ स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व–स्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानत्वं संशयस्य लक्षणम् ॥ स्वं=विषयिता ॥ संशयं प्रति उभयसाधारणधर्मज्ञानम्, असाधारणधर्मज्ञानम्, विप्रतिपत्तिवाक्यजन्यकोटिद्वयज्ञानं च कारणम्, विषयसंशयं प्रति प्रामाण्यसंशयो भ्रमत्वसंशयश्च कारणम्, व्यापकसंशयं प्रति व्याप्यसंशयः कारणम् ॥

**मिथ्याज्ञानं (१) विपर्ययः। यथा शुक्तौ 'इदं रजतम्' इति ॥**

**( न्या० ) मिथ्याज्ञानमिति। अयथार्थज्ञानमित्यर्थः। विपर्ययो नाम–भ्रमः ॥**

(प०) मिथ्येति। यथार्थज्ञानवारणाय–मिथ्येति। अयथार्थवारणाय-ज्ञानेति ॥

( दी० ) विपर्ययलक्षणमाह–मिथ्येति। तदभाववति तत्प्रकारकनिश्चय इत्यर्थः।

---

(कि०)तदभाववतीति। आत्मनि निश्चयरूपंयद् गौरत्वप्रकारकं ज्ञानं 'गौरोऽहं'मित्याकारकं एवं शङ्खादौ 'पीतः शङ्ख'इत्याकारकं यन्निश्चयरूपं ज्ञानं स विपर्यय इत्यर्थः। प्रमावारणाय—तदभाववतीति। घटाभाववति भूतले घटाभाववद्भूतलमिति निश्चयवारणाय—तत्प्रकारकेति। निश्चयपदानुपादाने तदभाववति तत्प्रकारकत्वस्य संशये इच्छायां च सत्त्वेन तत्राऽतिव्याप्तिः, तद्वारणाय—संशयाऽन्यज्ञानार्थकं'निश्चय' पदम्। रङ्गरजतयोः—'इमे रङ्गरजते' इति यथार्थसमूहालम्बनेऽतिव्याप्तिवारणाय–तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सति संशयान्यत्वे सति ज्ञानत्वं विपर्ययत्वमिति परिष्करणीयम् ॥

**व्याप्याऽऽरोपेण व्यापकाऽऽरोपस्तर्कः। यथा–'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादि'ति ॥**

**( न्या० ) व्याप्यारोपेणेति। तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम्। अन्यथा बाधनिश्चयाभावे इष्टापत्तिदोषेण तर्कानुत्पत्तेः ॥**

( प० ) तर्कं लक्षयति—व्याप्यारोपेणेति। असम्भववारणाय-व्याप्यारोपेणेति। पुनरसम्भववारणाय-व्यापकारोप इति। अत्र वह्न्यभावो व्याप्यः,

---

(१) मिथ्यात्वमत्र तदभाववति तत्प्रकारकत्वमात्रम्, तच्च इच्छादिसाधारणम्, अतो ज्ञानपदम्, तच्च निश्चयार्थकम्, तेन संशयवारणम्, तथापि तर्केऽतिव्याप्तिः, तद्वारणाय बाधनिश्चयोत्तरकालीनत्वशून्यत्वे सतीति देयम्, तथा च बाधनिश्चयोत्तरकालीनत्वशून्यत्वे सति तदभाववति तत्प्रकारकनिश्चयत्वं विपर्ययत्वमिति फलितम् ॥

धूमाभावो व्यापकः । यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः, तथापि प्रमाणानुग्राहकत्वात् स उदित इति बोध्यम् । स्वप्नस्तु पुरीतद्वहिर्देशान्तर्देशयोः सन्धौ इडानाड्यां वा मनसि स्थितेऽदृष्टविशेषेण धातुदोषेण वा जन्यते, स च मानसविपर्ययान्तर्भूतः ॥

( दी० ) तर्कलक्षणमाह—व्याप्येति । यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद् भेदेन कीर्तनम् ॥

---

(कि०) व्याप्येतीति ॥ व्याप्यस्य=वह्न्यभावस्य, आरोपेण=आहार्यज्ञानेन, व्यापकस्य =धूमाभावस्य, आरोप इत्यर्थः । अत्र'व्याप्यारोपेणे'तिपदं 'व्यापकारोप'इतिपदं च प्रत्येक- मसंभववारणाय बोध्यम् । आहार्यव्याप्यवत्ताभ्रमजन्य—आहार्यव्यापकवत्ताभ्रमस्तर्कः इतिसमुदि- तार्थः । बाधनिश्चयकालीनेच्छाजन्यज्ञानम्—आहार्यम् । बाधनिश्चयः—वह्निधूमयोः पर्वतादौ निश्चयः —'वह्निमान्धूमवान्'—इत्याकारकः, तत्कालीनेच्छा—'वह्निव्याप्यधूमवति पर्वते वह्न्यभावज्ञानं धूमाभावज्ञानं च जायता'मित्याकारिका, तज्जन्यं ज्ञानं—पर्वतो यदि वह्न्यभाववान् स्याद् धूमा- भाववान् स्या'दिति तर्कात्मकं ज्ञानम् । तथा च आहार्यव्याप्यवत्ताभ्रमः—'निर्वह्निः स्यादि'त्यंशः, तज्जन्यः आहार्यव्यापकवत्ताभ्रमः—'निर्धूमः स्या'दित्यंशः । व्याप्यत्वं—स्वसमानाधिकरणा- ऽभावाऽप्रतियोग्यापाद्यकत्वम्, स्वं=आपादकत्वेनाऽभिमतम् । व्यापकत्वं च=निरुक्तव्याप्य- त्वघटकाऽप्रतियोगित्वपर्यन्तं बोध्यम् । अयोगोलके वह्न्यभावो नास्ति धूमाभावश्च वर्तते, अतो धूमाभावो व्यापकः, वह्न्यभावो व्याप्यः, तथा च 'वह्न्यभाववान् स्याद् धूमाऽभाववान् स्यादि'ति तर्कः फलितः । तर्को हि द्विविधः—विषयपरिशोधको व्याप्तिग्राहकश्चेति, तत्राऽऽद्य- स्तूक्त एव, द्वितीयः—'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादि'ति । तर्के आपाद्यव्यतिरेकनिश्चयः कारणम्, आपाद्याऽपादकयोर्व्याप्तिनिश्चयोऽपि कारणम् । तर्कः पञ्च- विधः—आत्माश्रया-ऽन्योन्याश्रय—चक्रका-ऽनवस्था—तदन्यबाधितार्थप्रसङ्ग भेदात् । विस्तरस्तु न्यायदर्शनवृत्तितोऽवगन्तव्यः ॥ आहार्यव्याप्यवत्ताभ्रमजन्यः आहार्यव्यापकवत्ताभ्रमस्तर्क इति- समुदितार्थे जन्यान्ताऽनुपादाने आहार्यभ्रमात्मकज्ञानमात्रेऽतिव्याप्तिःस्यादतस्तदुपादानम् । प्रथमा- ऽऽहार्य—पदानुपादाने'अयं न पुरुष'इतिनिश्चयसत्त्वे शाखादौ करादिभ्रमेण करादिव्याप्यपुरुष- वत्ताभ्रमात्'अयं पुरुष'इत्याद्याहार्यव्यापकवत्ताऽऽरोपो भवति तत्राऽतिव्याप्तिः, तद्वारणाय— प्रथममाहार्यपदम् । द्वितीयाऽऽहार्यपदानुपादाने 'रजतत्वव्याप्यचाकचक्याऽभाववत्तानिश्चयकाले आहार्यं यद् रजतत्वव्याप्यवत्ताज्ञानं तज्जन्ये 'इदं रजत'मित्यनाहार्यज्ञाऽनेऽतिव्याप्तिस्तद्वारणाय द्वितीयमाहार्यपदम् ॥ तर्कस्य मानसविपर्ययेऽन्तर्भावइति शंकते—यद्यपीति ॥ तर्कस्य संशय- विपर्ययाभ्यां भिन्नत्वे युक्तिं दर्शयति—तथापीति । प्रमाणाग्राहकत्वादिति । प्रमाणेन प्रमायां जननीयायां व्याप्तिनिश्चयविघटकव्यभिचारशङ्काविघटनद्वारा उपयोगित्वादित्यर्थः । भेदेन= संशयत्वविपर्ययत्वाभ्यां विजातीयतर्कत्वरूपधर्मेण कीर्तनमिति संक्षेपः ॥

**स्मृतिरपि द्विविधा–यथार्था, अयथार्था चेति । प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था ।**

( दी० ) स्मृतिं विभजते–स्मृतिरिति ।

---

(कि०) मूले प्रमाजन्येति । संस्कारद्वारकप्रमाजन्यज्ञानत्वं यथार्थस्मृतित्वम्, संस्कारद्वारकाऽप्रमाजन्यज्ञानत्वं अयथार्थस्मृतित्वमिति भावः ॥

**सर्वेषामनुकूल(तया)वेदनीयं सुखम् ॥**

( न्या० ) सुखं निरूपयति—सर्वेषामिति । इतरेच्छानधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुते 'घटोऽनुकूल'इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद् घटादावतिव्याप्तिरिति निष्कृष्टलक्षणमुक्तम् । 'सुखेच्छाधीने,' भोजनादावतिव्याप्तिवारणाय–'इतरेच्छानधीने'तीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

( प० ) सुखं निरूपयति—सर्वेषामिति । सर्वात्मनामनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः । 'अहं सुखी'त्यनुभवसिद्धसुखत्वजातिमत्, धर्ममात्रासाधारणकारणो गुणो वा सुखम् । शत्रुदुःखवारणाय (१) सर्वेषामिति ॥

( दी० ) सुखं लक्षयति –सर्वेषामिति । 'सुख्यहम्,इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम् । यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ॥

---

(कि०) मूलेसर्वेषामिति । अनुकूलवेदनीयत्वे सति गुणत्वमिति लक्षणम् । एतल्लक्षणस्य रूपरसादावतिव्याप्तिरित्यस्वरसात् 'अहं सुखी'त्याद्यनुभवसिद्धसुखत्वजातिमत्त्वात्मकं लक्षणं दर्शयति—दीपिकायां—'सुख्यह'मित्यादिना । यथाश्रुतं तु=मूले सर्वेषामनुकूलतया वेदनीयमिति तु स्वरूपकथनमित्यर्थः । एवं धर्ममात्राऽसाधारणकारणत्वे सति गुणत्वमित्यपि लक्षणमूह्यम् ॥

---

( १ ) शत्रुनिष्ठं यत् श्येनयागादिजन्यं मुख्यदुःखत्वजात्यवच्छिन्नं शत्र्वात्मनाऽनुभूयमानं दुःखम्,तत्र केषांचिदपि सुखत्वव्यवहारस्याऽनुभवाऽसिद्धतया तत्र कस्यचिद् यागकर्तुः 'अस्य दुःखं मदनुकूल'मि'ति ज्ञानविषयस्य सत्त्वेन तादृशे दुःखेऽतिव्याप्तिः, तद्वारणाय—**सर्वेषामिति,** तथा च यावदन्तर्गतस्य शत्रोस्तादृशदुःखेऽनुकूलवेदनीयत्वविरहान्नाऽतिव्याप्तिः । सर्वेषामनुकूलवेदनीयत्वप्रसिद्धिस्तु–भोजनभोगादिजन्यसाक्षात्सुखत्वजात्यवच्छिन्ने बोध्या। वस्तुतस्तु—सर्वेषामिति न देयम् । अनुकूलवेदनीयत्वमेव लक्षणम्., तच्च इतरेच्छाऽनधीनेच्छाविषयत्वरूपमिति बोध्यम् ॥

प्रतिकूल(तया)वेदनीयं दुःखम् ॥

( न्या० ) दुःखं निरूपयति—प्रतिकूलेति। अत्राऽपि 'इतरद्वेषानधीनद्वेषविषयत्वमिति-निष्कृष्टलक्षणम्। द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणाय—'इतरद्वेषानधीने'ति द्वेषविशेषणम्। सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाऽजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः। फलेच्छा उपायेच्छाम्प्रति कारणम्। अतः फलेच्छावशादुपायेच्छा भवति। एवं फले द्वेषादुपाये द्वेषः ॥

( प० ) प्रतिकूलेति। दुःखत्वजातिमत्, अधर्ममात्रासाधारणकारणो गुणो वा दुःखम्। पदकृत्यं पूर्ववत् ॥

---

( कि० ) मूले—(सर्वेषां) प्रतिकूलतया वेदनीयं दुःखमित्यपि दुःखस्य स्वरूपकथनम्, लक्षणं तु—'अहं दुःखी'त्यनुभवसिद्धदुःखत्वजातिमत्त्वम्, एवं—अधर्ममात्राऽसाधारणकारणत्वे सति गुणत्वं दुःखत्वमित्यप्यूह्यम् ॥

इच्छा कामः। क्रोधो द्वेषः। कृतिः प्रयत्नः ॥

( प० ) इच्छां निरूपयति—इच्छेति। 'काम—इति पर्यायः। इच्छात्वजातिमती इच्छा। सा द्विविधा—फलेच्छा उपायेच्छा च। फलं सुखादिकम्। उपायो योगादिः ॥ द्वेषं निरूपयति—क्रोध इति। 'द्वेष्मी'त्यनुभवसिद्धद्वेषत्वजातिमान्, द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः। प्रयत्नं निरूपयति—कृतिरिति। प्रयत्नत्वजातिमान्प्रयत्नः। स त्रिविधः—प्रवृत्ति-निवृत्ति-जीवनयोनिभेदात्। इच्छाजन्यो गुणः—प्रवृत्तिः। द्वेषजन्यो गुणो-निवृत्तिः। जीवनादृष्टजन्यो गुणो-जीवनयोनिः। स च प्राणसञ्चारकारणम्, तथा च—अदृष्टजन्यत्वे सति जीवनजनकत्वं जीवनयोनित्वमिति बोध्यम् ॥

---

( कि० ) मूले इच्छां निरूपयति—इच्छेति। काम इति तत्पर्यायः। इच्छात्वजातिमत्त्वमिच्छाया लक्षणम्। इच्छा द्विविधा—फलविषयिणी, उपायविषयिणी च, फलं सुखं दुःखाभावश्च, फलेच्छां प्रति—फलज्ञानं कारणम्, अत एव परमपुरुषार्थः संभवति, यज्ज्ञातं सन् स्ववृत्तितया इष्यते स पुरुषार्थ इति तल्लक्षणात्। उपायः—योगध्यानादिः, उपायेच्छां प्रति इष्टसाधनताज्ञानं कारणम् ॥ मूले—द्वेषं निरूपयति—क्रोध इति। स च पर्यायः। 'द्वेष्मी'त्यनुभवसिद्धद्वेषत्वजातिमत्त्वं' 'द्विष्टसाधनताज्ञानजन्यगुणत्वं'वा द्वेषस्य लक्षणम्। दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणम्, बलवदिष्टसाधनताज्ञानं च प्रतिबन्धकम्। बल-

वत्पदोपादानेन नान्तरीयकदुःखजनके पाकादौ न द्वेष इति ध्येयम् ॥ मूले प्रयत्नं निरूपयति—कृतिरिति । प्रयत्नत्वजातिमत्त्वं प्रयत्नस्य लक्षणम् । स त्रिविधः—प्रवृत्तिः, निवृत्तिः, जीवनयोनिश्चेति । तत्र प्रवृत्तित्वं रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः । निवृत्तित्वं—द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः । जीवनयोनित्वं—साहजिकप्राणसंचारविषयकयत्नत्वम् । प्रवृत्तिं प्रति कृतिसाध्यविषयिणीच्छा, कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानम्, तदुपादानविषयकलौकिकप्रत्यक्षं च,—कारणम् । निवृत्तिं प्रति फलगतो द्वेषः, द्विष्टसाधनताज्ञानं च कारणम् । जीवनयोनिं प्रति जीवनाऽदृष्टं कारणम् । ।जीवनयोनिः सर्वथाऽतीन्द्रियः, स चाऽनुमीयते—'अधिकश्वासादिप्राणसञ्चारः,—प्रयत्नसाध्यः,—कार्यत्वात्'इत्यनेन प्राणसंचारस्य यत्नसाध्यत्वे सिद्धे, प्रत्यक्षत इतरयत्नसाध्यत्वस्य बाधाद् अतीन्द्रियप्रयत्नसिद्धिः । स एव जीवनयोनियत्न इति ।

## विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः ।

(न्या०) धर्माधर्मौ निरूपयति—विहितेति । वेदविहितेत्यर्थः । निषिद्धेति । वेदनिषिद्धेत्यर्थ ॥

(प०) धर्ममाह—विहितेति । वेदविहितेत्यर्थः । अधर्मवारणाय—वेदविहितेति । यागादिक्रियावारणाय-कर्मजन्य इति । स च 'कर्मनाशा'जलस्पर्श-कीर्तन-भोग-तत्त्वज्ञानादिना नश्यति ॥ अधर्मलक्षणमाह—निषिद्धेति । वेदनिषिद्धेत्यर्थः । धर्मवारणाय-वेदनिषिद्धेति । वेदनिषिद्धक्रियावारणाय-कर्मजन्य इति । स च भोगप्रायश्चित्तादिना नश्यति । एतावेव 'अदृष्टमि'ति कथ्येते वासनाजन्यौ च । वासना च—विलक्षणसंस्कारः ॥

---

(कि०) मूले—विहितकर्मजन्य इति । वेदविहितेत्यर्थः । अधर्मवारणाय—वेदविहितेति । यागादिक्रियावारणाय—कर्मजन्य इति । स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्मः स चाऽतीन्द्रियः, यागहोमदानादिव्यापारतया प्रकल्प्यते, अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तर्भाविस्वर्गजनकत्वं न स्यादिति । धर्मः—'कर्मनाशा'सरितो जलस्पर्शनेन,—भोगेन, तत्त्वज्ञानादिना, च नश्यति ॥ मूले निषिद्धकर्मजन्यइति । वेदनिषिद्धेत्यर्थः । धर्मवारणाय—वेदनिषिद्धेति । वेदनिषिद्धक्रियावारणाय—कर्मजन्य इति । अयमप्यतीन्द्रियः,। निन्दितकर्मव्यापारतया प्रकल्प्यते, अन्यथा निन्दितकर्मणां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविनरकादिजनकत्वं न स्यादिति, अत एव नरकदुःखादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्मः । स च प्रायश्चित्तेन, भोगेन, तत्त्वज्ञानादिना, नश्यति । धर्माऽधर्मौ—अदृष्टपदेनोच्येते, एतौ वासनाजन्यौ । वासना च विलक्षणसंस्कारो बोध्यः ॥

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ॥ संस्कारस्त्रिविधः—वेगो, भावना, स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनो ( मात्र ) वृत्तिः । अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थाऽऽपादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥ इति गुणाः ॥

( न्या० ) बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः । संस्कारं विभजते—संस्कार इति । भावनां लक्षयति—अनुभवेति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्रानुभवजन्यत्वे सतीति—विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात् । अतः स्मृतिहेतुत्वोपादानम् ॥ अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः । (ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा । यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानस्य । दण्डविशिष्टबुद्धिर्नाम—दण्डप्रकारकबुद्धिः । तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम् । दण्डप्रकारकबुद्धिः—'दण्डी पुरुष' इत्याकारिका बुद्धिः, तत्र दण्डज्ञानं कारणम् । न हि दण्डमजानानः 'दण्डी पुरुषः' इति प्रत्येति । एवं च यत्रा'ऽयं दण्ड' इति प्रत्यक्षं जातं, तदनन्तरं 'दण्डी पुरुष' इत्याकारकप्रत्यक्षमुत्पन्नं तत्र 'दण्डी पुरुष'इत्याकारकप्रत्यक्षेऽतिव्याप्तिः । ताद्रृ स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे'दण्डी पुरुष' इत्याकारकस्मरणे कारणं च, स्मृति प्रत्यनुभवस्य कारणत्वात्, तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्व'रूपभावनालक्षणस्य यथोक्ते'दण्डी पुरुष'इत्याकारकाऽनुभवे विद्यमानत्वादतिव्याप्तिरिति चेन् ! अत्र ब्रूमः—अनुभवजन्यत्वं हि—अनुभवत्वावच्छिन्न-

कारणतानिरूपितकार्यताश्रयत्वम्। तत्र कारणतायां अनुभवत्वावच्छिन्नत्वं निवेश्यते। तथा च अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम् अनुभवजन्यत्वम् इति फलितम्, अतो नोक्ताऽतिव्याप्तिः, तथा हि दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठकारणतायां न दण्डानुभवत्वमवच्छेदकं, दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः। अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति स्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्। तथा चाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्तते। तथा हि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्। अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य भावनायां सत्त्वात् नाऽसम्भवः। नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्। तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम्। न हि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथा हि—ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवाऽतिव्याप्तिवारणसंभवात् कृतं स्मृतिहेतुत्वविशेषणेनेति चेत्! न। स्मृतावतिव्याप्तिवारणायैव तदुपादानात्। तथा हि—स्मृतिं प्रत्यनुभव एव कारणं, न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन। तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वं अवच्छेदकम्, तेनाऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिः, तद्वारणाय स्मृतिहेतुत्वमुक्तम्, न हि स्मृतिः स्मृतिहेतुः, अतो न तत्राऽतिव्याप्तिरित्यलमनल्पजल्पनेन॥

(प०) संस्कारं विभजते—संस्कारेति। सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान्संस्कारः।' घटादिवारणाय—गुणत्वव्याप्येति। संयोगादिवारणाय-आत्मविशेषगुणोभयवृत्तीति। ज्ञानादिवारणाय—सामान्येति। द्वितीयादिपतनासमवायिकारणं-वेगः। रूपादिवारणाय-द्वितीयादिपतनेति। कालादिवारणाय—असमवायीति। भावनां लक्षयति-अनुभवेति। आत्मादिवारणाय-प्रथमदलम्। अनुभवध्वंसवारणाय-द्वितीयदलम्॥ स्थितिस्थापकमाह—अन्यथेति। पृथिवीमात्रसमवतसंस्कारत्वव्याप्यजातिमत्त्वं-स्थितिस्थापकत्वम्। गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय—संस्कारत्वव्याप्येति। भावनात्वमादाय भावनावारणाय—पृथिवीसमवेतेति। स्थितिस्थापकरूपान्यतरत्वमादाय (१) रूपवारणाय—जातीति। इति गुणा इति। द्रव्यकर्मभिन्नत्वे सति समान्यवान् गुणः। द्रव्यकर्मणोरतिव्याप्तिवारणाय—विशेषणदलम्। सामान्यादावतिव्याप्तिवारणाय—विशेष्यदलम्॥

(दी०) संस्कारं विभजते—संस्कार इति। संस्कारत्वजातिमान् संस्कारः॥ वेगस्याश्रयमाह—वेग इति। वेगत्वजातिमान् वेगः॥ भावनां लक्षयति—अनुभवेति। अनुभवध्वंसेऽतिव्याप्तिवारणाय—स्मृतीति। आत्मादौ अतिव्याप्तिवारणाय—अनु-

---

(कि०) मूले-बुद्ध्यादयोष्टाविति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मा इति। मूले संस्कारइति। सामान्यगुणाऽऽत्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमत्त्वं संस्कारस्य लक्षणम्। घटादिवारणाय-गुणत्वव्याप्येति। संयोगादिवारणाय—आत्मविशेषगुणोभयवृत्तीति। ज्ञानादिवारणाय—सामान्येति॥ वेग इति। पृथिवीजलतेजोवायुमनःसु वर्तते इत्यर्थः। वेगत्वं जातिविशेषः प्रत्यक्षसिद्धः। कर्मजवेगजभेदाद् वेगो द्विविधः, शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते। यत्र च वेगवता कपालेन जनिते घटे वेगो जायते स वेगजो वेग इति॥ अनुभवजन्येति। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। उपेक्षानात्मकनिश्चयः संस्कारं प्रति कारणम्, उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरनुभवसिद्धत्वात्। विना व्यापारं पूर्वानुभवस्य स्मरणप्रत्यभिज्ञानजननाऽसामर्थ्यात् व्यापारात्मकः संस्कारः सिद्ध्यति॥
अनुभवेतीति। प्राचीनाः—तत्तद्विषयकस्मृतिं तत्तद्विषयकसंस्कारं च प्रति तत्तद्विषयकाऽनुभवत्वेनैव हेतुता, न तु तत्तद्विषयकज्ञानत्वेन, व्याप्यधर्मेण कारणत्वसंभवे व्यापकधर्मस्याऽन्यथासिद्धत्वात्, अनुभवत्वस्यापि जातित्वाद्-गौरवाऽभावाच्चेति-स्वीकुर्वन्ति॥ नवीनास्तु—तत्तद्विषयकस्मृतिं तत्तद्विषयकसंस्कारं च प्रति तत्तद्विषयकज्ञानत्वेनैव हेतुता नत्वनुभवत्वेन, संस्कारस्य स्मृत्यात्मकफलनाश्यतया प्रथमस्मरणेन तज्जनकसंस्कारस्य नाशेन एकवारमनुभूतस्यैकवारं स्मरणानन्तरं पुनः पुनः सर्वाऽनुभूतस्मरणाऽभावप्रसङ्गात्। ज्ञानत्वेन कारणतायां तु

(१) पृथिवीमात्रस्य—पृथिवीतरद्रव्याऽवृत्तित्वे सति पृथिवीवृत्तित्वमर्थः। तथा च 'जाति'—पदानुपादाने निरुक्ताऽर्थक—पृथिवीमात्रवृत्ति-पृथिवीरूपाऽन्यतरत्वमादाय रूपेऽतिव्याप्तिः स्यात्, अतो जातिपदोपादानमितिभावः॥

**भवेति । स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम् ॥ स्थितिस्थापकं लक्षयति—अन्यथेति । संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः, अन्ये रूपादयो विशेषगुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वं विशेषगुणत्वम् ॥**

---

प्रथमानुभवनाशेऽपि स्मरणात्मकज्ञानेन पुनः संस्कारः पुनः स्मरणं तेन पुनः संस्कारः पुनः स्मरणमित्येवं पुनः पुनः स्मरणलाभात् ज्ञानत्वेनैव स्मृतिं संस्कारं च प्रति कारणत्वमिति–वदन्ति । तदेव दर्शयति–**स्मृतेरपीति** । अपिना अनुभवसङ्ग्रहः, संस्कारं प्रति ज्ञानत्वेन अनुभवः स्मरणं चेत्युभयं कारणमिति भावः । तथा चैतन्मते 'अनुभवजन्ये'तिस्थाने ज्ञानजन्येति निवेशनीम् । अतिविस्तरतस्त्वनुमितिग्रन्थे गादाधरीयेऽवलोकनीयम् ॥ **अन्यथेतीति** । पृथिवीमात्रसमवेतत्वसमानाधिकरणसंस्कारत्वव्याप्यजातिमत्त्वं' स्थितिस्थापकस्य लक्षणं, संस्कारत्वव्याप्यत्वोपादानेन गन्धत्वादिकमादाय न गन्धेऽतिव्याप्तिः, पृथिवीमात्रसमवेतेत्यनुपादाने भावनात्वमादाय भावनायामतिव्याप्तिः । पृथिवीमात्रनिरूपितसमवायावच्छिन्नवृत्तित्वलाभायैव जातिपदम्, आकृष्टशाखादीनां परित्यागे पुनर्यथापूर्वसंयोगजनकक्रियायाः स्थितिस्थापकसाध्यत्वात् स्थितिस्थापकस्य सिद्धिरिति । स्थितिस्थापकसंस्कारत्वजातिः क्रियाविशेषजनकतावच्छेदकतया सिद्धा । स च स्वजन्यक्रियानाश्योऽतीन्द्रियश्चेति बोध्यम् ॥ **सङ्ख्यादयोऽष्टाविति** । सङ्ख्या—परिमाण—पृथक्त्व—संयोग—विभाग—परत्वाऽपरत्व–गुरुत्वेत्यष्टौ ॥ **सामान्यगुणा इति** । सामान्यगुणत्वं च 'रूपस्पर्शाऽन्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदक–संयोग–विभाग–वेग–द्रवत्वाऽवृत्तिजातिशून्यगुणत्वम् । द्रव्यविभाजकतावच्छेदकं पृथिवीत्वादि, तद्व्याप्यतावच्छेदकं च गन्धत्वादि, तच्छून्यत्वस्य सङ्ख्यादौ सत्त्वाल्लक्षणसमन्वयः । अत्र जलीयशुक्लरूपे वायोरनुष्णाशीतस्पर्शे च पृथिव्यादिशुक्लरूप–स्पर्शव्यावृत्तजातिविशेषे मानाऽभावाच्छुक्लरूपाऽनुष्णाशीतस्पर्शयोरतिव्याप्तिवारणाय–रूपस्पर्शाऽन्यत्वे सतीति । शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्नकठिनावयवद्वयविभागे, विलक्षणतेजोवेगे, अत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे, चाऽव्याप्तिवारणाय–अवृत्त्यन्तं जातिविशेषणम् । कर्मादावतिव्याप्तिवारणाय–गुणत्वमिति । पृथिवीत्वादिव्याप्यतावच्छेदक–तत्तत्सङ्ख्यात्वादिशून्यत्वस्य तत्तत्संख्यायामभावात् अव्याप्तिवारणाय–जातिपदम् । द्रव्यविभाजकतावच्छेदकरूपोपाधेर्व्यापकत्वं तत्तद्व्यक्तित्वेन बोध्यम् ॥ **अन्ये-इति** । सामान्यगुणभिन्ना इत्यर्थः । रूपादयः- रूप-रस गन्ध-स्पर्श–बुद्धि–सुख-दुःखे च्छा द्वेप–प्रयत्न–धर्माऽधर्म भावनाख्य-संस्कार-शब्द स्नेह सांसिद्धिकद्रवत्वेत्यर्थः ॥ **द्रव्यविभाजेति** । पृथिवीत्वजलत्वाद्यात्मकं यत् द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्समानाधिकरणा द्वित्व पृथक्त्व-संयोगादयस्तदवृत्तिजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु तादृशं रूपत्वादिकम्, सांसिद्धिकद्रवत्वे च द्रवत्वत्वाऽवान्तरजातिम्, स्नेहादिषु दशसु स्नेहत्वादिकम्, भावनायां संस्कारत्वाऽवान्तरजातिं चाऽऽदाय लक्षण-

समन्वयः ॥ 'द्रव्यविभाजकोपाधिद्वये'त्यनुपादाने समानाधिकरणरसादौ रसत्वादेरवृत्तित्वविरहात् असंभवः स्यात्। 'द्रव्यविभाजके'त्यनुपादाने शुक्लत्वपटत्वात्मकोपाधिद्वयसमानाधिकरणे शुक्ले रूपत्वादेरवृत्तित्वविरहात् अव्याप्तिः स्यात्। 'जाति'पदानुपादाने पृथिवीत्वजलत्वसमानाधिकरण-पृथिवीजलसंयोगाऽवृत्ति–घटपटसंयोगगत–तद्व्यक्तित्वमादाय तत्संयोगेऽतिव्याप्तिः स्यादिति ॥ नन्विदं लक्षणमेकत्वादिष्वतिव्याप्तम् एकत्वत्वादिजातेरपि तादृशत्वादिति चेन्न, एकत्वत्वभिन्नत्वस्याऽपि जातौ विशेषणीयत्वात्। वस्तुतस्तु–कालदिङ्मनोवृत्तिताऽनवच्छेदकजातिमद्गुणत्वं विशेषगुणत्वमिति बोध्यम् ॥ अथवा पृथिवीवृत्तिवृत्ति–जलवृत्तिवृत्तीतरसंयोगाऽवृत्तिगुणत्वव्याप्यजातिमत्त्वं विशेषगुणत्वम्। अथवा—स्वाश्रयसमानाधिकरणयत्किञ्चिज्जातिव्यापकतावच्छेदिका या स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिका गुणत्वव्याप्या जातिस्तद्वत्त्वमेव विशेषगुणत्वम्। अथवा—भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शाऽवृत्तिधर्मसमवायी, तदन्यत्वे सति गुरुत्वाऽजलद्रवत्वान्यगुणत्वं विशेषगुणत्वमिति ॥

* इति तर्कदीपिकाकिरणावल्यां गुणनिरूपणम् *

**चलनाऽऽत्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम्। शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम् ॥**

(प०) चलनेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म। हस्त-पुस्तकसंयोगवारणाय सत्यन्तम्। घटादिवारणाय विशेष्यदलम्। ऊर्ध्वेति। अपक्षेपणवारणाय—ऊर्ध्वेति। कालादिवारणाय असाधारणेत्यपि बोध्यम्। अधोदेशेति। उत्क्षेपणवारणाय—अधोदेशेति। कालादिवारणाय—असाधारणेत्यपि देयम्। शरीरेति। प्रसारणादिवारणाय–शरीरसन्निकृष्टेति। कालादिवारणाय—असाधारणं देयम्। विप्रकृष्टेति। उत्क्षेपणादिवारणाय—विप्रकृष्टेति। कालादिवारणाय—असाधारणमप्यावश्यकम्।

(दी०) कर्मणो लक्षणमाह--चलनेति। उत्क्षेपणादीनां कार्यभेदमाह--ऊर्ध्वेति। शरीरेति। वक्रतासम्पादकं कर्म आकुञ्चनम्। ऋजुतासम्पादकं प्रसारणमित्यर्थः।

---

(कि०) मूले–चलनात्मकमिति। इदं स्वरूपकथनमात्रम्, लक्षणादिकं पूर्वमेव विवेचितम्॥ अन्यत्सर्वमिति। भ्रमण–रेचन-स्यन्दनोर्ध्वज्वलन–तिर्यग्गमनेत्याद्यात्मकं कर्म गमनेऽन्तर्भूतमतो न दशधा कर्मेति भावः॥ वक्रतासम्पादकमिति। वक्रतासम्पादकं ऋजुतासम्पादकं चेति प्राचीनाऽभिप्रायेण, वस्तुतो मूलोक्तसन्निकृष्टविप्रकृष्टात्मकौ यथाश्रुत एवार्थौ बोध्यः॥ नित्यमिति। नित्यत्वं–ध्वंसाप्रतियोगित्वं प्रागभावाऽप्रतियोगित्वं वा॥

**नित्यमेकमनेकाऽनुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। तद्द्विविधम्–पराऽपरभेदात्। परं सत्ता अपरं द्रव्यत्वादि ॥**

(न्या०) सामान्यं निरूपयति—नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। नित्यत्वविशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिस्तद्वारणायानेकसमवेतत्वम्। अनेका'ऽनुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः। जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वाच्च, अतः—अनेकेति समवेतविशेषणम्।

(प०) नित्यमिति। संयोगादिवारणाय—नित्यमिति। कालादिपरिमाणवारणाय—अनेकेति। अनेकानुगतत्वं च समवायेन बोध्यम्। तेन नात्यन्ताभावेऽतिव्याप्तिः॥

(दी०) सामान्यं लक्षयति—नित्यमिति। संयोगेऽतिव्याप्तिवारणाय—नित्यमिति। परमाणुपरिमाणादावतिव्याप्तिवारणाय—अनेकेति। अनुगतत्वं समवेतत्वम्। घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः।

---

(कि०) असमवेत इतीति। अभावस्य स्वरूपसम्बन्धेन वृत्तित्वात् न तु समवायेनेतिभावः॥ लक्षणादिकं पूर्वं विवेचितम्॥

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥**

(न्या०) नित्यद्रव्यवृत्तय इति। नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अतएव व्यावर्त्तकाः—इतरभेदानुमितिहेतवः। "नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः। नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः। पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं—भेदविशेषणम्, घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तं प्रकारताविशेषणम्। एतेन—'व्यावर्त्तका'—इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि नित्यद्रव्यवृत्तय' इति विफलमेव, स्वरूपाख्यानस्यापि कृतत्वादिति—प्रत्युक्तम्॥

(प०) नित्यद्रव्यवृत्तय इति। घटत्वादिवारणाय—नित्यद्रव्यवृत्तय इति। आत्मत्वमनस्त्ववारणाय- आत्मत्वमनस्त्वभिन्ना इत्यपि बोध्यम्।

(दी०) विशेषं लक्षयति—नित्येति ।

(कि०) मूले नित्यद्रव्यवृत्तय इति । पृथिव्यप्तेजोवायूनां परमाणव आकाशकाल-दिगात्ममनांसि च नित्यद्रव्याणि । व्यावर्तका'इति लक्षणम्, तच्च पूर्वं विवेचितम् ।

**नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः ययोर्द्वयोर्मध्ये एकमविनश्यत् तदवस्थमपराऽऽश्रितमेवाऽवतिष्ठते तावयुतसिद्धौ । यथा—अवयवाऽवयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जाति-व्यक्ती, विशेषनित्यद्रव्ये चेति ॥**

(न्या०) समवायं निरूपयति—नित्येति । सम्बन्धत्वं विशिष्ट-प्रतीतिनियामकत्वम् । तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम् । ययोर्द्वयोर्मध्य इति । यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः ॥

( प० ) नित्येति । आकाशादिवारणाय–सम्बन्ध इति । संयोगवारणाय–नित्येति ।' स्वरूपसम्बन्धवारणाय–तद्भिन्न इत्यपि बोध्यम् ॥

(दी०) समवायं लक्षयति—नित्येति । संयोगेऽतिव्याप्तिवारणाय—नित्येति । आकाशादावतिव्याप्तिवारणाय—सम्बन्ध इति । अयुतसिद्धलक्षणमाह—ययोरिति । 'नीलो घटः' इति विशिष्टप्रतीतिः—विशेषणविशेष्यसम्बन्धविषया,—विशिष्टप्रत्य-यत्वात्—दण्डीतिप्रत्ययवदिति-समवायसिद्धिः । अवयवावयविनाविति । द्रव्यसम-वायिकारणमवयवः । तज्जन्यं द्रव्यमवयवि ।

(कि०) मूले-नित्यसम्बन्ध इति । नित्यत्वे सति सम्बन्धत्वं लक्षणम् ॥ स्वरूपसम्बन्ध-वारणाय–तद्भिन्नत्वं देयम् । ययोर्द्वयोरित्ति । यथा घट–तद्रूपयोर्मध्ये रूपमविनश्यत् सत् घटाऽऽश्रितमेवाऽवतिष्ठते, एवं घटत्वमविनश्यत् सत् घटाश्रितमेवाऽवतिष्ठते तौ अयुतसिद्धौ । तथा च असम्बद्धयोरविद्यमानत्वं–अयुतसिद्धिः, तद्वत्त्वम्–अयुतसिद्धत्वं, अयुतसिद्धयोर्वर्तमानः–समवायो बोध्यः ॥ वैशेषिकमते समवायो न प्रत्यक्षः, अतस्तत्राऽनुमानप्रमाणं ।दर्शयति–'नीलो घट इति । 'नीलरूपवान् घट'--इतिविशिष्टप्रतीतिः–पक्षः । विशेषणविशेष्यसम्बन्धविषयकत्वं स्वरूपसम्बन्धेन साध्यम् । विशिष्टप्रत्ययत्वादिति हेतुः । 'दण्डी'तिप्रत्ययः दृष्टान्तम् । यथा दृष्टान्ते दण्डी विशेषणं, पुरुषो विशेष्यः, सम्बन्धस्तु संयोगः, तथा दार्ष्टान्ते विशेषणं नीलरूपम्, विशेष्यं घटः, सम्बन्धस्तु समवाय इति सिद्धः । एतत्सर्वं प्राङ्निरूपितमेव ॥

**अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य ॥**

(प०) प्रागभावं लक्षयति—अनादिरिति । घटादिवारणाय–प्रथमदलम् ।

परमाणुवारणाय-द्वितीयदलम्। ननुः प्रागभावः कस्मिन्कालेऽस्तीत्यत आह—उत्पत्तेरिति। कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे वर्तते इत्यर्थः।

(दी०) प्रागभावं लक्षयति—अनादिरिति। आकाशादावतिव्याप्तिवारणाय—सान्त इति। घटादौ अतिव्याप्तिवारणाय—अनादिरिति। प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः 'भविष्यतीति' व्यवहारहेतुः प्रागभावः।

---

(कि०) मूले अनादिः सान्त इति। अनादित्वं=स्वनिरूपितप्रतियोगिताशून्यत्वम्, सान्तत्वं=ध्वंसप्रतियोगित्वम्, तथा च स्वनिरूपितप्रतियोगिताशून्यत्वे सति ध्वंसप्रतियोगित्वे सति अभावत्वं प्रागभावत्वम्। स्वं=लक्ष्यत्वेनाऽभिमतः—अभावः। स च भविष्यत्कालीनसत्ताकघटप्रतियोगिताकः, 'घटो भविष्यती'ति प्रतीतिसिद्धः, सम्बन्धाऽनवच्छिन्नप्रतियोगिताकश्च॥ स्वाभावाऽभावरूपस्याकाशस्य—अनादित्वे सति अभावत्वरूपप्रागभावलक्षणाक्रान्तत्वादतिव्याप्तिस्तद्वारकतया दीपिकायां 'सान्त'पदं सार्थकयति—आकाशादावतीति। सान्त इतीति। तथा च गगनादेः ध्वंसप्रतियोगित्वात्मक'सान्तत्व'विरहान्नाऽतिव्याप्तिः॥ घटादावतिव्याप्तीति। घटाभावाभावात्मकघटस्य 'सान्तत्वे सति अभावत्वरूपप्रागभावलक्षणाक्रान्तत्वादतिव्याप्तिः, तद्वारणाय—अनादिरिति। घटस्याऽनादित्वविरहान्नाऽतिव्याप्तिः॥ प्रतियोगिसमवायिकारणवृत्तिरिति। प्रतियोगिनः=घटादेः समवायिकारणे=कपालादौ वर्तमान इत्यर्थः। स च प्रतियोग्यात्मकं कार्यमुत्पाद्य नश्यति, अतः—प्रतियोगिनः=घटादेः जनकः=उत्पादकः, 'भविष्यती'तिशब्दप्रयोगात्मकव्यवहारजनकश्चेति॥

## सादिरनन्तः प्रध्वंसः। उत्पत्त्यनन्तरं कार्यस्य॥

(प०) ध्वंसं लक्षयति—सादिरिति। घटादिवारणाय-अनन्त इति। आत्मादिवारणाय—सादिरिति। उत्पत्तीति। कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः॥ स च 'ध्वस्तः' इति प्रत्ययविषयः॥

(दी०) ध्वंसं लक्षयति—सादिरिति। घटादौ अतिव्याप्तिवारणाय-अनन्त इति। आकाशादौ अतिव्याप्तिवारणाय-सादिरिति। प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः 'ध्वस्त' इति व्यवहारहेतुः ध्वंसः।

---

(कि०) मूले—सादिरनन्त इति। सादित्वं—प्रागभावप्रतियोगित्वम्, अनन्तत्वं=स्वनिरूपितप्रतियोगिताशून्यत्वम्, तथा च—प्रागभावप्रतियोगित्वे सति स्वनिरूपितप्रतियोगिताशून्यत्वे सति अभावत्वं-प्रध्वंसाऽभावत्वम्, स्वं=लक्ष्यत्वेनाऽभिमतोऽभावः। स च सम्बन्धाऽनवच्छिन्नप्रतियोगिताकः। उत्पत्त्यनन्तरं कार्यस्य=कार्यस्योत्तरकालवृत्तिः। 'अत्र कपाले घटो ध्वस्त'इतिप्रतीतिविषयश्च॥ दीपिकायां—घटादाविति। प्रागभावप्रतियोगित्वरूपसादित्वविशिष्टाऽभावत्वस्य घटेऽतिव्याप्तिः, घटस्य स्वाऽभावाऽभावरूपत्वात् प्रागभावप्रतियोगित्वाच्च।

अनन्तत्वोपादाने तु नाऽतिव्याप्तिरिति भावः ॥ आकाशादाविति । पूर्वोक्तयुक्त्या अनन्तत्वविशिष्टाऽभावत्वं अतिव्याप्तम्, सादित्वोपादाने तु नाऽतिव्याप्तिः ॥ स च प्रतियोगिजन्यः= घटाद्यात्मकप्रतियोगिजन्यः प्रतियोगिनो घटादेः समवायिकारणे कपालादौ वर्तमानः 'ध्वस्त' इतिशब्दप्रयोगात्मकव्यवहारजनकश्चेति ॥ यद्यपि-ध्वंसप्रागभावयोः समवायिकारणाऽप्रसिद्धेः ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च प्रतियोगिसमवायिकारणवृत्तित्वमप्रसिद्धम्, तथापि—भावप्रतियोगिकप्रागभावध्वंसाऽभावयोस्तथात्वाऽभिप्रायेणाऽयं ग्रन्थो बोध्यः। वस्तुतस्तु—भावाऽभावोभयसाधारणप्रतियोगिकप्रागभावध्वंसयोः प्रतियोग्यतिरिक्ते देशे काले च वर्तमानत्वमिति नवीनमतं समीचीनम् ॥

**त्रैकालिकसंसर्गाऽवच्छिन्नप्रतियोगिताकोऽत्यन्ताऽभावः। यथा भूतले घटो नास्तीति ॥**

( न्या० ) अत्यन्ताभावं निरूपयति—त्रैकालिकेति । प्रागभावाऽप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे 'त्रैकालिके'ति स्वरूपाख्यानमेवेति बोध्यम् ॥

( प० ) अत्यन्ताभावं लक्षयति—त्रैकालिकेति। त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । ध्वंसप्रागभाववारणाय—त्रैकालिकेति । भेदवारणाय—संसर्गेत्यादि ॥

( दी० ) अत्यन्ताभावं लक्षयति—त्रैकालिकेति । अन्योन्याभावेऽतिव्याप्तिवारणाय--संसर्गावच्छिन्नेति। ध्वंसप्रागभावयोरतिव्याप्तिवारणाय--त्रैकालिकेति।

---

( कि० ) मूले—त्रैकालिकेति । त्रैकालिकः=नित्यः । तथा च नित्यत्वे सति तादात्म्यसंसर्गाऽतिरिक्तसंसर्गाऽवच्छिन्नप्रतियोगिताकाऽभावत्वं अत्यन्ताभावत्वमिति लक्षणार्थः। स च 'भूतले घटो नास्ती'तिप्रतीतिसिद्धः। तत्र सप्तम्यर्थो वृत्तित्वम्, नञर्थाऽभावे प्रतियोगितासम्बन्धेन घटस्याऽन्वयः, तथा च—'भूतलवृत्तिर्घटप्रतियोगिताकाऽभाव' इति बोधः, अयमभावः—प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यधिकरणं विहायाऽन्यत्र वर्तते, येन सम्बन्धेन यस्याऽभावः स सम्बन्धःप्रतियोगितावच्छेदकः, संयोगेन घटो नास्तीत्यत्र संयोगः प्रतियोगिताऽवच्छेदकः सम्बन्धः ॥ लक्षणे तादात्म्यसंसर्गाऽतिरिक्तसंसर्गावच्छिन्नत्वार्थक—'संसर्गावच्छिन्नत्वा'ऽनुपादाने नित्यत्वाऽर्थक—त्रैकालिकत्वस्य तादात्म्यसंसर्गाऽवच्छिन्न प्रतियोगिता-

कत्वस्य च अन्योऽन्याभावे सत्त्वात् अतिव्याप्तिरित्याह—दीपिकायां—अन्योन्याभावेऽति-व्याप्तीति । संसर्गावच्छिन्नत्वोपादाने तु—अन्योन्याभावीयप्रतियोगितायास्तादात्म्याऽतिरिक्त-संसर्गावच्छिन्नत्वविरहान्नाऽतिव्याप्तिरिति ॥ ध्वंसप्रागभावयोरतिव्याप्तीति । प्राचीनमते ध्वंसप्रागभावयोरपि तादात्म्यभिन्नपूर्वकालत्वोत्तरकालत्वात्मकसंसर्गावच्छिन्नप्रतियोगिकत्वेन नित्यत्वार्थक-त्रैकालिकत्वाऽनुपादाने ध्वंसप्रागभावेऽतिव्याप्तिः स्यात् । तदुपादाने तु तयोर्नि-त्यत्वविरहान्नातिव्याप्तिरिति ॥

**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ॥**

( न्या० ) अन्योन्याभावं निरूपयति—तादात्म्येति ॥ अभाव-त्रयवारणाय-विशेषणम्, 'घटाभाववान् ने'ति प्रतीतिविषयघटादिवारणाय-विशेष्यम् ।

( प० ) अन्योन्याभावं लक्षयति—तादात्म्येति । प्रागभावप्रध्वंसाभाव-वारणाय-तादात्म्येति । अत्यन्ताभाववारणाय-तादात्म्यत्वेन सम्बन्धो विशेषणीयः ॥

( दी० ) अन्योन्याभावं लक्षयति—तादात्म्येति । प्रतियोगितावच्छेदकारोप्य-संसर्गभेदात् एकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम् । 'केवलदेव-दत्ताभावात् दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः, 'एकसत्त्वेऽपि द्वौ न स्तः'

---

( कि० ) मूले—तादात्म्येति । तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता यस्य सः एतादृशोऽभाव इत्यर्थः । तादात्म्यसम्बन्धेन घटः स्वस्मिन्नेव वर्तते न तु कपाले भूतलेऽन्यत्र वा, तथा च तादात्म्यसम्बन्धेन घटादेरभाव एव अन्योन्याभाव इति स च प्रतियोगितावच्छेदकी-भूतघटत्वादिमद्घटादिकं विहायाऽन्यत्र वर्तते इति । प्रागभावध्वंसवारणाय—लक्षणे तादात्म्येति । अत्यन्ताभाववारणाय—तादात्म्यत्वं सम्बन्धांशे निवेशितम् । 'घटःपटो ने'त्यस्य 'पटप्रतियोगिक-भेदवान् घट'इत्यर्थः ॥ यथा—एकप्रतियोगिकौ ध्वंसप्रागभावौ भिन्नौ' तथा एकप्रतियोगिक-स्याऽत्यन्ताभावस्याऽन्योन्याभावस्य च प्रयोजक-भेदाद् बहुविधत्वमिति प्राचीनमतं दर्शयति—प्रतियोगितेति । प्रतियोगितावच्छेदकधर्मस्य घटत्वस्य तद्घटत्वादेश्च, आरोप्यस्य=प्रतियोगि-घटादेः, संसर्गस्य=संयोगसमवायादेः, भेदात्=नानात्वात् । तथा च-प्रतियोगितावच्छेदक-धर्मसंसर्गनानात्वं अत्यन्ताभावबहुत्वप्रयोजकम्, प्रतियोगितावच्छेदकधर्मनानात्वं—अन्योन्या-भावनानात्वप्रयोजकमिति भावः ॥ तदेव दर्शयति—केवलेति । केवलविशेष्याऽभावो—विशेषणविशिष्टविशेष्याऽभावादतिरिक्तः । दण्ड्यभावः=दण्डविशिष्टदेवदत्ताऽभावः, अतिरिक्त—इत्यग्रतनेनाऽन्वयः । केवलाद्विशिष्टस्याऽनतिरिक्तत्वे तु केवलदेवदत्तवति 'दण्डविशिष्टदेवदत्तो नास्ती'तिसर्वाऽनुभवसिद्धप्रतीतिविलोपाऽऽपत्तेः ॥ उभयाऽभावस्याऽतिरिक्तत्वे प्रमाणं दर्शयति—एकसत्त्वेऽपीति । भूतले घटसत्त्वेऽपि'घटपटौ न स्त'इतिप्रतीत्या घटपटोभयत्वाऽवच्छिन्ना-

इति प्रतीत्या द्वित्वाव च्छिन्नाभावः, संयोगसम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः । एवमन्योन्याभावोऽपि । 'घटत्वेन पटो नास्ती'ति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते । पटे घटत्वं नास्तीति तस्यार्थः । अतिरिक्तत्वे स केवलान्वयी ।

---

ऽभावः केवलघटाऽभावादतिरिक्त इत्यर्थः, उभयाऽभावस्य केवलाऽभावाऽनतिरिक्तत्वे केवलघटवति'घटपटोभयं नास्ती'तिप्रतीतिर्न स्यात् ॥ सम्बन्धभेदेनाऽभावाऽतिरिक्ततां दर्शयति–**संयोगेति**। संयोगेन घटवति भूतले समवायेन घटाऽभावः संयोगावच्छिन्नघटाऽभावाद्भिन्न इत्यर्थः। संयोगावच्छिन्नप्रतियोगिताकाऽभावस्य समवायाऽवच्छिन्नप्रतियोगिताकाऽभावस्य चैक्ये संयोगेन घटवति समवायेन घटो नास्तीति प्रत्ययो न स्यात् ॥ सामान्यविशेषाऽभावयोरतिरिक्ततां दर्शयति–**तत्तदिति**। तत्त्व-घटत्व-धर्मद्वयाऽवच्छिन्नप्रतियोगिताकाऽभावात् घटत्वमात्राऽवच्छिन्नंप्रतियोगिताकाभावो भिन्नः, नीलघटाभाववति तद्भिन्नघटस्य संभवात्, अन्यथा यत्किञ्चद्घटवति'घटो नास्ती'तिप्रत्ययाऽऽपत्तिः,—घटाऽन्तरवति तद्घटाभावप्रत्ययाऽनुपपत्तिश्च स्यात् ॥ **एवमन्योऽन्याऽभावोऽपीति** । केवलघटाऽन्योन्याऽभावात् रक्तत्वादिविशेषणविशिष्टाऽन्योन्याऽभावो भिन्नः, घटपटोभयभेदश्च भिन्नः, अन्यथा केवलघटे विशिष्टघटभेदप्रतीत्यनुपपत्तिः स्यादिति भावः ॥ **नवीनास्तु**—घटत्वेन पटाभावः सर्वत्राऽस्ति, घटत्वेन पटस्य कुत्राऽप्यसत्त्वात्, सोऽयं व्यधिकरणधर्मावच्छिन्नाऽभावः केवलाभावादतिरिक्त"इति **वदन्ति**, तद्दूषयति—**घटत्वेनेत्यादिना** । अभावज्ञाने प्रतियोगितावच्छेदकविशिष्टज्ञानस्य कारणतया घटत्वविशिष्टपटाऽप्रसिद्धेः तादृशप्रतियोगिज्ञानाऽभावात् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाऽभावप्रतीतिरेवाऽप्रसिद्धेति भावः । यदि च घटत्वेन पटो नास्तीतिप्रतीतिर्भवति तदा तस्य घटत्वावच्छिन्नपटाऽभाव'—इति नाऽर्थः किन्तु 'पटवृत्तिर्घटत्वाऽभाव'इत्यर्थः, स च केवलात्यन्ताऽभाव एवेति भावः ॥ ननु 'घटत्वेन पटो नास्ती'तिप्रतीतेः पटाऽधिकरणकघटत्वाऽभावाऽगाहित्वं न संभवति, किन्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांऽशे स्वातन्त्र्येण घटत्वस्याऽवगाहनात् तत्र व्यधिकरणधर्मावच्छिन्नाऽभावः सप्रमाण इति चेत् ! तत्राऽऽह—**अतिरिक्तत्वे–इति** । पटाऽधिकरणकघटत्वाऽभावादतिरिक्तत्वे तु सः = व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽभावः केवलान्वयी=सर्वत्र वर्तते, अत्यन्ताभावाऽप्रतियोगित्वादिति भावः ॥ "भूतले घटसत्त्वसमये न घटाभावप्रतीतिः, घटाऽसत्त्वदशायां तु घटाभावप्रतीतिर्भवति, अत उत्पत्तिविनाशशाल्ययमभाव' इति मतम्,—'घटवत्यपि देशे समयाऽन्तराऽवच्छिन्नघटाऽभावस्य वर्तमानत्वात् सामयिकाऽभावोऽपि सर्वाऽभावेभ्योऽतिरिक्त इति मतं,—च निराकरोति—**सामयिकाऽभावेति**। प्रतियोग्यनाधारसमये प्रतीयमानोऽत्यन्ताऽभाव एव सामयिकाऽभावो नत्वतिरिक्तः, नच उत्पादविनाशशालीत्यभावोऽपि कश्चित्, किन्तु–अत्यन्ताऽभाव एवेति भावः ॥ नन्वेवं भूतले घटाऽनयनदशायामपि 'घटाऽभाववदि'तिप्रत्ययाऽऽपत्तिः, तस्य नित्यत्वेन तत्र

सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः । घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे सति प्रतीतेर्भूतले घटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः । घटापसरणे च संयोगध्वंससत्त्वात्प्रतीतिरिति ॥ "केवलाधिकरणादेव नास्तीतिव्यवहारोपपत्तौअभावो न पदार्थान्तरमिति गुरवः" . तन्न । अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात् । अभावाभावो भाव एव, नातिरिक्तः, अनवस्थाप्रसङ्गात् । ."ध्ववंसप्रागभावः प्राग-

---

सत्त्वादित्यत आह--घटाऽभाववतीति । घटाऽभाववति भूतले घटाऽऽनयने सत्यपि तदानीं घटाऽत्यन्ताऽभावस्याऽन्यत्र स्थले गमनाऽभावेऽपि ( तस्य क्रियावत्त्वविरहादित्यभिप्रायः ) अप्रतीतेः=घटाऽभावप्रत्ययस्याऽसंभवात्, अथ च-घटस्याऽपसारणे सति घटाऽत्यन्ताऽभावस्य प्रतीतेः=घटाभावप्रत्ययस्य संभवात्, घटात्यन्ताभावप्रतीतिनियमजनकत्वं घटभूतलयोर्यः संयोगस्तत्प्रागभावध्वंसयोरेवेति भावः ॥ प्रतीतिनियामकत्वम्---अन्वयव्यतिरेकाभ्यां दर्शयति---**घटवतीति** । घटाऽनयनकाले घटवति भूतले घटभूतलयोर्यः संयोगस्तस्य प्रागभावध्वंसयोरभावात् घटाऽत्यन्ताऽभावस्याऽप्रतीतिः, ततो घटाऽपसारणे च 'घटभूतलयोर्यः संयोगस्तद्ध्वंस' सत्त्वेन घटात्यन्ताऽभावस्य प्रतीतिरित्यर्थः ॥ ननु अभावोऽधिकरणाऽऽत्मक एव, नत्वतिरिक्तः पदार्थः;—यत्र भूतले घटाभावस्तत्र केवलाऽधिकरणेनैव घटाऽभावप्रतीतिनिर्वाहात्, अक्लृप्ताऽभावाऽऽत्मकधर्मिकल्पनाऽपेक्षया क्लृप्ताऽधिकरणकल्पनाया लघीयस्त्वात्---इति—गुरुमतं दर्शयति---**केवलाऽधिकरणादेवेति** । गुरवः=प्राभाकरमीमांसकाः ॥ तन्मतं निराकरोति---**तन्नेति** । अभावस्याधिकरणाऽतिरिक्तत्वाऽनङ्गीकारे भवदुक्तं यत्—'केवलाऽधिकरणादेवे'त्यत्र केवलत्वम्, तस्य निर्वचनमेव विलुप्तं स्यात्, यतः—किं नाम'नास्ती'तिव्यवहारकाले भूतले केवलत्वम ? यदि-भूतलात्मकत्वमात्रम् ? तदा घटवद्भूतलस्याऽपि तादृशभूतलात्मकत्वेन तदानीं तत्र घटाभाववत्ताबुद्धिप्रसंगः स्यात् । यदि च घटाभाववत्त्वमेव केवलत्वं घटाभाववद्भूतले वर्तते न तु सर्वत्रेत्युच्यते । तदा घटाऽभावोऽतिरिक्तः सिद्ध एव केवलभूतलप्रतीतिविषय इति । इत्येवमभावस्याऽधिकरणात्मकत्ववादिमते उभयथाऽपि केवलत्वस्य निर्वक्तुमशक्यत्वात् अभावोऽतिरिक्त इति भावः । **वस्तुतस्तु**—कैवल्यं=प्रतियोग्यनवच्छिन्नत्वम्, तथा चाऽभावाऽनङ्गीकारे कस्याऽधिकरणं कस्य वा प्रतियोगी भवेदिति ध्येयम् ॥ **किञ्च**—येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यते'इति नियमेन तत्तद्गन्धरूपरसाद्यभावानां कालाकाशादिवृत्तीनां कालाऽऽकाशाद्यात्मकत्वे तत्तदिन्द्रियेण कालाऽऽकाशादीनामग्रहणात् तेपामप्रत्यक्षाऽऽपत्तिः स्यादित्यपि बोध्यम् ॥ नन्वभावस्याऽतिरिक्तत्वे तदभावोऽप्यतिरिक्तः, एवं तदभावोऽपी त्येवमनवस्था स्यादित्यत आह—**अभावाऽभावो भाव एवेति** । घटाऽभावाऽभावो घट एवेति । न त्वतिरिक्तः, अनवस्थाऽऽपत्तेरिति भावः ॥ **ध्वंसप्रागभावइति** । घटध्वंसस्य प्रागभावः-

भावध्वंसश्च प्रतियोग्येवेति प्राञ्चः"। "अभावाभावस्त्वतिरिक्त एव। तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्थेति नवीना" ॥

स्व ( प्रागभाव ) प्रतियोगिध्वंसप्रतियोग्यात्मकघटस्वरूपः, घटप्रागभावस्य ध्वंसः स्व ( ध्वंस )-प्रतियोगिप्रागभावप्रतियोग्यात्मकघटस्वरूप एवेत्यर्थः, इदं प्राचीनमतम्। नवीनास्तु घटप्रागभाव-दशायामपि 'उत्पत्स्यमानघटो ध्वस्तो भविष्यती'ति प्रतीत्या घटध्वंसस्य प्रागभावसत्ताया अवगमात् घटध्वंसप्रागभावो घटाऽतिरिक्तः। एवं घटध्वंसदशायामपि 'घटप्रागभावो नष्ट'-इतिप्रतीत्या घटप्रागभावस्य ध्वंससत्ताया अवगमात् घटप्रागभावस्य ध्वंसो घटाऽतिरिक्त इति सिद्धान्तयन्ति। नवीनानां मतं दर्शयति—अभावाऽभावस्त्विति। घटाऽभावाऽभावो घटातिरिक्तोऽभावपदार्थ एव, न तु भावपदार्थ इति तदर्थः। तत्र युक्तिः—अभावस्य स्वरूप-सम्बन्धेन वृत्तिता सर्वमतसिद्धा, न तु समवायेन संयोगेन वा, तथा च स्वरूपेण भूतले घटाभाव इव, घटदशायां भूतले 'घटाभावो नास्ती'तिप्रतीत्या घटाऽभावाऽभावस्य स्वरूपेण वृत्तित्वं न तु संयोगेनेति ॥ नन्वेवमनवस्था तदवस्थैवेत्यत आह—तृतीयाऽभावस्येति। घटाऽभावाऽभावाभावस्य तु घटाभावस्वरूपत्वान्नाऽनवस्थेत्यर्थः ॥

**सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम्।**

( न्या० ) ननु सादृश्यादीनां अतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह सर्वेषामिति। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव-तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्व-ज्ञानान्निःश्रेयसाधिगमः" इति न्यायस्यादिमसूत्रे उक्तानां प्रमाणप्रमेयादीना-मित्यर्थः। तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपसादृश्यस्यापि घटपटादिरूप-त्वेन नाऽतिरिक्तत्वम्, एवमन्येषामप्यूह्यम्, विस्तरस्त्वन्यत्रानुसन्धेयः।

( दी० ) ननु "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवाद-जल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायशास्त्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह—सर्वेषामिति। सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः। 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफल-

( कि० ) परमकारुणिकेन न्यायविद्याऽऽविष्कर्त्रा गौतममहर्षिणा षोडशपदार्थाः स्वीकृताः, अत्र च सप्त, तथा च तदकथनेन मूलस्य न्यूनता स्यादित्याशयेन—तादृशपदार्थानाम-त्रैवाऽन्तर्भावं प्रदर्शयितुं शंकते—नन्विति। प्रत्यक्षप्रमाणस्येन्द्रियात्मकस्य यथायथं द्रव्येष्वन्त-र्भावस्य अनुमानादीनां यथायोगं गुणेऽन्तर्भावस्य स्फुटत्वात् प्रमेयादीनां द्रव्येष्वन्तर्भावमाह—

दुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम् । प्रवृत्तिर्धर्माधर्मौ । रागद्वेषमोहा दोषाः । रागः इच्छा । द्वेषो मन्युः । मोहः शरीरादौ आत्मत्वभ्रमः । प्रेत्यभावो मरणम् । फलं भोगः । अपवर्गो मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनं सुखप्राप्तिः दुःखहानिश्च । दृष्टान्तो महानसादिः । प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः । निर्णयो निश्चयः । स च प्रमाणफलम् । तत्त्वबुभुत्सोः कथा वादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापन-

---

**आत्मेत्यादिना** । आत्मशरीरेन्द्रियाणां–द्रव्ये, गन्ध-रूप रस स्पर्श–शब्दानां–गुणे, बुद्धेर्गुणे, मनसो-द्रव्ये, अन्तर्भाव इति ॥ प्रवृत्तिमाह–**धर्माऽधर्माविति** । धर्माऽधर्मजनिका गुणेऽन्तर्भूता ॥ दोषानाह–**रागद्वेषमोहा इति** । ते च क्रमश इच्छा–मन्यु–मिथ्याज्ञानाऽन्तर्भूता इति ॥ प्रेत्यभावः–प्रेत्य=मृत्वा, भावः=जननम्, चरमप्राणशरीरसंयोगध्वंसो=मरणम् । आद्यशरीरप्राणसंयोगः=जननम् । मरणस्य=ध्वंसे, जननस्य–संयोगे, अन्तर्भावः । फलस्य=सुखदुःखसंवेदनात्मकभोगस्य–ज्ञाने, दुःखस्य=गुणे, आत्यन्तिकदुःखध्वंसाऽऽत्मकमोक्षस्य—ध्वंसे, अन्तर्भाव इति ॥ **स चेति** । स्वपदेन मुक्तपुरुषीयदुःखध्वंसोपादाने तदधिकरणवृत्तिदुःखप्रागभावस्यैवाऽप्रसिद्ध्याऽसंभवाऽऽपत्तिः स्यात् अतः–स्वं= (अस्मदादि) दुःखध्वंसः, तादृशदुःखध्वंससमानाधिकरणो यो दुःखप्रागभावः तत्समानकालीनो यो यो (स्वपदप्रतिपाद्यो) दुःखध्वंसस्तदन्यदुःखध्वंसो मोक्षः इति तदर्थः । दुःखध्वंसमात्रस्य मुक्तित्वेऽस्मदादीनामपि मुक्तत्वापत्तिरतः–कालीनान्तं स्वपदार्थविशेषणम्, मुक्त्यात्मकदुःखध्वंसस्याऽन्यदीयदुःखप्रागभावसमकालीनत्वाद् व्यासादीनाममुक्तत्वाऽऽपत्तिवारणाय—स्वसमानाधिकरणेति—प्रागभावविशेषणम् । 'दुःख' पदानुपादाने मुक्तात्मघटसंयोग–ध्वंसस्यापि स्वसमानाधिकरणदुःखप्रागभावसमानकालीनाऽन्यध्वंसत्वात् मोक्षस्वरूपत्वप्राप्त्या तादृशध्वंसवतो घटादेरपि मोक्षापत्तिवारणाय–दुःखध्वंसेत्युक्तम् । अनुगमस्तु–दुःखध्वंसविशिष्टाऽन्यदुःखध्वंसो मुक्तिः । वैशिष्ट्यं च–स्वतादात्म्य–स्वसमानाधिकरणदुःखप्रागभावकालीनत्वोभयसम्बन्धेनेति । स्वं=अस्मदादिदुःखध्वंसः, निरुक्तोभयसम्बन्धेन 'तद्विशिष्टः' स एव, तदन्यः–आत्यन्तिकदुःखध्वंस इति ॥ संशयस्य–ज्ञानेऽन्तर्भावः । प्रयोजनं दर्शयति–**प्रयोजनमिति** । प्रवृत्तिहेत्विच्छाविषयत्वं प्रयोजनत्वम्, विषयत्वं=साध्यताख्यविषयताविशेषः । तथा च प्रवृत्तिहेत्विच्छाविषयात्मकं प्रयोजनं–सुखप्राप्तिः, दुःखाभावश्चेति । सुखप्राप्तिः=आत्मनि सुखसम्बन्धः । दुःखहानिः=दुःखध्वंसः । तादृशविषये यथायोगं प्रयोजनस्याऽन्तर्भाव इति । दृष्टान्तस्य यथायथं महानसादिद्रव्यादिष्वन्तर्भाव इति । प्रामाणिकतयाऽभ्युपगतः पदार्थः=सिद्धान्तः, स च द्रव्यादिषु यथायोगमन्तर्भवति । शब्दस्वरूपप्रतिज्ञाद्यवयवानां-गुणे, तर्कस्य–आहार्यज्ञानात्मकस्य गुणे, निर्णयस्य ज्ञाने अन्तर्भावः ॥ **स चेति** । निर्णयः–प्रमाणफलम्–प्रमेतियावत् ॥ तत्त्वबुभुत्सोः='इदमित्थ'-मित्याकारकं यत्तत्त्वं तद्विषयकज्ञानेच्छावतः कथायाः=शब्दात्मिकायाः–गुणेऽन्तर्भावः ॥ उभय-

हीना वितण्डा। कथा नाम—नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः। अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं छलम्। असदुत्तरं जातिः साधर्म्य-वैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रक-

---

साधनवतीति। परपक्षस्वपक्षस्थापनावतीत्यर्थः। विजिगीषोः=जयेच्छावतः कथात्मकस्य जल्पस्य-शब्दे, स्वपक्षस्थापनाहीनाया विजिगीषुकथायाः—शब्दैः, अन्तर्भावः॥ कथास्वरूपं दर्शयति-**नानावक्तृक इति**। एकभिन्नवक्तृकः। तच्च सन्दर्भविशेषणम्, वाक्यसन्दर्भो नाम वाक्यसमूह इति। तथा च-पूर्वपक्षोत्तरपक्षप्रतिपादक-न्यायानुगतवाक्यसन्दर्भः कथा इति। अनुमिति तत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयरूपाणां हेत्वाभासानां-यथायथं द्रव्यादिष्व-न्तर्भावः॥ छलं दर्शयति-**अभिप्रायान्तरेणेति**। यथा 'नवकम्बलोऽयं देवदत्त' इति नवीन-कम्बलतात्पर्येण प्रयुक्तस्य नवत्वसङ्ख्याविशिष्टमर्थान्तरं परिकल्प्य दूषयति कश्चित्-'नाऽस्य नवसंख्याकाः कम्बलाः सन्ति दरिद्रत्वा'दिति। एतादृशदूषणाभिधानरूपशब्दात्मकच्छलस्य—गुणे, असदुत्तरात्मकजातेश्च-गुणे, निग्रहस्थानानां च-यथायथं द्रव्ये, अन्तर्भाव इत्यर्थः॥ स्वव्याघातकमुत्तरं जातिरिति तल्लक्षणम्। तदवान्तरभेदान् दर्शयति-**साधर्म्येत्यादिना**। 'समा'शब्दो द्वन्द्वान्ते श्रूयमाणः प्रत्येकमभिसम्बध्यते तेन साधर्म्यसमा—वैधर्म्यसमेत्यादिरूपाश्चतु-र्विंशतिजातयो बोध्याः॥ तत्र साधर्म्येण स्थापनहेतुदूषकमुत्तरं-**साधर्म्यसमा,**' यथा 'शब्दः अनित्यः-कृतकत्वात्,-घटवत्, व्यतिरेकेण वा व्योमवत्, इतिस्थापनायामुत्तरम्—नैतदेवम्, यद्यनित्यघटसाधर्म्यात् नित्याकाशवैधर्म्याद्वाऽनित्यः स्यात् तर्हि नित्याकाशसाधर्म्यात् अमूर्तत्वाच्च नित्यः स्यात् विशेषहेतुर्वा वक्तव्य इति—१॥ वैधर्म्येण दूषकमुत्तरं—'**वैधर्म्यसमा**' यथा 'शब्दः—अनित्यः, कृतकत्वात, घटवत, आकाशवद्वा, इति स्थापनायाम्—उत्तरम्—अनित्यघट-वैधर्म्यात् अमूर्तत्वात् नित्यः स्याद् विशेषहेतुर्वा वक्तव्य इति—२॥ पराऽभिहितहेतोरेव तदव्यापकस्य धर्मस्य पक्षे आपादनम्—'**उत्कर्षसमा**', यथा शब्दः—अनित्यः,-कृतकत्वात्, घटवत्, इत्यत्र—उत्तरम्-'यदि कृतकत्वेन साधनेन शब्दो घटवद् अनित्यः स्यात्, तर्हि तेनैव साधनेन शब्दो घटवत् सावयवः स्यात्—३॥ पराभिहितदृष्टान्तसाधर्म्येण पक्षे पराभिप्रेतधर्मा-न्तरस्याऽभावसाधनं-'**अपकर्षसमा**'—यथा तत्रैवानुमाने 'यदि कृतकत्वेन शब्दो घटवद् अनित्यो भवेत्, तर्हि तेनैव हेतुना शब्दो घटवद् अश्रावणो भवेदिति—४॥ वर्ण्यस्य—स्थापनो-यस्य दृष्टान्तधर्मस्य पक्षे साधनं—'**वर्ण्यसमा**'। यथा 'आत्मा-सक्रियः,-क्रियाजनकगुण-वत्वात्,-लोष्टवत्, क्रियाहेतुगुणश्चाऽत्र क्रियाजनकवायुसंयोगादिः, अत्र क्रियाजनकनोदनाख्य-संयोगवत्त्वाल्लोष्टादेरस्तु क्रियावत्त्वं आत्मनस्तु क्रियावत्त्वे तदुत्पादकनोदनाभिधसंयोगवत्त्वमपि भवेदिति-५॥ साध्यसाधनयोर्धर्मयोरपि पक्षे समताऽऽपादनम्-'**अवर्ण्यसमा**'—यथा तत्रैव 'लोष्टादौ वर्तमानं क्रियाजनकनोदनात्मकगुणवत्त्वम् आत्मनि असिद्धम्, तथा च यथाऽसिद्धेन क्रियाजनकगुणवत्त्वेन आत्मनि क्रियावत्त्वं साध्यते तथा तुल्यतया तादृशेन क्रियावत्त्वेन क्रिया-

रणाऽहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्याऽनित्यकार्यसमजातयः। वादिनोऽ-

---

जनकनोदनाख्यगुणवत्त्वमपि कस्मान्न साध्यते, नियामकाऽभावात्-६॥ दृष्टान्ते विकल्पं कृत्वा दार्ष्टान्तिके विकल्पकथनं—'**विकल्पसमा**'—यथा तत्रैवानुमाने क्रियाजनकगुणयुक्तमपि किञ्चिद्-गुरु, यथा लोष्टादिकं, किञ्चिच्च लघु यथा पवनः, एवमेव क्रियाजनकगुणयुक्तं किञ्चित् क्रियावद् भवेत् यथा लोष्टादि, किञ्चिच्च क्रियाशून्यं यथाऽऽत्मा पूर्वं विकल्पो भवति अत्र तु न भवतीत्यत्र किं नियामकं स्यात्—७॥ दृष्टान्तस्य पक्षसमताकथनं '**साध्यसमा**'। साध्य-शब्दोऽत्र—'पक्ष' वाची 'यदि'यथा लोष्टस्तथाऽऽत्मा' इति भवता उच्यते, तदा 'यथाऽऽत्मा तथा लोष्ट' इत्यपि समायातम्, तथा च यथात्मनि साध्यते क्रियावत्त्वं तर्हि लोष्टेऽपि क्रियावत्त्वं साधनीयम्। न इति चेत्! तर्हि यथा लोष्टस्तथाऽऽत्मेत्यपि न वक्तव्यम्, लोष्टसदृश आत्मा नत्वात्मसदृशो लोष्ट, इत्यत्र विनिगमकाऽभावादिति-८॥ प्राप्त्या प्रत्यवस्थानं—'**प्राप्तिसमा**'। प्राप्तिर्नाम—साध्यसाधनयोः सामानाधिकरण्यम्, प्रत्यवस्थानं नाम—साध्यसिद्धिः। यथा तत्रैव अनुमाने क्रियाजनकगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते, किमिति च क्रियावत्त्वेन क्रियाजनकनोदनात्मकगुणवत्त्वं न साध्यते, उभयोरप्यविशेषादिति—९॥ अप्राप्त्या प्रत्यवस्थानं—'**अप्राप्तिसमा**'—यथा तत्रैवानुमाने पूर्वोक्त'प्राप्तिसमा'रूपदोषात् अप्राप्तस्य कस्यचिद्धेतोः साध्यसाधकत्वं वक्तव्यम्, तथा च अप्राप्तत्वाऽविशेषात् स सर्वः सर्वं साधयेदिति। अथवा—अयमेव हेतुः साध्याभावं किमिति न साधयेत्, विनिगमकाऽभावादिति—१०॥ हेतुपरम्परा-प्रश्नः—'**प्रसङ्गसमा**' यथा क्रियावत्त्वे क्रियाजनकगुणवत्त्वं हेतुः, तत्र च को हेतुः? नहि हेतुमन्तरेण कस्यचित् सिद्धिः, एवं तत्राऽपि को हेतुरित्यादि-११॥ अन्येन दृष्टान्तेन साध्याभावस्य साधनं—'**प्रतिदृष्टान्तसमा**'—यथा लोष्टात्मकदृष्टान्तेन क्रियावत्त्वे साधिते क्रयाशून्यगगनात्मकदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न भवेत्, एकदृष्टान्तेन सक्रियत्वं अपरदृष्टान्तेन निष्क्रियत्वं न, इत्यत्र विनिगमकाऽभावादिति—१२॥ अनुत्पत्त्या प्रत्यवस्थानम्, '**अनुत्पत्तिसमा**'—यथा 'शब्दः—अनित्यः,—प्रयत्ननान्तरीयकत्वात्, घटवत्, इत्युक्ते अपर आह—प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्ननान्तरीयकत्वं नास्ति, तदभावात् नित्यत्वं प्राप्तम्, नित्यस्य चोत्पत्तिर्नास्तीति—१३॥ साधारणधर्मप्रदर्शनद्वारा संशयोद्भावनम्—'**संशयसमा**'—यथा शब्दः—अनित्यः,—कार्यत्वात्, घटवदित्यत्र शब्दस्याऽनित्येन घटेन समं कार्यत्वात्मकं साधर्म्यं यथाऽस्ति, तथा नित्येन शब्दत्वेन समं श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्ति, इत्युभय-दर्शनात् संशयो भवेत्, एकत्र कोटौ—नियामकाऽभावादिति—१४॥ वादिप्रयुक्तसाधनस्य साध्याऽभावसाधकसाधनान्तरोद्भावनं—'**प्रकरणसमा**'—यथा शब्दः—अनित्यः—कृतकत्वा-दित्युक्ते, उत्तरम्,— देवम्, श्रावणत्वेन हेतुना नित्यत्वसाधकेन बाधादिति—१५॥ कालत्रयेऽपि साधन संभवेन असाधनकत्वकथनम्—'**अहेतुसमा**'—यथा—कार्यत्वा-त्मकहेतुः अनित्यत्वात्मकसाध्यात् पूर्वकालवृत्तिश्चेत्! तदा अनित्यत्वात्मकसाध्यस्य हेतुसमयेऽ-

पजयहेतुर्निग्रहस्थानम्। प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः,

भावात् कस्य साधकः ? अथ च पश्चात्समयवृत्तिश्चेत् ! तदा पूर्वसमये साधनविरहात् कस्य साध्यं--अनित्यत्वम्, यदि चोभयमेकसमयवृत्ति ! तदा किं कस्य साध्यं किं कस्य साधकम्! विनिगमनाऽभावादिति—१६॥ अर्थापत्तिं पुरस्कृत्य साध्याऽभावोद्भावनम्—'**अर्थापत्तिसमा**'— यथा—शब्दपक्षकाऽनुमाने—यदि अनित्यत्वसाधर्म्यात् शब्दस्याऽनित्यत्वं तदा नित्यत्वसाधर्म्याद् अर्थापत्त्या नित्यत्वमपि सिद्धम्, एकतरनिर्णये नियामकाऽभावादिति—१७॥ सर्वाऽविशेषप्रसङ्गोद्भावनम्—'**अविशेषसमा**'—यथा तत्रैव यदि कृतकत्वात्मकेनाऽनित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वं, तदा प्रमेयत्वात्मकेन घटादिसाधर्म्येण सर्वस्यैवाऽनित्यत्वं भवेत्, अस्मदुक्तसाधर्म्येणाऽनित्यत्वं सिद्ध्यति न तु भवदुक्तेनेत्यत्र नियामकाऽभावात्--१८॥ उभयपक्षसाधर्म्येण हेतूपपत्तिकथनम्--'**उपपत्तिसमा**'—यथा 'यदि चाऽनित्यत्वस्य साधकं कार्यत्वमुपपद्यतेऽतः शब्दस्याऽनित्यत्वम्, तदा नित्यत्वस्य साधकमपि किञ्चिदुपपद्यते, इति नित्यत्वं किं न भवेदिति— १९॥ वादिना दर्शिते हेत्वभावेऽपि साध्यस्योपलब्धिकथनं—'**उपलब्धिसमा**'—यथा-शब्दः- अनित्यः,—प्रयत्नानुविधायित्वात्, घटवत्, इत्यत्र प्रयत्नमन्तरेणाऽपि पवननोदनसामर्थ्यात् तरुशाखाभङ्गजन्यस्य शब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्दे भवतीति--२०॥ वादिना अनुपलब्धिसामर्थ्यात् कस्यचित्पदार्थस्याऽस्वीकारेऽनुपलब्धिसामर्थ्यादेव वादिसम्मतस्यापि यत्किञ्चित्पदार्थस्याऽभावसाधनम्—'**अनुपलब्धिसमा**'—यथा—सलिलस्य विद्यमानस्यापि आवरणबलादनुपलब्धिः, तद्वत् शब्दस्य विद्यमानास्याप्युच्चारणपूर्वमावरणबलादनुपलब्धिरित्येतन्मतं वादिना दूष्यते–शब्दो यद्यावरणबलान्नोपलभ्यते, तदा सलिलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति, अत्रोत्तरम्—यदि भवता अनुपलब्धित आवरणबलाच्छब्दो नोपलभ्यते तदाऽनुपलब्धेरप्यनुपलब्ध्यभावे सिद्धेऽनुपलब्ध्यभावाद् आवरणसिद्धिरिति—२१॥ धर्मस्य नित्यत्वाऽनित्यत्वविकल्पात् धर्मिणो नित्यत्वसाधनं—'**नित्यसमा**'—यथा 'शब्दस्य यदनित्यत्वमुच्यते भवता, तद् अनित्यं नित्यं वा, यद्यनित्यम्, तदा शब्दे कदाचित् अनित्यत्वाभावोऽस्तीति नित्य एव शब्दः, अथ नित्यम्, तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथा नित्यत्वमागतमित्युभयथाऽपि नित्यत्वं शब्दस्य—२२॥ अनित्यदृष्टान्तसाधर्म्यात् सर्वाऽनित्यत्वोद्भावनं— '**अनित्यसमा**'। यथा यद्यनित्येन घटेन सादृश्याच्छब्देऽनित्यत्वमुपपाद्यते तदा येन केनचिद्धर्मेण परमाण्वादिसर्वस्यैव घटसदृशत्वात्सर्वस्याऽनित्यत्वप्रसङ्गः—२३॥ वादिप्रयुक्तहेतोरन्यकार्येणाऽपि संभवाऽभिधानं—'**कार्यसमा**'—यथा शब्दे एव प्रयत्नानुविधायित्वमुभयथाऽपि संभवति--घटादिवच्छब्दस्वरूपोत्पत्तौ,—जलादिवत् आवरकनिवृत्तौ च, उभयत्राऽपि प्रयत्नानुविधायित्वदर्शनात्, एवं च शब्दस्य प्रयत्नेनाऽऽवरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नाऽनित्यत्वं नियतमिति—२४॥ निग्रहस्थानं लक्षयति—**वादिन इत्यादिना**॥ अवान्तरभेदान् दर्शयति—**प्रतिज्ञाहानिरित्यादिना**। प्रतिज्ञातार्थविरुद्धार्थस्वीकारः प्रतिज्ञातार्थत्यागो वा— '**प्रतिज्ञाहानिः**'—यथा 'शब्दः—अनित्यः,—प्रत्यक्षगुणत्वादित्यत्र परेण—'सोऽयं ककार' इतिप्रत्यभिज्ञासामर्थ्याद् बाधे समुद्भाविते 'भवतु तर्हि शब्दः—नित्य' इति मतमङ्गीकुर्वन् वादी शब्दस्याऽनित्यत्वप्रतिज्ञां जहातीति—१॥ परदत्तदोषोद्धारेच्छया पूर्वमनुक्तेन विशेषणेन विशिष्टतया प्रतिज्ञातार्थस्य कथनं—**प्रतिज्ञान्तरम्**'—यथा, पृथिव्यादिकं—गुणजन्यं,—कृत-

हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः हेत्वाभासाश्च निग्रहस्थानानि। शेषं सुगमम् ॥

---

कत्वा'दित्यत्र धर्माऽधर्मजन्यत्वेन सिद्धसाधने समुद्भाविते सति 'सविषयके'तिविशेषणविशिष्ट-गुणजन्यत्वकथनम्—२॥ स्वाऽभिहितसाध्यप्रतिद्वन्द्विहेतुकथनम्—'**प्रतिज्ञाविरोधः**'—यथा 'घटो-गुणभिन्नः-रूपादितः पृथक्तयाऽनुपलम्भादिति—३॥ स्वाभिहितार्थे परेण दूषिते तदपलापः—'**प्रतिज्ञासन्न्यासः**'—यथा 'शब्दः-अनित्यः,-इन्द्रियग्राह्यत्वा'दित्यभिहिते, परेण जातौ व्यभिचारमुद्भाव्य दूषिते सति स्वाभिहितमपलपति—'केन उच्यतेऽनित्य शब्द' इति—४॥ परप्रयुक्तदूषणोद्धरणाय स्वहेतौ विशेषणदानं—'**हेत्वन्तरम्**'—यथा शब्दः—अनित्यः, प्रत्यक्षविषयत्वा'दित्युक्ते परेण जातौ व्यभिचारोद्भावने 'जातीमत्प्रत्यक्षविषयत्व'-कथनम्—५॥ प्रकृताऽनुपयोगिपदार्थकथनम्—'**अर्थान्तरम्**'—यथा 'शब्दः-अनित्यः-कृतकत्वा' दित्युक्त्वा शब्द-गुणः, स चाऽऽकाशस्येत्यादि—६॥ अवाचकपदप्रयोगो—'**निरर्थकम्**' -यथा 'शब्दः-अनित्यः-कखगघत्वादित्यादि-७॥ सभाप्रतिवादिबोधप्रयोजकशब्द-प्रयोगः—'**अविज्ञातार्थम्**'—यथा अतिद्रुतोच्चरितं अप्रसिद्धार्थकं क्लिष्टान्वयमिति—८॥ पौर्वापर्याऽयोगादप्रतिसम्बद्धार्थम्—'**अपार्थकम्**'—यथा 'रामः पटो शब्दो दावो वह्नित्वा' दित्यादिकम्—९॥ अवयवविपर्यासकथनम्-'**अप्राप्तकालम्**'—यथा 'तथा चायं' 'पर्वतो वह्निमान' 'तस्मात्तथा' 'धूमात्' 'महानसवदि'ति-१०॥ अन्यतमाऽवयवेन हीनम्-'**न्यूनम्**'-यथा-'पर्वतो वह्निमान्' 'धूमात्' 'महानसव'दितिमात्रम्-११॥ अधिकहेत्वादिप्रयोगः—'**अधिकम्**'—यथा-'पर्वतो—वह्निमान्,—धूमात्,—प्रकाशादित्यादि—१२॥ अनुवादमन्तरेण शब्दार्थयोः पुनर्वचनम्-'**पुनरुक्तम्**'—यथा-'पर्वतो-वह्निमान्' 'पर्वतो वह्निमान्' इत्यादि-१३॥ विज्ञातस्य परिषदा त्रिरभिहितस्यापि अप्रत्युच्चारणम्—'**अननुभाषणम्**'—१४॥ परिषदा विज्ञातार्थस्य प्रतिवादिना त्रिरभिहितस्याऽप्यविज्ञानं—'**अज्ञानम्**'-१५॥ परोक्तं बुद्ध्वापि उत्तरं न स्फुरति सा—'**अप्रतिभा**'-१६॥ 'कार्यान्तरव्यासङ्गात् कथाविच्छेदो—'**विक्षेपः**''-१७॥ स्वपक्षे दोषमनुद्धृत्य परपक्षे दूषणा—भिधानं—'**मताऽनुज्ञा**'-१८॥ निग्रहस्थानं प्राप्तस्यापि 'त्वं निगृहीत, इत्यनुद्भावनम्—'**पर्यनुयोज्योपेक्षणम्**'१९॥ अनिग्रहस्थाने निग्रहस्थानाभियोगो—**निरनुयोज्यानु-योगः**'-२०॥ एकसिद्धान्तमवलम्ब्य कथाप्रवृत्तौ सिद्धान्तान्तरेणोत्तरदानं—**अपसिद्धान्तः**'—२१॥ **हेत्वाभासास्तूपवर्णिताः**-२२॥ तत्र प्रतिज्ञाहान्यननुभाषणाऽज्ञानाऽप्रतिभाविक्षेप-पर्यनुयोज्योपेक्षणानाम् अभावेऽन्तर्भावः, हेत्वाभासभिन्नानामन्यानां निग्रहस्थानानां गुणेऽन्त-र्भावः, हेत्वाभासानां यथायोगं द्रव्यादिष्वन्तर्भावो बोध्यइति ॥

ननु करतलानलसंयोगे सत्यपि, प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेत्? न, प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्। कारणत्वस्यैव शक्तिपदार्थत्वात्। ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्येति चेत्? न, भस्मादिसंयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात्॥ स्वत्वमपि न

---

प्राभाकराः शक्तेरतिरिक्तपदार्थतां शङ्कन्ते—नन्वित्यादिना॥ प्रतिबन्धके सतीति। चन्द्रकान्त-मण्यादिरूपप्रतिबन्धके सतीत्यर्थः॥ दाहानुत्पत्तेरिति। तथा च चन्द्रकान्तमणिसमवहितवह्निनिष्ठा शक्तिरितरोभवति तदसमवहितवह्नौ च सा शक्तिः पुनरुत्पद्यते इति शक्तिरवश्यं स्वीकार्या, सा च न द्रव्यगुणकर्माऽन्यतमात्मिका, गुणादिवृत्तित्वात्। न च सामान्याद्यन्यतमात्मिका, उत्पत्तिध्वंसोभयप्रतियोगित्वात्। अतः पदार्थान्तरीभूतेति। तन्मतं खण्डयति—प्रतिबन्धकाभावस्येत्यादिना। प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावस्य दाहं प्रति कारणत्वे सत्येवोपपद्यते, इति न शक्तिः कल्पनीया, प्रतिबन्धकाऽभावेन शक्तेरन्यथासिद्धत्वादितिभावः॥ ननु 'दाहोत्पादे वह्निः शक्त' इतिप्रतीतिसिद्धा नाऽपलपितुं योग्या शक्तिरित्यत आह—कारणत्वस्यैवेति। दाहात्मककार्यस्य कारणीभूतवह्निवृत्तिवह्नित्वसमानाधिकरणः कारणताख्यो धर्म एव शक्तिपदार्थो नत्वतिरिक्त इति भावः॥ ननु कांस्यादेरस्पृश्यपदार्थस्पर्शे सति न भोजनोपयोगार्हता, शक्तिमत्कांस्यादेरेव भोजनोपयोगार्हत्वात्, अतोऽस्पृश्यस्पर्शे सति शुद्ध्यात्मकशक्तिनाशः, भस्मादिना शुद्धिशक्तिरुत्पादश्च, इत्यतः कांस्यपात्रादौ शक्तिः स्वीकार्या, सा च 'आधेयशक्तिरित्याशंकते—नन्विति। समाधत्ते—नेति। भस्मादीति। भस्मादिसंयोगसमानकालीना ये अस्पृश्यस्पर्शप्रतियोगिकयावदभावास्तादृशाऽभावकूटसहितो यो भस्मादिसंयोगध्वंसः—स शुद्धिपदार्थः। तथा च शक्तिस्वीकाराऽयुक्त इति भावः॥ भस्मादीत्यादिना—मृत्तिका-काष्ठचूर्ण तुषचूर्णाऽग्निसंयोग—जलसंयोगा ग्राह्याः॥ यत्र पात्रे भस्मादिसंयोगध्वंसोत्तरं पुनरस्पृश्यस्पर्शः, तत्र तदानीमपि भस्मादिसंयोगध्वंसस्य वर्तमानत्वेन शुद्ध्यापत्तिवारणाय—सहितान्तं ध्वंसविशेषणम्। सहितत्वं=सामानाधिकरण्यम्, तच्च दैशिकविशेषणता (स्वरूप)—सम्बन्धेन निरुक्तयावदभावानां अधिकरणे तादृशस्वरूपसम्बन्धेन वृत्तित्वम्॥ यत्र पात्रेऽस्पृश्यपदार्थस्पर्श-भस्मादिसंयोगौ युगपदेवोत्पन्नविनष्टौ तत्र पात्रे तत्तदस्पृश्यस्पर्शप्रतियोगिकयावदभावसामानाधिकरण्यविशिष्टं भस्मादिसंयोगध्वंसमादाय शुद्धिमत्त्वाऽऽपत्तिवारणाय—कालीनान्तम् अभावविशेषणम्। 'कालीनान्तमि'त्यस्य भस्मादिसंयोगकालावच्छेदेन तत्र विद्यमानत्वमित्यर्थः। तथा च तत्र भस्मादिसंयोगक्षणावच्छेदेन यावत्तत्तदभावानां विरहात् नातिव्याप्तिरिति। भस्मादिसंयोगस्य शुद्धिपदार्थत्वापत्तिवारणाय—ध्वंसपदम्। यत्र पात्रे अस्पृश्यस्पर्श-भस्मसंयोगौ वर्तेते तदानीं देशान्तरीयाऽस्पृश्यस्पर्शाऽभावस्यापि तत्र सत्त्वेन तादृशयत्किञ्चिदभावसहितभस्मसंयोगध्वंसकाले तत्राऽस्पृश्यसत्त्वेऽपि शुद्ध्यापत्तिः, तद्वारणाय—यावदिति,—अभावानां विशेषणम्। अस्पृश्यवस्तूनां अनुगतधर्मस्य निर्वक्तुमशक्यत्वेन सामान्यधर्मावच्छिन्नाऽभावनिवेशाऽसंभवाद् 'यावदि'ति—अस्पृश्यस्पर्शस्य विशेषणं नाऽभिहितम्। वस्तुतो भस्मादिसंयोगसमानकालीनो यावदस्पृश्यस्पर्शसंसर्गाभावः भस्मादिसंयोगध्वंससमानकालीनः कांस्यादेः भोजनादौ व्यवहार्यताप्रयोजक इत्येवं वक्तव्यमिति न कोऽपि दोष इति ध्येयम्।

पदार्थान्तरम् । यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति ।

अथ विधिर्निरूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः । तत्प्रतिपादको लिङादिर्वा । कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्ये प्रवृत्तिदर्शनात् कृति-

---

प्राचीनाः—'चैत्रस्येदं धन'मित्यादौ धनगतं चैत्रनिरूपितं स्वत्वं प्रतीयते तत्तु—पदार्थान्तरम्, यतः—'स्वत्वमुत्पन्नं विनष्टं तव स्वत्वं मम स्वत्व'मित्यादिप्रतीतिसिद्धं षष्ठीविभक्तिवाच्यम्, तच्च वृत्तिनियामकस्वरूपसम्बन्धेन स्वर्णादिनिष्ठम्, निरूपकताख्यस्वरूपसम्बन्धेन स्वामिनिष्ठम्, स्वत्वं न द्रव्यगुणकर्मोऽन्यतमरूपम्,—गुणादिवृत्तित्वात् । न सामान्याद्यन्यतमरूपम्, नित्यत्वप्रसङ्गात् । न चाऽभावरूपम्, भावत्वेन प्रतीयमानत्वात्—इति प्राहुः । तन्मतं निरस्यति—**स्वत्वमपीति** ॥ तर्हि किं स्वरूपमित्यत आह—**यथेष्टेति** । विनियोगो नाम—आदान—प्रतिदान-परिवर्तनादिका क्रिया । तथा च स्वाभिलाषाऽनुकूलक्रियायोग्यत्वमेव स्वत्वं धर्मविशेष इति ॥ **तदवच्छेदकं चेति** । तादृशक्रियायोग्यताप्रयोजकन्त्वित्यर्थः ॥ **प्रतिग्रहादिलब्धत्वमिति** । दानप्रयुक्तप्राप्तिविषयत्वमित्यर्थः ॥ वस्तुतस्तु—यथेष्टविनियोगविषयकज्ञानविषयता—एव स्वत्वम् साचाऽधिकरणात्मिका, न त्वतिरिक्ता ॥ एवं प्रतियोगिता—प्रतियोगिरूपा, आधेयता—आधेयाऽत्मिका, कार्यता कार्यात्मिका, अधिकरणता—अधिकरणात्मिका, अनुयोगिता—अनुयोगिरूपा, विषयता—विषयाऽऽत्मिका, विषयिता—विषयिरूपा, प्रकारता—प्रकारात्मिका, विशेष्यता—विशेष्यस्वरूपा, इत्येवं तत्तदन्तर्भावो बोध्यः ॥

मूलन्यूनतापरिहरणाय विधिनिरूपणं प्रतिजानीते—**अथेति** । विधिः=विध्यर्थः । **निरूप्यत-इति** । मत्समवेतप्रयत्नजन्यव्यापारजन्यं यज्ज्ञानं तद्विषयत्ववान् विध्यर्थ इति बोधः । **प्रयत्नेति** । प्रयत्नजनिका या चिकीर्षा तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः ॥ चिकीर्षा 'यागो मत्कृतिसाध्यो-भवत्वि'ति कृतिसाध्यत्वप्रकारिकेच्छा, तज्जनकं ज्ञानम्—गुरुमते 'यागो मत्कृतिसाध्य' इत्याकारकम्, न्यायमते—यागो मत्कृतिसाध्यत्वविशिष्टेष्टसाधनमित्याकारकम् ॥ न्यायमते 'यजेते'त्यत्र 'यजि धात्वर्थो यागः, आख्यातार्थः—प्रयत्नः, विध्यर्थः—कृतिसाध्यत्वविशिष्टेष्टसाधनत्वम् । गुरुमते 'यजि' धात्वर्थो यागः आख्यातार्थो भावना, सा च द्विविधा—आर्थी शाब्दी च. आर्थीभावना—पुरुषप्रवृत्तिरूपा, शाब्दीभावना—अभिप्रायरूपा । विध्यर्थः—कृतिसाध्यत्वम्, तथा च गुरुमते कृति-साध्यताज्ञानस्य चिकीर्षाद्वारा प्रयत्नजनकत्वात्, न्यायमते च कृतिसाध्यताविशिष्टेष्टसाधनता-ज्ञानस्य चिकीर्षाद्वारा प्रयत्नजनकत्वात्, गुरुमते कृतिसाध्यत्वे न्यायमते कृतिसाध्यत्वविशिष्टेष्ट-साधनत्वे लक्षणसङ्गतिः ॥ 'विधिनिमन्त्रणाऽऽमन्त्रणे'त्यनुशासनविहितस्य विध्यर्थाऽभिधायक-लिङादेर्विधिमताऽभिप्रायेणाऽऽह—**तत्प्रतीति** । प्रयत्नजनकचिकीर्षाजनकज्ञानविषय—कृति-साध्यत्व—कृतिसाध्यत्वविशिष्टेष्टसाधनत्व—प्रतिपादक—लिङ्—लोट्—तव्यादिरित्यर्थः ॥ **वाकारः**—पूर्वत्राऽनास्थायाम्, विध्यर्थको लिङिति प्रामाणिकव्यवहारात् ॥ गुरुमतमाचक्षते—**कृत्यसाध्ये-इति** । प्रयत्नाऽसाध्यत्वेनाऽवगते चन्द्रानयनादौ प्रवृत्त्यदर्शनात् इत्यर्थः ॥ **कृतिसाध्ये-इति** । प्रयत्नसाध्यत्वेनाऽवगते यागादौ प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानमेव चिकीर्षाद्वारा प्रवृत्तिजनकम्, अतः कृतिसाध्यत्वमेव विध्यर्थ इत्याशयः ॥ ननु तथासति विषभक्षणादौ

साध्यताज्ञानं प्रवर्तकम् । न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गक-
कृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्य-
नैमित्तिकस्थले, प्रवर्तकत्वात् । न चाऽननुगमः । स्वविशेषणवत्ताप्रतिसन्धानजन्य-
त्वस्यानुगतत्वात् इति गुरवः । तन्न । लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षा-
द्वारा प्रयत्नजनकत्वात् । न च नित्य इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः । तत्रापि प्रत्य-

---

प्रवृत्त्यापत्तिः, तत्राऽपि कृतिसाध्यताज्ञानस्य सत्त्वादित्याशङ्कां निराकरोति—न चेत्यादिना ॥
**इष्टसाधनेति** । 'यागः—मत्कृतिसाध्यः,—मत्कृतिं विनाऽनुपपद्यमानत्वे सतीष्टसाधनत्वा'-
दितिरीत्याऽनुमितकृतिसाध्यताज्ञानस्य अनुमितिरूपस्यैव ज्योतिष्टोमयागात्मक—काम्यस्थले प्रवर्त-
कत्वात् । सन्ध्यावन्दनादौ विहितकाले शुचिर्भूत्वा जीवतो व्यक्तिविशेषस्य—विहितकालीनशुचिजी-
वित्वविहितकाले शुचिजीवित्ववानह—मित्याकारकज्ञानाऽधीनस्य सन्ध्यावन्दनविषयककृतिसाध्यता-
ज्ञानस्य सन्ध्यावन्दनात्मके नित्ये कर्मणि प्रवृत्तिजनकत्वात् । प्रयोगस्तु—'अहम्—एतत्कालीन-
कृतिसाध्यसन्ध्यावन्दनकः,—एतत्कालीनशुचिजीवित्वात् । एवम्—जन्माऽऽशौचादिरूपनिमित्त-
ज्ञानाधीनस्य कृतिसाध्यताज्ञानस्य नैमित्तिके स्नानादौ प्रवृत्तिजनकत्वात्, प्रयोगस्तु—अहम्—
कृतिसाध्यस्नानादिमान्,—आशौचवत्त्वा'दित्येवं रीत्या कृतिसाध्यत्वज्ञानस्य विहितकालशुचि-
जीवित्वादिज्ञानजन्यत्वं बोध्यम् । तथा च विषभक्षणादौ तु तादृशेष्टसाधनत्वादिरूपलिङ्गा-
ऽभावान्न प्रवृत्तिरिति भावः ॥ नन्वेवमपि विभिन्नकृतिसाध्यताज्ञानस्य हेतुत्वे प्रवृत्तिसामान्य-
प्रयोजकस्यैकस्याऽभावात् तव मतेऽननुगम इत्याशङ्कते—**नचाऽननुगमइति** ॥ उत्तरयति—
**स्वविशेषणेत्यादिना** । स्वः—प्रवर्तमानः पुरुषः, तस्य विशेषणं=तन्निष्ठो धर्मः='काम्ये
कर्मणि कामनादिरूपो, नित्ये कर्मणि कालशौचादिरूपो, नैमित्तिके चाऽऽशौचादिरूपः ।
तद्वत्ताप्रतिसन्धानं='तादृशतत्तद्विशेषणवानह'मित्याकारकं ज्ञानम्, तज्जन्यत्वस्य सकलकृति-
साध्यताज्ञानसाधारणत्वात् तज्जन्यत्वेन सकलकृतिसाध्यताज्ञानस्याऽनुगतत्वादित्यर्थः । विशेषण-
त्वेन यागादिसाधनादेरनुगमात् सुतरां तद्वत्ताप्रतिसन्धानजन्यत्वस्याऽनुगम इति भावः ॥
गुरुमतं खण्डयति—**तन्ने ति । लाघवेनेति** । गुरुमते प्रवृत्तिकारणतावच्छेदकताया जन्यत्व-
विशिष्टज्ञानत्वादिघटितत्वात्, जन्यत्वस्य तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति—तदव्यवहितोत्तरत्व-
रूपतया महद्गौरवम्, तदपेक्षया न्यायमते कारणतावच्छेदकस्य कृतिसाध्यत्वविशिष्टेष्टसाधन-
त्वस्य लाघवेनेत्यर्थः ॥ **कृतिसाध्येष्टसाधनताज्ञानस्यैवेति** । बलवदनिष्टाऽननुबन्धित्व-
विशिष्टे कृतिसाध्येष्टसाधनताज्ञानस्यैवेत्यर्थः। तेन कृतिसाध्यत्वेन तृप्तिरूपेष्टसाधनत्वेन ज्ञानविषयीभूते
विषसम्पृक्ते भोजनादौ न प्रवृत्तिः ॥ विशिष्टज्ञानत्वेन कारणता प्राचां मते । नव्यमते कृतिसाध्य-
त्वादिज्ञानस्येष्टसाध्यत्वज्ञानस्य बलवदनिष्टाऽननुबन्धित्वज्ञानस्य च पृथगेव कारणता ॥
**प्रयत्नजनकत्वादिति** । प्रवृत्तिजनकत्वादित्यर्थः ॥ ननु नित्ये सन्ध्यावन्दनादौ बलवदनिष्टाऽ-
ननुबन्धित्वविशिष्टकृतिसाध्येष्टसाधनत्वाऽभावात् प्रवृत्तिर्न स्यादित्याशङ्कते—**न चेत्यादिना** ॥
उत्तरयति—**तत्राऽपीति** । नित्ये कर्मणि प्रत्यवायपरिहारस्य=प्रत्यवायप्रागभावस्य, पापध्वं-
सस्य, च दुःखाऽभावजनकतया प्रत्यवायनाशस्यैवेष्टत्वेन फलत्वं संभवतीति बोध्यम् । 'सन्ध्या-
वन्दनसत्त्वे प्रत्यवायध्वंससत्त्वं 'तदभावे च तदभावे' इति सहचारलभ्यस्य ( स्वरूपसम्बन्धरूपस्य )

वायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात् । तस्मात्कृतिसाधनत्वमेव लिङाद्यर्थः। ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनकार्यं प्रतीयते यागस्याशुतरविनाशिनःकालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः। कार्यं कृतिसाध्यम्। कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयाऽन्वेति । कार्यबोद्धा नियोज्यः। तेन ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्यम्' इति वाक्यार्थः सम्पद्यते । वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात् इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते । 'आरोग्यकामो भेषजपानं कुर्यात्' इत्यादौ लौकिकलिङः क्रियाकार्ये लक्षणा इति चेत्! न, यागस्याप्ययोग्यतानिश्चयाभावेन

---

सन्ध्यावन्दनप्रयोज्यत्वस्य प्रत्यवायध्वंसादौ सत्त्वेन फलत्वमक्षतमिति तथा च—"सन्ध्यावन्दनं कृतिसाध्यत्वविशिष्टपापनाशात्मकेष्टसाधन'मिति ज्ञानस्यैव प्रवृत्तिकारणता नित्यस्थलेऽवसेयेति भावः ॥ उपसंहरति—**तस्मादित्यादिना** ॥ लिङादेः कृतिसाध्यत्वरूपे कार्ये एव शक्तिरिति गुरुः पुनः शङ्कते—**नन्विति** ॥ **स्वर्गसाधनकार्यमिति** । स्वर्गस्य साधनं यागस्तत्कार्यमपूर्वं=पुण्यं तदेव लिङर्थः कृतिसाध्यमिति भावः । **प्रतीयते**=शाब्दबोधविषयं भवति ॥ ननु यागस्यैव स्वर्गसाधनत्वनिर्वाहे अपूर्वस्य विध्यर्थत्वं न कल्पनीयमित्यत 'आह—**आशुतरेति** । तथा च अपूर्वं विना स्वर्गाऽनुपपत्त्या 'अपूर्वे विधिशक्तिः स्वीकार्यैवेति भावः । **साधनत्वाऽयोगादिति** । तथा च—कार्यनियतपूर्ववर्तिन एव कारणत्वात् यागस्य स्वर्गसाधनत्वाऽसंभवेन **तद्योग्यं**=स्वर्गसाक्षात्कारणीभूतं **स्थायि**=स्वर्गप्राप्तिपर्यन्तस्थायि । **अपूर्वं**=अदृष्टमेव लिङ्सामान्यस्य शक्यार्थो मन्तव्य इति भावः। उक्तवाक्यस्य शाब्दबोधं दर्शयति—**कार्यमित्यादिना** । यागे साक्षात् कृतिसाध्यत्वं अदृष्टे तु यागद्वारेति बोध्यम्। कार्यत्वमित्यस्य=कृतिसाध्यत्वमित्यर्थः ॥ **विषयाकाङ्क्षायामिति** । 'सा कृतिः किंविषयिणी' त्याकाङ्क्षायां कार्यपदार्थैकदेशे कृतौ यागो विषयित्वेनाऽन्वेतीत्यर्थः ॥ **कस्य कार्यमिति** । 'कस्य पुरुषस्य कृतिसाध्यं कार्य'मित्याकाङ्क्षायां तादृशाकांक्षानिवृत्त्यर्थं स्वर्गकामो नियोज्यः कृतावन्वेति॥ **कार्यबोद्धा**—'इदं मत्कृतिसाध्य'मिति ज्ञानवान् नियोज्यो यागकर्ता इत्यर्थः विध्यर्थमुख्यविशेष्यकं शाब्दबोधं दर्शयति—**तेनेति** । ज्योतिष्टोमनामकयागविषयकस्वर्गकामसमवेतकृतिसाध्यमपूर्वमिति बोधः ॥ न्यायमते तु कृतिसाध्यबलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनत्ववद्यागानुकूलकृतिमान् स्वर्गकाम' इति बोधः प्रथमार्थमुख्यविशेष्यको भवतीति वेदितव्यम् ॥ ननु नित्ये कर्मणि फलाऽश्रवणात् कथं तत्र लिङः—अपूर्वबोधकतेत्यत आह—**यावज्जीवमिति** ॥ **अपूर्वमेवेति** । पण्डापूर्वं पापनाशकमपूर्वं लिङ्पदशक्यं कल्प्यत इति ॥ लौकिकलिङ्स्थलेऽपूर्वाऽभावादाह—**आरोग्येत्यादि** । **क्रियाकार्ये**—धात्वर्थरूपा या क्रिया तस्याः कार्ये—तन्निष्ठकृतिसाध्यत्वावच्छिन्ने । धात्वर्थनिष्ठकृतिसाध्यत्वावच्छिन्ने लिङो लक्षणेति, तथा च 'भेषजपानमारोग्यकामस्य कार्य'मिति बोधो भवत्येवेतिभावः ॥ गुरुमतं खण्डयति—**नेति**—'यागस्याऽऽशुतरविनाशिन' इत्याद्युक्तं तत्रोत्तरम्—**यागस्येत्यादि** । आशुतरविनाशिनि यागेऽयोग्यतासंशयसत्त्वेऽपि संशयस्य स्वर्गसाधनत्वाऽविघटकत्वाद् यागे स्वर्गसाधनत्वबोधो निराबाधः,

साधनतया प्रतीत्यनन्तरं निर्वाहार्थम् अवान्तरव्यापारतयाऽपूर्वकल्पनात् । कीर्तना-दिना नाशश्रुतेन यागध्वंसो व्यापारः । लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्ये-ष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम् । आख्यातत्वेन यत्नार्थ-कत्वम् । 'पचति' 'पाकं करोती'तिविवरणदर्शनात् , 'किं करोती'ति प्रश्ने 'पचती'-त्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात् । 'रथो गच्छती'त्यादौ अनुकूलव्यापारे लक्षणा, 'देवदत्तः पचति', 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ कर्तृकर्मणोर्नाख्या-

---

एवं च सति यागस्य चिरध्वस्तस्य स्वर्गसम्पादकतानिर्वाहायाऽदृष्टमनुमातव्यं न तु लिङर्थो-ऽपूर्वमिति भावः ॥ ननु यागध्वंस एव व्यापारो भवतु किमिति–अदृष्टकल्पनयेत्यत आह—**कीर्तनादिनेति** ॥ 'कर्मनाशा'जलस्पर्शात् 'करतोया'दिलङ्घनात् । 'गण्डकी'बाहुतरणाद् धर्मः क्षरति कीर्तनात्' ॥ धर्मः क्षरति–फलभाङ् न भवति । 'मयाऽमुको धर्मः कृत' इति कथनेऽपि धर्मस्य नाशश्रवणात् स्वर्गसाधनं धर्मः सिद्ध एव तेन यागध्वंसोऽन्यथासिद्ध इति भावः । ध्वंसस्य व्यापारत्वे तस्याऽविनाशित्वेन सर्वदैव स्वर्गं स्यात्, तत्तत्कालादेः सहकारित्वे तु गौरवमि-त्यपि द्रष्टव्यम् ॥ **लोकव्युत्पत्तीति** साधारणलोकानामपि व्युत्पत्तिबलात्=शक्तिबलात् क्रियायां=धात्वर्थे एव, कृतिसाध्यत्वविशिष्टेष्टसाधनत्वं 'लिङ्' प्रत्ययेन शाब्दबोधविषयं भवति । इति='लिङ्'प्रत्ययशक्तिज्ञानेन तादृशशाब्दबोधोत्पादादितिहेतोः ॥ **लिङ्त्वेनेति** । 'यजेते'त्यत्र यजिधातोरुपरितने 'ति'प्रत्यये धर्मद्वयमस्ति–लिङ्त्वं आख्यातत्वं च, तत्र लिङ्प्रत्ययत्वावच्छिन्नो लिङ्प्रत्ययः कृतिसाध्यत्वविशिष्टेष्टसाधनत्वात्मकविध्यर्थबोधकः, आख्यातत्वरूपसामान्यधर्माऽव-च्छिन्नो लिङ्प्रत्ययः कृत्यात्मकप्रयत्नबोधकः, तथा च तादृशप्रयत्नवाचकत्वावच्छेदकं आख्यातत्वं, तादृशविध्यर्थवाचकतावच्छेदकं च लिङ्त्वमिति बोध्यम् । आख्यातसामान्यस्य यत्नार्थकत्वे प्रमाणं दर्शयति–**पचतीति** । 'पाकं करोती'त्यत्र आख्यातस्य प्रयत्नार्थकत्वावगमात् 'पचती'त्यत्रा-ऽपि तस्य यत्नार्थकत्वम् । एवं—'किं करोती'तिप्रश्नवाक्यं यत्किञ्चिद्विषयककृतित्वावच्छिन्नजिज्ञासा-बोधकं कृतौ जिज्ञासितसंसर्गज्ञापकं वा, तदुत्तरवाक्यस्य'पचती'त्यस्य पाकविषयककृतित्वावच्छिन्नबो-धकत्वे एव, कृतौ पाकसम्बन्धबोधकत्वे एव वा तन्निवर्तकत्वं नाऽन्यथा अतो यत्नार्थक-सिद्धेति । अन्यथा प्रश्नबोधकजिज्ञासानिवृत्तिर्न स्यादिति भावः । ननु 'रथो गच्छती'त्यत्राऽऽ-ख्यातस्य कृतिबोधकत्वाऽसंभवाद् व्यापारे शक्तिर्वक्तव्येत्यत आह—**'रथो गच्छती'ति** । अत्राऽनुकूलव्यापारे लक्षणा न तु शक्तिरिति भावः ॥ व्यापारेऽनुकूलत्वकथनं तु तेन संसर्गेण व्यापारे गमनस्याऽन्वयलाभार्थमिति भावः । तथा च 'गमनानुकूलव्यापारवान् रथ' इति बोधः ॥ **वैयाकरणाः**—'देवदत्तः पचती'त्यत्राऽऽख्यातस्य कर्तरि शक्तिः 'पच्यते' इत्यत्र कर्मणि शक्तिः, तादृशाऽऽख्यातार्थस्य कर्त्रा कर्मणा च यथायथमभेदेनाऽन्वय इति-वदन्ति । तन्मतं खण्डयति–**देवदत्त इत्यादिना** । कर्त्रादौ शक्तिस्वीकारे तत्तदात्मसमवेतः कृतीनां तत्तद्व्यापारजन्यफलानां चाऽऽनन्त्याच्छक्यतावच्छेदकाऽऽनन्त्यप्रयुक्तं गौरवं स्यादिति तदपेक्षया कृत्यादौ शक्तिस्वीकारे कृतित्वस्य शक्यतावच्छेदकत्वे लाघवमितिभावः । नन्वेवं कर्त्रा-देरनभिहितत्वे 'देवदत्त' पदोत्तरं तृतीयायाः तण्डुलपदोत्तरं च द्वितीयाया आपत्तिः स्यादित्यत आह **किन्त्विति** ॥ **तद्गतैकत्वादिति** । कर्तृकर्मगतैकत्वादीनामेव आख्यातार्थत्वं बोध्यम्, एवकारेण

तार्थत्वम् । किं तु तद्गतैकत्वादीनामेव । तयोराक्षेपादेव लाभः । प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः, उपसर्गाणां द्योतकत्वमेव न तु तत्र शक्तिरस्ति । पदार्थज्ञानस्य परमप्रयोजनं मोक्षः । तथा हि 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनां तत्त्वसाक्षात्कारे हेतुत्वबोधनात् श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेः युक्त्यनुसन्धानरूपमननसाध्यत्वात् । मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम् तदनन्तरं श्रुत्योपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादौ अहमभिमानरूपमिथ्याज्ञाननाशे सति दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावा-

---

कर्तृकर्मणोराख्यातवाच्यत्वव्यवच्छेदः तथा च देवदत्तपदोत्तरं तृतीयायाः, तण्डुलपदोत्तरं च द्वितीयाया नाऽऽपत्तिः, आख्यातार्थसंख्याऽनन्वितार्थकत्वस्यैव तृतीयान्तताया द्वितीयान्ततायाश्च प्रयोजकत्वात्, तस्य चाऽत्र विरहात्–इति भावः । केचित्तु–कर्तृकर्मपदे लक्षणया कर्तृत्वकर्मत्वपरे, कर्तृत्वं च कृतिरेव कर्मत्वं–फलं, तद्गतकृतित्वादेरेकत्वादवच्छेदकलाघवेन कर्तृत्वे एवाऽऽख्यातशक्तिरिति—सङ्गमयन्ति । तयोः=कर्तृकर्मणोस्तु । **आक्षेपादेव**=आख्यातार्थसंख्यान्वितार्थकप्रथमान्तपदोपस्थाप्यत्वादेव लाभः=बोधः । 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायात् कर्त्ता कर्म वा न आख्यातार्थ इति भावः ॥ उपसर्गाणामवाचकत्वं दर्शयति—**प्रजयतीति** । जयार्थ-'जि' धातोः प्रकर्षे शक्तिः उपसर्गाणां त द्योतकत्वं= तात्पर्यग्राहकत्वमिति । इतरनिपातानां तु वाचकत्वं बोध्यम्, यथा 'पार्थ एव धनुर्धरः' इत्यत्राऽन्ययोगव्यवच्छेदार्थ एवकार इति ॥ इदानीं शास्त्रार्थं मोक्षात्मके फले योजयति–**पदार्थज्ञानस्येति** । पदार्थतत्त्वज्ञानस्येत्यर्थः । तस्य परमप्रयोजनं मोक्षः, गौणप्रयोजनं शास्त्राध्ययनेन वादिपराजयादिकं बोध्यम् । **आत्मेति** । अरे गार्गि ! मुमुक्षुणाऽऽत्मा द्रष्टव्यः–मुमुक्षोरात्मदर्शनमिष्टसाधनमित्यर्थः । आत्मदर्शनस्योपायाः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यनेन दर्शिताः ॥ **श्रुत्येति** । वेदवाक्यैः–'अशरीरं वाव सन्तं न प्रियाऽप्रिये स्पृशतः' इत्याद्यात्मकैः शरीराद्यतिरिक्तात्मबोधकैः देहादिजडेभ्यो भिन्नात्मे'ति भेददर्शने सति शरीराद्यतिरिक्तात्मनः–'असंभावनानिवृत्तिः'अप्रामाण्यबुद्धिनिवृत्तिः, युक्तिभिरनुचिन्तनात्मकमननसाध्या भवति । मननं च–आत्मन इतरभिन्नत्वेनाऽनुमानम्–'आत्मा,–तदितर-(शरीरादि)भिन्नः,–श्रुत्या तथा प्रतिपादितत्वा'दित्याकारकम् । तच्चानुमानं भेदप्रतियोगीतरयावत्पदार्थ–ज्ञानसाध्यम्, अत इतरभेदप्रतियोगीतरज्ञानार्थं पदार्थनिरूपणम्, तद्द्वारा शास्त्रं परम्परया मोक्षे उपयुज्यते इति भावः ॥ मोक्षोपयोगित्वं स्फुटयति–**तदनन्तरमित्यादिना** । मननानन्तरमित्यर्थः । श्रुत्या–सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयं हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः' 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मे" त्यादिवेदवाक्यैः समुपदिष्ट-यमनियमादिना मनःप्रणिधानात्मकयोगविधिनाऽऽत्मनोऽभिध्याने कृते सति निदिध्यासनाऽनन्तरं देहादिविलक्षणस्याऽऽत्मनो योगसमाधिना साक्षात्कारे सति ततो वासनासहितमिथ्याज्ञाननाशे सति रागादिदोषनाशस्ततो धर्माऽधर्मजनकप्रवृत्तिविलये सति धर्माऽधर्मयोः फलयोरनुद्भवेन तत्त्वज्ञानात्मकाऽनुभवात् संचितधर्माऽधर्मयोरपि विनाशेन जन्माऽभावे सति आत्यन्तिकदुःखध्वंसो मोक्ष इति भावः ॥ मोक्षो जायते–मोक्षस्थितिक आत्मा सम्पद्यते इत्यर्थः ॥ **मिथ्याज्ञानेति** । तद्विषयकतत्त्वज्ञानस्य तद्विषयकमिथ्या-

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भटेन विदुषा रचितस्तर्कसंग्रहः ॥**

॥ इति श्रीमहामहोपाध्यायाऽन्नम्भट्टविरचितस्तर्कसंग्रहः समाप्तः ॥

( न्या० ) काणादेति । कणादस्येदं काणादम्, काणादन्याय-

---

जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसरूपो मोक्षो जायते । ज्ञान-मेव मोक्षसाधनम् । मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात् । तमेव विदित्वाऽतिमृत्यु-मेति नान्यः पन्था विद्यतेऽयनाय' इति साधनान्तरनिषेधाच्च । ननु 'तत्प्राप्तिहेतु-विज्ञानं कर्म चोक्तं महामुने' इति कर्मणोऽपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इत्ति चेत् ! न, "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमली-कुर्वन् अभ्यासेन च पाचयेत् ॥ अभ्यासात् पक्वविज्ञानं कैवल्यं लभते नरः" । इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव कर्म मोक्षसाधनम्, न साक्षात्, तस्मात् पदार्थज्ञानस्य मोक्षः परमप्रयोजनम् इत्येव रमणीयमिति ॥

* इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसंग्रहदीपिका समाप्ता *

---

ज्ञाननिवर्तकत्वेन मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानसाध्येति भावः ॥ **साधनान्तरनिषेधाच्चेति ।** सहकारिकारणात्मककर्मरूपसाधनान्तरस्य मुख्यकारणतानिषेधादिति भावः ॥ कर्मणोऽपि ज्ञानस्यैव मुख्यमोक्षसाधनतां शङ्कते—**नन्विति** । उत्तरयति—**नेत्यादिना** ॥ **नित्येति** । सन्ध्यावन्दन-स्नानाद्यात्मकनित्यनैमित्तिकैः कर्मभिरित्यर्थः । तथा च सहकारिकारणत्वं कर्मणामिति भावः ॥ **ज्ञानं चेति ।** तत्त्वज्ञानं विपर्ययभ्रमाऽनास्कन्दितं सम्पादयन्=अप्रामाण्यज्ञानाऽनास्कन्दितं कुर्वन्निति यावत् ॥ अभ्यासेन=तत्त्वज्ञानाऽभ्यासेन जात्यायुर्भोगान् भोगप्रदसंस्कारांश्च पाचयेदित्यर्थः ॥ कैवल्यं=न्यायमतसिद्धान्तिताऽऽत्यन्तिकदुःखध्वंसरूपं लभते नरः=मुमु-क्षात्मा ॥ शेषं सुगमम् ॥ उपसंहरति—**तस्मादिति ।** शास्त्रसिद्धतत्त्वज्ञानस्यैव मोक्षं प्रति मुख्यकारणत्वादित्यर्थः ॥ तथा च स्वस्य ( तत्त्वज्ञानस्य ) मुख्यकारणत्वादेव स्वसम्पाद्ये मोक्षे परमप्रयोजनत्वं सूचितम् । एतादृशं च न्यायमतं**रमणीयमित्यै**दम्पर्यम् ॥

भारते पश्चिमे प्रान्ते पुण्ये सागरसङ्गते ।
"रैवताऽद्रि"समाधारे "कच्छ-सौराष्ट्र"—विश्रुते ॥ १ ॥
वीर-विद्वद्गणाऽऽपूर्ण—"जीर्णदुर्ग"—निवासिभिः ।
"श्रीकृष्णवल्लभाऽऽचार्यैः"—स्वामिनारायणाऽऽश्रितैः ॥ २ ॥
न्यायशास्त्रविविक्षूणां बालानां हितकारिणी ।
तर्कसंग्रह—सद्व्याख्या—दीपिका—"किरणावली"— ॥ ३ ॥
काश्यां मार्गे वैक्रमेऽब्दे बिन्द्वङ्काङ्केन्दुसम्मिते ।
विरच्याऽर्पिता यत्र भगवान् स प्रसीदतु ॥ ४ ॥

* इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाऽऽचार्य्य-नव्यन्यायाचार्य-सांख्ययोग वेदान्त-मीमांसा-तीर्थ-पण्डित -श्रीकृष्णवल्लभाऽऽचार्य्य'स्वामिनारायणविरचिता तर्कदीपिका-किरणावलीसमाप्ता *

मतेति—द्वन्द्वगर्भकर्मधारयः, कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् । काणादन्यायाऽभिन्नमतद्वयविषयकबालसमवेताऽभिन्नव्युत्पत्तिसिद्धप्रयोजकाऽन्नंभट्टविद्वन्निष्ठभूतकालीनकृतिविषयाऽभिन्नस्तर्कसंग्रहाऽऽख्यग्रन्थइत्यन्वयबोधः।

कृष्णावलम्बिनो गाः पूषो गोवर्धनस्तमभ्यर्चन् ।

विपुलाभीरसभाजनजनितबुधेन्द्रस्तवाभिरचनाभिः ॥ १ ॥

❀ इति श्रीगोवर्धनविरचिता तर्कसंग्रहस्य न्यायबोधिनी व्याख्या समाप्ता ❀

(प०) पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुःखध्वंसः । आत्यन्तिकत्वं च—स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणायकालीनान्तम् । मुक्तथात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात् 'स्वसमानाधिकरणे,ति प्रागभावविशेषणम् । (१)दुःखानि चैकविंशतिः—शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखञ्चेति, दुखानुषङ्गित्वाच्छरीरादौ गौणदुःखत्वम् । तथा च 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरात्मज्ञानसाधननिदिध्यासनमननसाधनत्वं पदार्थज्ञाने संजाघटीति । एवं च तत्त्वज्ञाने सति शरीरपुत्रादावात्मत्वस्त्रीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः,। तेन दोषाभावः, तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां प्रारब्धकर्मणां नाशः । ततो जन्माभावः ॥ 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥ अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः ॥ इत्यादिवचनात् 'तमेव विदित्वातिमृत्युमेति' इति श्रुतेश्च; सगुणोपासना—काशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम् । अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारम् ॥

चक्रे चन्द्रजसिंहो हि पदकृत्यमिदं शुभम् ।

परोपकारकरणं माधवो वीक्षतामिदम् ॥

इति श्रीमत्तत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रजसिंहविरचितं पदकृत्यं समाप्तम् ॥

---

(१) दुःखान्येकविंशतिः–तत्रैकं=शरीरम्, षडिन्द्रियाणि=श्रोत्रत्वक्चक्षुरसनाघ्राणमनांसि, षड्विषयाः=शब्दस्पर्शरूपरसगन्धप्रवृत्तयः . षड्बुद्धयः=षड्विषयविषयकज्ञानानि । सुखम्, दुःखं, चेति प्रसिद्धम् ॥ दुःखाऽनुषङ्गित्वात्=अवच्छेदकत्वादिसंसर्गेण दुःखजनकत्वादिति भावः ॥

अन्यशास्त्राऽटवीसिंहा न्यायाऽरण्यदिदृक्षवः ।

टिप्पणीसृतिमाश्रित्य विशन्तु विषमस्थलीम् ॥

* इति 'श्रीकृष्णवल्लभाऽऽचार्य'स्वामिनारायणविरचिता टिप्पणी समाप्ता *

## नए प्रकाशन

**(१) साङ्ख्यकारिका** मू० १००-००

स्वामीनारायण भाष्य, गौडपादाचार्य भाष्य, एवं श्रीकृष्ण वल्लभाचार्य विरचित तत्वकौमुदी तथा किरणावलि टिकाओं के सहित

**(२) भुवनेश लौकिक न्याय साहस्री** मू० ८०-००

पण्डित ठाकुरदत्त शर्मा द्वारा एक हजार न्यायों का संग्रह

**(३) वेदस्तुतिः** मू० २०-००

श्रीधरी व्याख्या एवं श्रीधरीप्रकाश व्याख्या सहित

**(४) दीक्षाप्रकाशिका** मू० १५-००

**(५) यज्ञकर्म पद्धति** मू० २५-००

डा० उमेश मिश्रकृत

शीघ्र छप रही है

**न्याय सिद्धान्त मुक्तावली**

श्रीनृसिंह देव शास्त्री की प्रभावती व्याख्या सहित

खण्डेलवाल प्रेस, मानमन्दिर, वाराणसी